॥ श्रीः ॥

दण्डिकविविरचितं

# दशकुमारचरितम् ।

मनोरमाख्यव्याख्यासहितम् ।



गंगाविष्णु-श्रीकृष्णदासः

"लक्ष्मीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालयाध्यक्षः

कल्याण-मुंबईस्थः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

# THE DASAKUMARACHARITA

OF

# DANDIN

WITH

MANORAMA COMMENTARY.

BY

Vyakaranacharya Pt. Krishna Shastri

CORRECTED BY

Pt. HARIHAR SHASTRI

PUBLISHED BY

Gangavishnu Shrikrishnadas.

Proprietor, Laxmi Venkateshwar Steam Press,

KALYAN, BOMBAY.

1931.

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

श्रीः ।

दण्डिकविविरचितं

# दशकुमारचरितम् ।

काशीवास्तव्य-श्रीयुत-कण्वशाखीय-पण्डित-पौराणिकोपाख्य-
पाण्डुरङ्गाचार्यात्मजेन काशीस्थ-राजकीयप्रधानसंस्कृत-
पाठशालातो लब्धव्याकरणाचार्य-पोष्टाचार्योपाधिना
कृष्णशास्त्रिणा विरचितया मनोरमा-
ख्यया व्याख्यया सहितम् ।

पण्डितहरिहरशास्त्रिणा संशोधितम् ।

गङ्गाविष्णु-श्रीकृष्णदासः

"लक्ष्मीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालयाध्यक्षः

कल्याण-बम्बईस्थः ।

संवदब्दाः १९८८, शकाब्दाः १८५३.

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

# किञ्चित्प्रास्ताविकम् ॥

अस्मिञ्जगतीतले प्राचीनतर–कविवर–दण्डिनो महत्त्वं कीदृशं वरीवर्ति इति तद्विरचितकाव्यादर्शादिग्रन्थदर्शनेन वर्णयितुं शक्यते–उक्तं च–

**त्रयो वेदास्त्रयो लोका यथा वा पावकास्त्रयः ।**
**प्रबन्धा यस्य राजन्ते स दण्डी केन नेड्यते ॥**
**त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः ।**
**त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥**

प्राचीनतरत्वे कविवरत्वं च इत्थं वचनम्–

**जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् ।**
**कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥**

इत्यादिभिर्वाक्यैरस्य कवेरलङ्कारादिशास्त्रेषु नितरां निष्णातत्वं प्रतिभाशालित्वं च दरीदृश्यते एव अतो विशेषरूपेण परिचयदानस्यापेक्षा नास्ति ।

साम्प्रतं सर्वे जानन्त्येव " काणादं पाणिनीयं च सर्वशास्त्रोपकारकम् " इति वचनेन सम्यक्तया परिशीलितशास्त्रद्वयवानेव अनेकशास्त्रेष्वधिकारी भवतीति । अत एतच्छास्त्रद्वयज्ञानवता दुरवगाहमपि साहित्यशास्त्रमनायासेन अल्पीयसा अनेहसा करतलामलकवत्कर्तुं शक्यते । मन्दमतीनां व्युत्पित्सूनां कविवरदण्डिप्रणीत-दशकुमारचरितस्थ--ललितवाक्सुधामधुरमधुझरामास्वादयितुमसमर्थानां शीघ्रतया बोधार्थमस्योपरि चित्ताह्लादजनकव्याख्यानाभावेन सर्वेषामुपकारार्थमवश्यकरणीयत्वं चावेक्ष्य "श्रीवेङ्कटेश्वर " स्टीम्–मुद्रणयन्त्रालयाध्यक्ष श्रीक्षेमराजात्मज-रावसाहिबपदान्वित–श्रीरङ्गनाथ- श्रीनिवास-श्रेष्ठिमहोदयानां व्याख्यानिर्माणविषये आज्ञां चोररीकृत्य यथामति दशकुमारचरितस्य अन्वर्थां मनोरमाख्यां व्याख्यां व्यरीरचम् ।

इदं च तेभ्य एव " श्रीवेङ्कटेश्वर–" स्टीम्–मुद्रणयन्त्रालयाध्यक्षेभ्यः सर्वथा पुनर्मुद्रणाद्यधिकारपुरःसरं सादरं समर्पितवान् ।

अस्य दशकुमारचरितस्य पूर्वपीठिकायाम्, उत्तरपीठिकायाम् , कथोपसंहारे च यानि यानि क्लिष्टपदानि तेषां समास–विग्रहादिद्वारा विभागं प्रदर्श तत्त-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

त्पदानामर्थान् भावसंदर्भादींश्च निरूप्य तत्रतत्र कोश-व्याकरणसूत्राणि च सम्यक्तया प्रतिपादितानि । अतोऽस्य ग्रहणेनाध्ययनाध्यापनादिना सर्वे विद्वांसो मत्परिश्रमान् सफलीकुर्वन्तु इति प्रार्थये ।

संशोधनकाले सत्वरतया अवलोकनेन सीसकाक्षरयोजकदोषेण वा मनुष्यधर्मत्वाद्यदि दोषा गोचरीभूता भवेयुश्चेत्तर्हि–

" न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ "

इत्युक्तिं संस्मृत्य गुणैकपक्षपातिभिर्विद्वद्वरैरवश्यं क्षन्तव्याः इति च ।

मनोरमाख्या व्याख्येयमिषस्य विजयातिथौ ।
समाप्तिमगमद्भौमे वस्वष्टाङ्केन्दुवैक्रमे ॥

प्रधाननिवासस्थानम्–
काशी, मोह. घासीटोला,
घर नम्बर १०.

आश्विन, शुक्ल–विजयादशमी १०
मंगळवार, शके १८५३.
इसवी ता. २० अक्टोम्बर १९३१.

विद्वज्जनकृपाभिलाषी–
मुंबईस्थ–" श्रीवेङ्कटेश्वर " स्टीम्–मुद्रण–
यन्त्रालयस्य प्रधानशास्त्री
पौराणिको–पाख्यः कृष्णशर्मा.

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

श्रीः ।

# दशकुमारचरितम् ।

## पूर्वपीठिका ।



### प्रथमोच्छ्वासः ।

ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः
क्षोणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः ।
ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥

---

**मनोरमा ।**

यद्दयालवमात्रेण पुरुषार्थचतुष्टयम् । लभ्यते तमहं वन्दे वेङ्कटेशमहर्निशम् ॥ १ ॥
कुमारकाणां दशकस्य यत्पुरा चरित्रमाख्यायि कवीन्द्रदण्डिना ।
अध्येतृवर्गस्य सुखेन बुद्धये गीर्वाणटीका क्रियते **मनोरमा** ॥ २ ॥
नाहं रसज्ञो नच भाववेत्ता नैवाप्यलंकारविदल्पबुद्धिः ।
तथाऽप्यनुज्ञां शिरसा वहन्प्रभोः करोमि टीकां दयतां रमेशः ॥ ३ ॥

इह किल वसुधातले "कविर्दण्डी कविर्दण्डी" इत्यादिना मुक्तकण्ठमुद्घोषितो वागधिष्ठात्र्यैव, कुकवीन्प्रति यथार्थनामाऽपि अयथार्थनामा सदन्तेवासिनः प्रत्युत करुणानिलयो दण्डी कविकुलशिरोमणिः "काव्यं यशसेऽर्थकृते व्यवहारविदे–" इत्यादिना काव्यस्य निखिलकल्याणसाधनतां विचिन्त्य "**दशकुमारचरितम्**" नाम श्राव्यं काव्यं विरिरचयिषुः "मङ्गलादीनि–" इत्यादिवचनानुसारेण "आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्" इत्यभियुक्तोक्तलक्षणलक्षितं स्वेष्टदेवतासकाशादाशीःप्रार्थनारूपं मङ्गलं विधाय शिष्यबोधाय तद्ग्रन्थस्यादौ निबध्नाति—**ब्रह्माण्डेति** । आदौ त्रिगुरुकस्य मगणस्योपादानादभीष्टार्थसिद्धिः सूच्यते । "मो भूमिः श्रियमातनोति विपुलाम्" इत्यभिधानात् । ब्रह्माण्डमेव छत्रमातपत्रम् । 'हैमं छत्रं त्वातपत्रम्' इत्यमरः । तस्य दण्डो लगुडः । 'दण्डोऽस्त्री लगुडेऽपि स्यात्' इत्यमरः । शतधृतेः ब्रह्मणो भवनं वासगृहम् । 'भवनागारमन्दिरम्' इत्यमरः । तथाभूतं यदम्भोरुट् कमलं तस्य । "बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च" इत्यमरः । क्षोणी वसुंधरा । 'क्षोणी ज्या काश्यपी क्षितिः' इत्यमरः । सैव नौः तरणिः । 'स्त्रियां नौस्तरणिस्तारिः' इत्यमरः । तस्याः कूपदण्डो वाय्वानुकूल्याय वस्त्रबन्धनस्तम्भः 'कूपको गुणवृक्षकः' इत्यमरः । क्षरन्ती प्रस्नुवन्ती चासौ अमरसरित् स्वर्गङ्गा ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

अस्ति समस्तनगरीनिकषायमाणा शश्वदगण्यपण्यविस्तारितमणिगणादिवस्तुजातव्याख्यातरत्नाकरमाहात्म्या मगधदेशशेखरीभूता पुष्पपुरी नाम नगरी । तत्र वीरभटपटलोत्तरङ्गतुरङ्गकुञ्जरमकरभीषणसकलरिपुगणकटकजलनिधिमथनमन्दरायमाणसमुद्दण्डभुजदण्डः, पुरंदरपुराङ्गणवनविहरणपरायणगीर्वाणतरुणगणिका-

---

'नदी सरित्' इत्यमरः। सैव पट्टिका ध्वजवस्त्रखण्डः । तस्याः केतुदण्डो ध्वजदण्डः । ज्योतिषां नक्षत्रादीनां यच्चक्रं समुदायस्तदेव चक्रं रथाङ्गम् 'चक्रं रथाङ्गम्' इत्यमरः ' तस्याक्षदण्डोऽग्रकीलकम् 'पिण्डिकानाभिरक्षाग्रकीलके' इत्यमरः । त्रयाणां भुवनानां विष्टपानां समाहारस्त्रिभुवनम् । 'विष्टपं भुवनं जगत्' इत्यमरः । 'तद्धितार्थ' इति समासो द्विगुः । 'पात्राद्यन्तस्य न' इति निषेधान्न स्त्रीत्वम् । तस्य विजयः स्वायत्तीकरणं तद्द्योतकः स्तम्भदण्डः स्थूणादण्डः । 'स्थूणा स्तम्भेऽपि वेश्मनः' इत्यमरः । विबुधान्सुरान्द्विषन्ति नित्यम् इति ते 'सुप्यजातौ' इति णिनिः । तेषां दानवानां कालदण्डो यमकरतलवर्ती दण्डस्तद्वद्भयानक इति यावत् । 'कालो दण्डधरः श्राद्धदेवः' इत्यमरः । त्रयो विक्रमाः पादविन्यासा यस्य वामनरूपधारिणः स त्रिविक्रमस्तस्यायं त्रैविक्रमः । 'तस्येदम्' इत्यण् । एवंभूतः अङ्घ्रिश्चरणः'पदङ्घ्रिश्चरणोऽस्त्रियाम्'इत्यमरः । स दण्ड इव । ते तुभ्यं पठितृभ्यः इति यावत् । सामान्येनैकवचनम् । श्रेयः कल्याणं वितरतु ददातु । 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः । अत्र स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' । इति वृत्तरत्नाकरे ॥

चिकीर्षितां कथामुपक्रमते–**अस्तीति** । समस्तानां निखिलानां नगरीणां पुरीणां मध्ये निकषः सुवर्णघर्षणशिलेवाचरतीति निकषायमाणा । 'समस्तनिखिलाखिलानि' इत्यमरः । 'पूः स्त्री पुरीनगर्यौ वा' 'शाणस्तु निकषः कषः' इति च । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । शश्वत् पुनः पुनरगण्यान्यसंख्यानि, पण्यानि विक्रेयार्हाणि, विस्तारितानि आपणेषु इतस्ततः प्रसारितानि यानि मणिगणादिवस्तूनां पदार्थानां जातानि निकुरम्बाणि तैः व्याख्यातं प्रथितं रत्नाकराणां समुद्राणां माहात्म्यं महिमा यत्र सा । 'मुहुः पुनः पुनः शश्वत्' 'विक्रेयं पणितव्यं च पण्यम्' 'रत्नाकरो जलनिधिः' इति सर्वत्रामरः । मगधदेशस्य शेखरीभूता शिरोऽलंकारभूता । 'शिखास्वापीडशेखरौ' इत्यमरः । **तत्रेति** । तादृक्समृद्धिमत्यां नगर्याम् । वीरा बलवन्तो ये भटा योधास्तेषां पटलेन समूहेनोत्तरङ्ग उच्छ्रितोर्मिः तुरङ्गा वाहाः कुञ्जरा दन्तावलाः एतैरेव मकरैर्नक्रादिभिर्भीषणो भयानकः, एवंभूतो यः सकलरिपुगणानां समग्रवैरिव्रातानां कटकं वलयमेव जलनिधिः समुद्रस्तस्य मथने विलोडनकर्मणि मन्दराचल इवाचरन् समुद्दण्डो बलीयान् भुजदण्डो बाहुदण्डो यस्य । 'भटा योधाश्च योद्धारः' 'समूहे पटलं न ना' 'वीचिस्तरङ्गः' 'तुरंगाश्वतुरंगमाः' 'कुञ्जरो वारणः करी' 'दारुणं भीषणं भीष्मम्' 'रिपौ वैरि सपत्नारि–' 'समवायश्चयो गणः' 'कटकं वलयोऽस्त्रियाम्' 'भुजबाहू प्रवेष्टो दोः' इति सर्वत्रामरः । **पुरंदरेति**। पुरंदरस्य शुनासीरस्य पुराङ्गणे नगरीचत्वरे वर्तमानं यन्नन्दनाख्यं वनं तत्र विहरणे क्रीडायां

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

गणजेगीयमानयातिमानया शरदिन्दुकुन्दघनसारनीहारहारमृणालमरालसुरगजनीरक्षीरगिरिशाट्टहासकैलासकाशनीकाशमूर्त्या रचितदिगन्तरालपूर्त्या कीर्त्याऽभितः सुरभितः, स्वर्लोकशिखरोरुरुचिररत्नरत्नाकरवेलामेखलावलयितधरणीरमणीसौभाग्यभोगभाग्यवान्, अनवरतयागदक्षिणारक्षितशिष्टविशिष्टविद्यासंभारभासुरभूसुरनिकरः, विरचितारातिसंतापेन प्रतापेन सतततुलितवियन्मध्यहंसः,

---

परायणा आसक्ता या गीर्वाणानां देवानां तरुणगणिका युवत्यो वारस्त्रियस्तासां गणेन जेगीयमानाऽत्यन्तं गीयमाना तया । अतिमानयेयत्ताशून्यया । 'वृद्धश्रवाः शुनासीरः पुरुहूतः पुरंदरः' 'अङ्गणं चत्वराजिरे' 'गीर्वाणा दानवारयः 'वयस्यस्तरुणो युवा' 'वारस्त्री गणिका वेश्या' 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इति चामरः । 'धातोरेकाचो हलादेः–' इति यङन्तात्कर्मणि रूपं जेगीयमानयेति । **शरदिति** । इन्दुश्चन्द्रमाः । कुन्दं माध्यप्रसूनम् । घनसारः कर्पूरः । नीहारो हिमम् । हारो मुक्तावली । मृणालं बिसम् । मरालो हंसः । सुरगज ऐरावतः । नीरं जलम् । क्षीरं दुग्धम् । गिरिशस्य महादेवस्याट्टहासो महान्हासः । काशस्तृणविशेषः । एभिर्नीकाशा निभा मूर्तिस्तनूर्यस्यास्तया । 'इन्दुः कुमुदबान्धवः' 'कुन्दं माध्यम्' 'घनसारश्चन्द्रसंज्ञः' 'अवश्यायस्तु नीहारः' 'हारो मुक्तावली' 'मृणालं बिसम्' 'नीरक्षीराम्बु शम्बरम्' 'दुग्धं क्षीरं पयः समम्' 'गिरीशो गिरिशो मृडः' 'निभसंकाशनीकाश–' 'स्त्रियां मूर्तिस्तनुस्तनूः' इति सर्वत्रामरः । रचिता कृता दिगन्तरालानां हरिन्मध्यभागानां पूर्तिः संपूर्णता यया, तादृश्या कीर्त्या यशसाऽभितः सर्वत्र प्रदेशेषु सुरभितो मनोरमः । 'दिशस्तु ककुभः काष्ठा' 'अभ्यन्तरं त्वन्तरालम्' 'यशः कीर्त्तिः समज्ञा च' इत्यमरः । **स्वर्लोकेति** । स्वर्लोकस्य सुमेरोः शिखराणि शृङ्गाणीवोरूणि पृथूनि रुचिराणि मनोरमाणि च रत्नानि मणयो यस्मिंस्तादृशस्य रत्नाकरस्य पारावारस्य या वेला जलोन्नतिमर्यादा सैव मेखला रशना तया वलयिता परिवेष्टिता या धरणी पृथिव्येव रमणी सुन्दरी तस्याः सौभाग्यस्य भोगे सुखानुभवे भाग्यवान् भागधेयसंपन्नः । 'कूटोऽस्त्री शिखरं शृङ्गम्' 'वड्रोरु विपुलम्' 'सुन्दरं रुचिरं चारु' 'रत्नं मणिर्द्वयोः' 'अब्ध्यम्बुविकृतौ वेला' 'स्त्रीकट्यां मेखला काञ्ची' 'धरा धरित्री धरणिः' 'सुन्दरी रमणी रामा' 'भोगः सुखे स्त्र्यादिभृतौ' 'दैवं दिष्टं भागधेयं भाग्यम्' इति सर्वत्रामरः । **अनवरतेति** । अनवरतं निरन्तरमनुष्ठितेषु यागेष्वध्वरेषु दीयमानाभिर्दक्षिणाभिर्हेतुभी रक्षितः, शिष्टाः सदाचरणसंपन्नाः, विशिष्टविद्यानां संभारेण भासुरा भासमानाश्च ये भूसुरा ब्राह्मणास्तेषां निकरो व्यूहो येन सः । 'नित्यानवरताजस्रम्' 'यज्ञः सवोऽध्वरो यागः' 'द्विजात्यग्रजन्मभूदेववाडवाः' 'स्तोमौघनिकर–' इति चामरः । विरचितोऽरातीनां शत्रूणां संतापः पीडा येन तादृशेन प्रतापेन पराक्रमेण आतपेन च सततं निरन्तरं तुलितः स्वेनोपमिते वियतो व्योम्नो मध्यभागे यो हंसः सूर्यो येन । 'अभिघातिपरारातिं–' 'सतताना रताश्रान्त–' 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी' 'रविश्वेतच्छदौ

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

राजहंसो नाम घनदर्पकन्दर्पसौन्दर्यसोदर्यहृद्यनिरवद्यरूपो भूपो बभूव । तस्य वसुमती नाम सुमती लीलावतीकुलशेखरमणी रमणी बभूव। रोषणेक्षणेन निटिलेक्षणेन भस्मीकृतचेतने मकरकेतने तदा भयेनानवद्या वनितेति मत्वा, तस्य रोलम्बावली केशजालम्, प्रेमाकरो रजनीकरो विजितारविन्दं वदनम्, जयध्वजायमानो मीनो जायायुतोऽक्षियुगलम्, सकलसैनिकाङ्गवीरो मलयसमीरो निःश्वासः, पथिकहृद्दलनकरवालः प्रवालश्चाधरबिम्बम्, जयशङ्खो बन्धुरा लावण्यधरा

---

हंसौ ' इति सर्वत्रामरः। घनः सान्द्रो दर्पो गर्वो यस्यैवंभूतस्य कंदर्पस्य कामस्य यत्सौन्दर्यं लावण्यं तेन सोदर्यं समानं, हृद्यं सुन्दरं, निरवद्यं दोषरहितं च रूपमाकृतिर्यस्य सः। भूपो राजा। **तस्येति** । राजहंसस्य। लीलावतीनां विलासवतीनां कुलस्य शेखरमणिः शिरोरत्नभूता। 'ढ्रलोपे' इति दीर्घः। **रोषणेति** । कोपसंरक्तचक्षुषा। 'ईक्षणं चक्षुरक्षिणी ' इत्यमरः। निटिले भालदेशे ईक्षणं नयनं यस्य तेन। महेश्वरेणेत्यर्थः। ' गोधिर्ल्ललाटमलिकं निटिलं भालमर्धकम् ' इति पञ्चतत्त्वप्रकाशः। भस्मीकृतं चेतनं शरीरं यस्य तस्मिन्। मकरो यादोविशेषः केतनं ध्वजचिह्नं यस्य तस्मिन्। ' केतनं ध्वजमस्त्रियाम् ' इत्यमरः। तदा मदनदाहानन्तरम्। अनवद्याऽनिन्द्या। ' अवद्यपण्यवर्यागर्ह्य ' इत्यादिनिपातनात्साधुः। मत्वा मनसि विचार्य। तस्य मन्मथस्य। रोलम्बावली भ्रमरपङ्क्तिः। 'वीथ्यालिरावलिः पङ्क्तिः' इत्यमरः। केशानां शिरोरुहाणां जालं वृन्दः। ' कचः केशः शिरोरुहः' ' जालं समूह आनायगवाक्षक्षारकेष्वपि ' इति सर्वत्रामरः। प्रेम्ण आनन्दरसस्य आकरः खनिः। 'प्रेमा ना प्रियता हार्दम्' 'खनिः स्त्रियामाकरः स्यात् ' इत्यमरः। रजनीकरश्चन्द्रमाः। ' त्रियामा क्षणदा क्षपा। विभावरीतमस्विन्यौ रजनी ' 'नक्षत्रेशः क्षपाकरः ' इत्यमरः। विजितं पराभूतमरविन्दं पद्मं येन तादृशं वदनं मुखम्। ' वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ' ' वदनं तुण्डमाननं लपनं मुखम् ' इति चामरः। मीनो मत्स्यः। ' पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ' इत्यमरः। जायया पत्न्या युतः सहितः। ' भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी ' इत्यमरः। अक्षियुगलं चक्षुर्युग्मम्। ' ईक्षणं चक्षुरक्षिणी ' ' युग्मं तु युगलं युगम् ' इति चामरः। सकलानां सैनिकानां सेनासमवेतानां मध्येऽङ्गवीरः प्रधानभटः ' सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ' ' शूरो वीरश्च विक्रान्तः ' इति चामरः। मलयसमीरो मलयाचलवायुः। ' समीरमारुतमरुत् ' इत्यमरः। पथिकानामध्वगानां हृदो मनसो दलने विदारणे करवालः खड्गः। ' पान्थः पथिक इत्यपि ' 'स्वान्तं हृन्मानसं मनः' ' कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ' इति सर्वत्रामरः। प्रवालः पल्लवः। ' प्रवालोऽस्त्री किसलयं वीणादण्डे च विद्रुमे' इति मेदिनी। अधरो रदनच्छदो बिम्बं बिम्बनाम्ना प्रख्यातं फलमिवाधरबिम्बम्। ' ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ' इत्यमरः। जये सति वाद्यमानः शंखः कम्बुः। 'शंखः स्यात्कम्बुरस्त्रियाम् ' इत्यमरः। बन्धुरा उन्नतानता। ' बन्धुरं तून्नतानतम् ' इत्यमरः। लावण्यधरा अतिसौन्दर्यशालिनी। कन्धरा ग्रीवा। ' कण्ठो गलोऽथ ग्रीवायां शिरोधिः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कंधरा, पूर्णकुम्भौ चक्रवाकानुकारौ पयोधरौ, ज्यायमाने मार्दवासमाने बिसलते च बाहू, ईषत्फुल्ललीलावतंसकल्हारकोरको गङ्गावर्तसनाभिर्नाभिः, दूरीकृतयोगिमनोरथो जैत्ररथोऽतिघनं जघनम्, जयस्तम्भभूते सौन्दर्यभूते विघ्नितयतिजनारम्भे रम्भे चोरुयुगम्, आतपत्रसहस्रपत्रं पादद्वयम्, अस्त्रभूतानि प्रसूनानि तानीतराण्यङ्गानि च समभूवन्निव । विजितामरपुरे पुष्पपुरे निवसता सानन्तभोगलालिता वसुमती वसुमतीव मगधराजेन यथासुखमन्वभावि ।

---

कन्धरेत्यपि ' इत्यमरः । पूर्णकुम्भौ मङ्गलकलशौ । ' कुम्भो घटेभमूर्धांशौ ' इत्यमरः । चक्रवाकौ रथाङ्गावनुकुरुत इति । ' कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ' इत्यमरः । पयोधरौ कुचौ । ' स्त्रीस्तनाब्दौ पयोधरौ ' इत्यमरः । ज्या मौर्वीवाचरन्त्यौ ज्यायमाने । ' मौर्वी ज्या शिञ्जिनी गुणः ' इत्यमरः । मार्दवेन कोमलतयाऽसमाने असदृशे । ' कोमलं मृदुलं मृदु ' इत्यमरः । बिसे मृणाले लते वल्ल्याविव । ' मृणालं बिसम् ' ' वल्ली तु व्रततिर्लता ' इत्यमरः । बाहू भुजौ । ' भुजबाहू प्रवेष्टो दोः ' इत्यमरः । ईषत्फुल्लः किञ्चिद्विकासितो लीलावतंसः लीलया कर्णधार्यालंकारभूतश्च यः कल्हारस्य सौगन्धिकस्य कोरकः कलिका । ' फुल्लश्चैते विकसिते ' इत्यमरः । ' अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ' इति निपातनात्साधुः । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' इत्यमरः । 'सौगन्धिकं तु कल्हारम्' ' कलिका कोरकः पुमान् ' इति च । गङ्गाया जाह्नव्या आवर्तो जलभ्रमणं तेन सनाभिः 'ज्योतिर्जनपद' इति सादेशः । सदृशः । 'गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा' 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । नाभिस्तुन्दकूपः । दूरीकृता निष्कासिता योगिनां मनोरथा वाञ्छा येन तादृशः । ' इच्छा कांक्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः' इत्यमरः । जैत्रो जयनशीलो रथः स्यन्दनः । ' शताङ्गः स्यन्दनो रथः ' इत्यमरः । अतिघनमत्यन्तसान्द्रं जघनं कटिपुरोभागः । ' पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः । विघ्निताः प्रतिहता यतिजनानां संन्यासिनामारम्भाः कार्याणि याभ्यां तादृशे रम्भे कदल्यौ । ' कदली वारणबुसा रम्भा मोचांऽशुमत्फला ' इत्यमरः । ऊरुयुगं सक्थियुगलम् । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । आतपत्रं छत्ररूपं सहस्रपत्रं कमलम् । ' हैमं छत्रं त्वातपत्रम्' 'सहस्रपत्रं कमलं शतपत्रं कुशेशयम्' इति चामरः । पादद्वयं चरणद्वितयम् । 'पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ' इत्यमरः । अस्त्रभूतानि प्रहरणरूपाणि । प्रसूनानि कुसुमानि । तानि सुप्रसिद्धानि । इतराण्युक्तावयवातिरिक्तानि । अङ्गानि अवयवाः । ' आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ' ' प्रसूनं कुसुमं सुमम्' 'अङ्गं प्रतीकोऽवयवः' इति सर्वत्रामरः । **विजितेति ।** विजितं धिक्कृतममरपुरममरावत्याख्यं येन तादृशे । अनन्तैः अपरिमितैर्भोगैः सुखसाधनैर्लालिताऽऽनन्दिता । धरापक्षेऽनन्तस्यादिशेषस्य भोगैः फणैर्धृताऽखिलेति यावत् । ' अनन्तः केशवे शेषे पुमाननवधौ त्रिषु ' इति मेदिनी । ' भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ' इति नानार्थेऽमरः । वसुमती पृथिवी राज्ञो महिषी च । 'सर्वंसहा वसुमती वसुधा ' इत्यमरः । अन्वभावि अनुभूता । अनुपूर्वाद्भूधातोः सत्तार्थकात्कर्मणि लुङि चिणि रूपम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तस्य राज्ञः परमाविधेया धर्मपालपद्मोद्भवसितवर्मनामधेया धीरधिषणावधीरितविबुधाचार्यविचार्यकार्यसाहित्याः कुलामात्यास्त्रयोऽभूवन् । तेषां सितवर्मणः सुमतिसत्यवर्माणौ, धर्मपालस्य सुमन्त्रसुमित्रकामपालाः, पद्मोद्भवस्य सुश्रुतरत्नोद्भवाविति तनयाः समभूवन् । तेषु धर्मशीलः सत्यवर्मा संसारासारतां बुद्ध्वा तीर्थयात्राभिलाषी देशान्तरमगमत् । विटनटवारनारीपरायणो दुर्विनीतः कामपालो जनकाग्रजन्मनोः शासनमतिक्रम्य भुवं बभ्राम । रत्नोद्भवोऽपि वाणिज्यनिपुणतया पारावारतरणमकरोत् । इतरे मन्त्रिसूनवः पुरंदरपुरातिथिषु पितृषु यथापूर्वमन्वतिष्ठन् ।

ततः कदाचिन्नानाविधमहदायुधनैपुण्यरचितागण्यजन्यराजन्यमौलिपालिनि-

---

**तस्येति** । राजहंसस्येत्यर्थः । विधेया विनीताः । 'विधेयो विनयग्राही वचने स्थित आश्रवः' इत्यमरः । धीरयाऽतिगभीरया धिषणया मनीषयाऽवधीरितस्तिरस्कृतो यो विबुधो विशेषेण पण्डितो विबुधानां देवानां वाऽऽचार्यो गुरुर्बृहस्पतिरिति यावत् । तेनापि विचार्याणि विमृश्यानि सद्यः प्रत्युत्तरदानाशक्यानि यानि कार्याणि तेषु साहित्यं सहायता येषां ते । कुशाग्रमतय इति भावः । 'बुद्धिर्मनीषा धिषणा' 'सन्सुधीः कोविदो बुधः' 'त्रिदशा विबुधाः सुराः' 'मन्त्रव्याख्याकृदाचार्यः' इत्यमरः । कुलामात्याः कुलपरम्परागतमन्त्रिणः । 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः । अमा सह भवोऽमात्यः 'अमेहक्व–' इति वचनात्त्यप् । **तेषामिति** । धर्मपालपद्मोद्भवसितवर्मणां मध्ये । 'यतश्च निर्धारणम्' इति षष्ठी । तनयाः आत्मजाः । 'आत्मजस्तनयः सूनुः' इत्यमरः । संसारस्य प्रपञ्चस्यासारतां निःसारतां बुद्ध्वा अवगत्य । 'बुध अवगमने' इत्यतः क्त्वा । अन्यो देशो देशान्तरम् 'मयूरव्यंसकादयश्च' इति निपातनात्साधुः । 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः । अगमद् गतः । 'गम्लृ गतौ' इत्यतः कर्तरि लुङि 'पुषादि–' इत्यादिनाऽङि रूपम् । विटाः पीठमर्दाः । 'पीठकेलिः पीठमर्दो भविलश्छिदुरो विटः' इति त्रिकाण्डशेषः । नटाः सर्ववेशिनः । 'सर्ववेशी लयारम्भः स्यात्तालावचरो नटः' इति च । वारनार्यो गणिकाः । 'वारस्त्री गणिका वेश्या' इत्यमरः । तासु परायणो लम्पटः । दुर्विनीतो विनयशून्यः । बभ्राम चरति स्म । 'भ्रमु अनवस्थाने' । वाणिज्ये व्यापारे 'वाणिज्यं तु वणिज्या स्यात्' इत्यमरः । वणिक्शब्दात् 'गुणवचन–' इति ष्यञ् । तस्मिन्निपुणः प्रवीणः । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यमरः । पारावारतरणं समुद्रातिक्रमणम् । 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः' इत्यमरः । इतरे सुमतिसुमन्त्रसुमित्रसुश्रुताः । पुरंदरपुरातिथिषु संस्थितेष्विति भावः । यथापूर्वं पूर्वमनतिक्रम्य । अन्वतिष्ठन् 'ष्ठा गतिनिवृत्तौ' इत्यतोऽनुपूर्वाल्लङि रूपम् । 'पाघ्राध्मास्थाम्ना–' इत्यादिना तिष्ठादेशः ।

**कदाचिदिति** । नानाविधेष्वनेकप्रकारेषु महत्सु अतिकठिनेषु चायुधेषु प्रहरणेषु नैपुण्येन कृतहस्ततया रचितेषु विहितेषु अगण्यजन्येषु असंख्ययुद्धेषु राजन्यानां क्षत्रियाणां मौलि-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

हितनिशितसायको मगधनायको मालवेश्वरं प्रत्यग्रसङ्ग्रामघस्मरं समुत्कटमानसारं मानसारं प्रति सहेलं न्यक्कृतजलधिनिर्घोषाहङ्कारेण भेरीझाङ्कारेण हठिकाकर्णनाक्रान्तभयचण्डिमानं दिग्दन्तावलवलयं विघूर्णयन्निजभरनमन्मेदिनीभरेणायस्तभुजगराजमस्तकवलेन चतुरङ्गबलेन संयुतः सङ्ग्रामाभिलाषेण रोषेण महताविष्टो निर्ययौ । मालवनाथोऽप्यनेकानेकपयूथसनाथो विग्रहः सविग्रह इव

---

पालिषु मुकुटपङ्क्तिषु निहिता आरोपिता निशितास्तीक्ष्णाग्राः सायका बाणा येन सः । 'आयुधं तु प्रहरणं शस्त्रम्' इत्यमरः । 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' 'मूर्धाभिषिक्तो राजन्यः' इति च । 'किरीटे मौलिरक्लीबे चूडासंयतकेशयोः' इति रभसः । 'पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु' इत्यमरः । 'निशितक्ष्णुतशातानि तेजिते' 'शरे खङ्गे च सायकः' इति च । प्रत्यग्राणामभिनवानां संग्रामाणामाहवानां घस्मरो भक्षकः । 'प्रत्यग्रोऽभिनवो नव्यः' 'अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः' 'भक्षको घस्मरोऽद्मरः' इति सर्वत्रामरः । 'सृघस्यदः क्मरच्' इति क्मरच् । समुत्कटोऽतिनिबिडो मानो गर्व एव सारो यस्य तम् । 'गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः' इत्यमरः । मानसारेति राज्ञो नामधेयम् । सहेलं सलीलम् । 'हेला लीलेत्यमी हावाः' इत्यमरः । न्यक्कृतो दूरीकृतो जलधेः निर्घोषाहङ्कारो ध्वन्याडम्बरो येन तादृशेन । 'स्वाननिर्घोषनिर्ह्रादनादनिस्वानानिस्वनाः' इत्यमरः । भेरीणां दुन्दुभीनां झांकारेण शब्दविशेषेण । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । हठिकाकर्णनेन बलात् ध्वनिश्रवणेनाक्रान्तः प्राप्तः भयचण्डिमा भीत्याधिक्यं यं तादृशं दिग्दन्तावलानां दिग्गजानां वलयं वृन्दम् । 'दन्ती दन्तावलो हस्ती' इत्यमरः । विघूर्णयन्कम्पयन् । निजस्यात्मनः सैन्यस्य भरेण नमन्ती प्रह्वीभवन्ती या मेदिनी मही तस्या भरेण गौरवेण । 'क्ष्माऽवनिर्मेदिनी मही' इत्यमरः । आयस्तं परिश्रान्तं भुजगराजस्य शेषस्य मस्तकानां मूर्ध्नां बलं पराक्रमो येन तथाभूतेन । आङ्पूर्वात् 'यसु प्रयत्ने' इत्यतो रूपमायस्तमिति । 'शेषोऽनन्तो वासुकिस्तु सर्पराजः' इति 'मूर्धा ना मस्तकोऽस्त्रियाम्' इति चामरः । 'द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च । शक्तिः पराक्रमः प्राणः' इति च । चतुरङ्गं 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्' इत्युक्तैरङ्गैरखिलैर्विशिष्टं यद्बलं सैन्यं तेन । 'वरूथिनी बलं सैन्यम्' इत्यमरः । संग्रामाभिलाषेण युद्धकामनया । 'संग्रामाभ्यागमाहवाः' 'कामोऽभिलाषस्तर्षश्च' इत्यमरः । रोषेण क्रोधेन । 'कोपः क्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः । आविष्टो व्याप्तः । निर्ययौ निर्गतवान् । 'या प्रापणे' इत्यतो लिटि रूपम् । **मालवेति** । मानसारनामा । अनेकैरसंख्यैरनेकपानां हस्तिनां यूथैर्वृन्दैः सनाथो युक्तः । 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः' 'सजातीयैः कुलं यूथम्' इत्युभयत्राप्यमरः । विग्रहः संग्रामः । 'अथ विग्रहः । संग्रामे प्रविभागे च देहविस्तारयोरपि' इत्यमरः । सविग्रहो मूर्तिमान् । 'शरीरं वर्ष्म विग्रहः' इति च । साग्रहः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

साग्रहोऽभिमुखीभूय भूयो निर्जगाम । तयोरथ रथतुरगखुरक्षुण्णक्षोणीसमुद्भूते करिघटाकटस्रवन्मदधाराधौतमूले नव्यवल्लभवरणागतदिव्यकन्याजनजवनिकापटमण्डप इव वियत्तलव्याकुले धूलीपटले दिविषदध्वनि धिक्कृतान्यध्वनिपटहध्वानबधिरिताशेषदिगन्तरालं शस्त्राशस्त्रि हस्ताहस्ति परस्पराभिहतसैन्यं जन्यमजनि । तत्र मगधराजः प्रक्षीणसकलसैन्यमण्डलं मालवराजं जीवग्राहमभिगृह्य कृपालुतया पुनरपि स्वराज्ये प्रतिष्ठापयामास । ततः स रत्नाकरमेखलामिलामनन्यशासनां शासदनपत्यतया नारायणं सकललोकैककारणं निरन्तर-

---

उत्कण्ठाविशेषेण सह वर्तमानः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहौ 'वोपसर्जनस्य' इति सादेशः । अभिमुखीभूय संमुखो भूत्वा । **तयोरिति** । राजहंसमानसारयोः । रथानां शताङ्गानां तुरगाणां घोटकानां च समाहारो रथतुरगम् । सेनाङ्गत्वादेकवद्भावः । 'शताङ्गः स्यन्दनो रथः' 'घोटके वीतितुरगतुरंगाश्वतुरंगमाः' इति चामरः । तस्य खुरैः शफैः क्षुण्णा नितरामामर्दिता या क्षोणी मही ततः समुद्भूते सत्युत्पन्ने । 'शफं क्लीवे खुरः पुमान्' इत्यमरः । करिघटानां हस्तिव्रातानां कटेभ्यो गण्डदेशेभ्यः स्रवन्त्यः प्रवहन्त्यो या मदधारा मदजलप्रवाहास्ताभिर्धौतमार्द्रीकृतं मूलमधोभागो यस्य तस्मिन् । 'कुञ्जरो वारणः करी' 'करिणां घटना घटा' 'गण्डः कटो मदो दानम्' इत्यमरः । नव्यानां नूतनानां वल्लभानां प्रियाणां वरणाय स्वीकाराय आगतो यो दिव्यकन्याजनो देवाङ्गनावृन्दस्तस्य जवनिकापटैस्तिरस्करिणीवस्त्रैः कृतो यो मण्डपस्तत्तुल्ये इत्यर्थः । 'प्रत्यग्रोऽभिनवो नव्यः' 'दयितं वल्लभं प्रियम्' 'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा' इति सर्वत्रामरः । 'अथ मण्डपोऽस्त्री जनाश्रयः' इति च । वियत्तलव्याकुले आकाशगामिनि । धूलीपटले रजोवृन्दे । 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः' इत्यमरः । 'समूह पटलं न ना' इति च । दिवि सीदन्तीति दिविषदो देवास्तेषामध्वनि पथि । 'आदितेया दिविषदः' इत्यमरः । 'सत्सूद्विष–' इत्यादिना क्विप् । 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः' इति चामरः । धिक्कृतस्तुच्छीकृतोऽन्येषां हस्त्यादीनां ध्वनिः शब्दो येन तथाभूतेन पटहध्वानेन ढक्कानिनादेन बधिरितं श्रवणसामर्थ्यहीनमशेषदिगन्तरालं निखिलदिङ्मध्यभागो यस्मिन्कर्मणीति युद्धक्रियाविशेषणम् । 'स्याद्यशः पटहो ढक्का' 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्युभयत्रामरः । शस्त्रैः शस्त्रैः हस्तैर्हस्तैश्च प्रहृत्य प्रवृत्तमिदं युद्धं शस्त्राशस्त्रि हस्ताहस्ति च । 'तत्र तेनेदमिति सरूपे' इति समासे 'इच् कर्मव्यतिहारे' इतीचि 'अन्येषामपि दृश्यते' इति दीर्घे च सिद्धं रूपम् । परस्परमन्योन्यमभिहताः सैन्याः सैनिका यस्मिंस्तत् जन्यं युद्धम् । 'युद्धमायोधनं जन्यम्' इत्यमरः । अजनि जातम् 'दीपजनबुध–' इति कर्तरि वा चिण् । तत्र युद्धे । प्रक्षीणं सकलसैन्यमण्डलं यस्य तम् । जीवन्तं गृहीत्वेति जीवग्राहम् । 'समूलकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल् । **तत इति** । इलां पृथ्वीम् । 'गौरिला कुम्भिनी क्षमा' इत्यमरः । न विद्यतेऽन्यस्य शासनं यस्यास्तादृशीमखण्डामिति यावत् । शासत् शासनं कुर्वन् । 'नाभ्यस्ताच्छतुः' इति निषेधान्नुम् न । न विद्यतेऽपत्यं सन्ततिः यस्य

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मर्चयामास । अथ कदाचित्तदग्रमहिषी 'देवि, देवेन कल्पवल्लीफलमाप्नुहि' इति प्रभातसमये सुस्वप्नमवलोकितवती । सा तदा दयितमनोरथपुष्पभूतं गर्भमधत्त । राजापि सम्पन्न्यक्कृताखण्डलः सुहृन्नृपमण्डलं समाहूय निजसंपन्मनोरथानुरूपं देव्याः सीमन्तोत्सवं व्यधत्त ।

एकदा हितैः सुहृन्मन्त्रिपुरोहितैः सभायां सिंहासनासीनो गुणैरहीनो ललाटतटन्यस्ताञ्जलिना द्वारपालेन व्यज्ञापि—'देव ! देवसंदर्शनलालसमानसः कोऽपि देवेन विरच्यार्चनार्हो यतिर्द्वारदेशमध्यास्ते' इति । तदनुज्ञातेन तेन स संयमी नृपसमीपमनायि । भूपतिरायान्तं तं विलोक्य सम्यग्ज्ञाततदीयगूढचार-

---

सोऽनपत्यस्तादृशतया । सकलानां लोकानां भुवनानामेककारणं प्रधानकारणभूतम् । निरन्तरं सततम् । अचयामास पूजितवान् । **अथेति** । मानसारविजयानन्तरम् । कदाचिदेकस्यां रात्रौ । तदग्रमहिषी तस्य राजहंसस्य प्रधानपत्नी । 'कृताभिषेका महिषी भोगिन्योऽन्या नृपास्त्रियः' इत्यमरः । कल्पः संकल्पो मनोरथ इति भावः । स वल्लीव तस्याः फलं मनोरथसिद्धिमिति यावत् । प्रभातसमये उषःकाले । 'उषःप्रत्युषसी अपि । प्रभातं च' इत्यमरः । सुस्वप्नं शोभनं स्वापकालिकं ज्ञानम् । 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः । सा वसुमती । दयितस्य प्रियस्य मनोरथस्य वाञ्छायाः पुष्पभूतं फलद्योतकम् इत्यर्थः । 'दयितं वल्लभं प्रियम्' 'वाञ्छा लिप्सा मनोरथः' इति चामरः । संपदा समृद्ध्या न्यक्कृताखण्डलस्तिरस्कृतेन्द्रः । 'अथ संपदि । संपत्तिः श्रीश्च लक्ष्मीश्च' 'आखण्डलः सहस्राक्षः' इत्यमरः । सुहृदां मित्राणां नृपाणां महीक्षितां च मण्डलं चक्रवालम् । 'अथ मित्रं सखा सुहृत्' 'नृपभूपमहीक्षितः' 'चक्रवालं तु मण्डलम्' इति सर्वत्रामरः । निजा आत्मीया या संपत् लक्ष्मीः मनोरथश्च तयोरनुरूपं सदृशम् । सीमन्तोत्सवं सीमन्तोन्नयनसंस्कारं व्यधत्त अकरोत् ।

**एकदेति** । हितैराप्तैः । सुहृन्मन्त्रिपुरोहितैर्मित्रसचिवपुरोधोभिः 'पुरोधास्तु पुरोहितः' इत्यमरः । सभायां परिषदि । 'समज्या परिषद्गोष्ठीसभासमितिसंसदः' । इत्यमरः । ललाटतटे भालदेशे न्यस्ताञ्जलिर्निवेशितकरयुगलः तेन । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । व्यज्ञापि सविनयमुक्तः । 'ज्ञा अवबोधने' इत्यतो हेतुमण्णिचि कर्मणि लुङ् । लालसमानसः उत्कण्ठितमनाः । 'लालसे प्रार्थनौत्सुक्ये' इत्यमरः । अर्शआदित्वादच् । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । विरच्यार्चनार्होऽनुष्ठेयपूजायोग्यः । यतिः स्ववशेन्द्रियः । 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः । द्वारदेशं प्रतीहारवेदिकाम् । 'स्त्रीद्वार्द्वारं प्रतीहारः' इत्यमरः । 'अधिशीङ्स्थासां कर्म' इति कर्मता । अध्यास्तेऽधितिष्ठति । तदनुज्ञातेन राज्ञाऽऽज्ञप्तेन । तेन द्वारपालेन । संयमी यतिः । नृपसमीपं राजान्तिकम् । 'समीपे निकटासन्नसंनिकृष्टसनीडवत्' इत्यमरः । आनायि आनीतः । 'णीञ् प्रापणे' इत्यतो द्विकर्मकात् प्रधानकर्मणि लुङ् । 'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्' इति वचनात् । सम्यग्ज्ञातः सुष्ठु निर्धारितः तदीयगूढचारभावः तत्संबन्धिगुप्तगूढपुरुषत्वं येन तादृशः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

भावो निखिलमनुचरनिकरं विसृज्य मन्त्रिजनसमेतः प्रणतमेनं मन्दहासमभाषत–' ननु तापस ! देशं सापदेशं भ्रमन्भवांस्तत्र तत्र भवदभिज्ञातं कथयतु ' इति। तनाभाषि भूभ्रमणबलिना प्राञ्जलिना–' देव, शिरसि देवस्याज्ञामादायायैनं निर्दोषं वेषं स्वीकृत्य मालवेन्द्रनगरं प्राविश्य तत्र गूढतरं वर्तमानस्तस्य राज्ञः समस्तमुदन्तजातं विदित्वा प्रत्यागमम्। मानी मानसारः स्वसैनिकायुष्मत्तान्तराये संपराये भवतः पराजयमनुभूय वैलक्ष्यलक्ष्यहृदयो वीतदयो महाकालनिवासिनं कालीविलासिनमनश्वरं महेश्वरं समाराध्य तपःप्रभावसंतुष्टादस्मादेकवीरारातिघ्नीं भयदां गदां लब्ध्वात्मानमप्रतिभटं मन्यमानो महाभिमानो भवन्तमभियोक्तुमुद्युङ्क्ते। ततः परं देव एव प्रमाणम् ' इति। तदालोच्य निश्चिततत्कृत्यैरमात्यै राजा विज्ञापितोऽभूत्–' देव, निरुपायेन देवसहायेन

---

सन्। तदीयेत्यत्र ' त्यदादीनि च ' इति वृद्धसंज्ञायां ' वृद्धाच्छः ' इति छः। ' चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ ' इत्यमरः। अनुचरनिकरं सहायसमुदायम्। ' अनुप्लवः सहायश्चानुचरोऽभिचरः समाः' इत्यमरः। विसृज्य विहाय। मन्त्रिजनैरमात्यवर्गैः समेतो युक्तः। मन्दो हासो हास्यं यस्मिन्कर्मणि इति क्रियाविशेषणमिदम्। **नन्विति**। आमन्त्रण इदम्। ' प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ' इत्यमरः। सापदेशं सव्याजम्। ' व्याजोऽपदेशो लक्ष्यं च ' इत्यमरः। कथयतु सविस्तरं ब्रवीतु। भूभ्रमणे देशसंचारे बलिना समर्थेन। प्रबद्धोऽञ्जलिर्येन कृतप्रणामेनेति यावत्। देव राजन्। ' राजा भट्टारको देवः ' इत्यमरः। शिरसि आदाय मूर्ध्ना धारयित्वा। निर्दोषं दोषशून्यम्। वेषं नेपथ्यम्। 'आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्' इत्यमरः। प्रविश्य गत्वा। तत्र मालवदेशे। गूढतरमत्यन्तप्रच्छन्नं यथा तथा। उदन्तजातं वृत्तान्तजातम्। ' वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात् ' इत्यमरः। विदित्वाऽवबुध्य। प्रत्यागमं प्रतिनिवृत्तः। ' गम्लृ गतौ ' इत्यतो लुङि ' पुषादि– ' इत्यङ्। **मानीति**। अहंकारवानित्यर्थः। ' गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः ' इत्यमरः। स्वस्यात्मनः सैनिकानां योद्धृणामायुष्मत्तायाश्चिरजीवित्वस्यान्तराये विघ्नभूते संपराये युद्धे प्रथमोत्पन्ने। ' भटा योधाश्च योद्धारः सेनारक्षास्तु सैनिकाः ' ' विघ्नोऽन्तरायः प्रत्यूहः ' इत्यमरः। ' मृधमास्कन्दनं संख्यं समीकं सांपरायिकम् ' इति च। पराभवं पराजयम्। अनुभूय प्राप्य। वैलक्ष्यलक्ष्यहृदयः दुःखाभिभूतचेताः। वीतदयो भवद्विषये निर्घृणः सन्। ' कृपा दयानुकम्पा स्यात् ' इत्यमरः। कालीविलासिनं गौरीपतिम्। अनश्वरं नाशरहितम्। समाराध्य उपास्य। एकमेव वीरं शूरमरातिं सपत्नं हन्तीति एकवीरारातिघ्नी तादृशीम्। ' अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ' इत्यमरः। अप्रतिभटं प्रतियोधरहितम् अभियोक्तुं विग्रहीतुम्। उद्युङ्क्ते प्रयत्नं करोति। **देव एव प्रमाणमिति**। इतिकर्तव्यतानिश्चेतेत्यर्थः। तत् मालवेश्वरस्य संग्रामाभिमुखत्वम्। निश्चिततत्कृत्यैः निर्धारितसमयोचितकार्यैः। विज्ञापितो बोधितः। निरुपायेन देवसहायेन साधारणनृपात्मकसहायं विहाय ईश्वरस्यैव बलेनेत्यर्थः।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

योद्धुमरातिरायाति । तस्मादस्माकं युद्धं सांप्रतमसांप्रतम् । सहसा दुर्गसंश्रयः कार्यः ' इति तैर्बहुधा विज्ञापितोऽप्यखर्वेण गर्वेण विराजमानो राजा तद्वाक्यमकृत्यमित्यनादृत्य प्रतियोद्धुमना बभूव । शितिकण्ठदत्तशक्तिसारो मानसारो योद्धुमनसामग्रीभूय सामग्रीसमेतोऽक्लेशं मगधदेशं प्राविवेश । तदा तदाकर्ण्य मन्त्रिणो भूमहेन्द्रं मगधेन्द्रं कथंचिदनुनीय रिपुभिरसाध्ये विन्ध्याटवीमध्येऽवरोधान्मूलबलरक्षितान्निवेशयामासुः । राजहंसस्तु प्रशस्तवीतदैन्यसैन्यसमेतस्तीव्रगत्या निर्गत्याधिकरुषं द्विषं रुरोध । परस्परबद्धवैरयोरेतयोः शूरयोस्तदा तदालोकनकुतूहलागतगगनचराश्चर्यकारणे रणे वर्तमाने जयाकांक्षी मालवदेशरक्षी विविधायुधस्थैर्यचर्याञ्चितसमरतुलितामरेश्वरस्य मगधेश्वरस्य तस्योपरि पुरा पुरारातिदत्तां गदां प्राहिणोत् । निशितशरनिकरशकलीकृतापि सा पशुपति-

---

योद्धुं युद्धाय । अरातिः शत्रुः । सांप्रतमिदानीं शत्रौ बलवति इत्यर्थः । " एतर्हि संप्रतीदानीमधुना सांप्रतं तथा' इत्यमरः । असांप्रतमयोग्यम् । ' युक्ते द्वे सांप्रतं स्थाने ' इत्यमरः । सहसा शीघ्रमेव । अखर्वेण विपुलेन । 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । अकृत्यं कर्तुमयोग्यम् । इति। विचार्येति शेषः । अनादृत्य तिरस्कृत्य । प्रतियोद्धुं प्रतिस्पर्धितुं मनो यस्य तादृशः । ' स्वान्तं हृन्मानसं मनः ' इत्यमरः । ' तुं काममनसोरपि ' इति वचनान्मकारलोपः । शितिकण्ठेन नीलकण्ठेन दत्ता या शक्तिरायुधविशेषः सैव सारो बलं यस्य तादृशः । 'उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ' ' सारो बले स्थिरांशे च ' इत्यमरः । अग्रीभूय अग्रेसरो भूत्वा । अक्लेशमनायासेन । प्रविवेश प्रविष्टः । 'विश प्रवेशने' । **तदेति** । तस्मिन्समये । आकर्ण्य श्रुत्वा कथंचिदनुनीय महता यत्नेन सान्त्वयित्वा रिपुभिः सपत्नैः । ' रिपौ वैरिसपत्नारि- ' इत्यमरः । असाध्ये दुष्प्रवेशे अवरोधानन्तःपुरवासिनीर्योषितः । 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च ' इत्यमरः । मूलबले रक्षितान्प्रधानसैनिकैः पालितान् । निवेशयामासुः स्थापयामासुः । वीतं दैन्यं येषां तैर्महोत्साहैरिति यावत् । तीव्रगत्या शीघ्रगमनेन । अधिका रुट् कोपो यस्य तम् । 'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ' इत्यमरः । द्विषं शत्रुम् । ' द्विड्विपक्षाहितामित्र- ' इत्यमरः । रुरोध अपावृतवान् । रुधिर् आवरणे' परस्परमन्योन्यं बद्धवैरयोः धृतविरोधयोः । 'वैरं विरोधो विद्वेषः' इत्यमरः । **तदेति** । तस्य संग्रामस्यालोकनेऽवेक्षणे कुतूहलेन कौतुकेनागतानां गगनचराणां दिविषदामाश्चर्यस्य विस्मयस्य कारणे हेतुभूते ' कौतूहलं कौतुकं स्यात्कुतुकं च कुतूहलम् ' इत्यमरः । रणे संग्रामे । ' अस्त्रियां समरानीकरणाः कलहविग्रहौ ' इत्यपि । जयमाकांक्षतेऽभिलषतीति जयाकांक्षी । विविधानां नानाप्रकाराणामायुधानां प्रहरणानां स्थैर्येण सह या चर्याऽभ्यसनं तयाऽञ्चितं पूजितं श्लाघार्हं यत्समरं युद्धं तस्मिंस्तुलित उपमितः अमरेश्वरो वृत्रहा येन तादृशस्य । मगधेश्वरस्य राजहंसस्य । प्राहिणोत् प्रक्षिप्तवान् । ' हि गतौ वृद्धौ च ' इत्यतो लङ् । निशिताः तीक्ष्णाः । शकलीकृताऽपि

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

शासनस्यावन्ध्यतया सूतं निहत्य रथस्थं राजानं मूर्च्छितमकार्षीत् । ततो वीतप्रग्रहा अक्षतविग्रहा वाहा रथमादाय दैवगत्यान्तःपुरशरण्यं महारण्यं प्राविशन् । मालवनाथो जयलक्ष्मीसनाथो मगधराज्यं प्राज्यं समाक्रम्य पुष्पपुरमध्यतिष्ठत् ।

तत्र हेतिततिहतिश्रान्ता अमात्या दैवगत्यानुत्क्रान्तजीविता निशान्तवातलब्धसंज्ञाः कथंचिदाश्वस्य राजानं समन्तादन्विष्यानवलोकितवन्तो दैन्यवन्तो देवीमवापुः । वसुमती तु तेभ्यो निखिलसैन्यक्षतिं राज्ञोऽदृश्यत्वं चाकर्ण्योद्विग्ना शोकसागरमग्ना रमणानुगमने मतिं व्यधत्त । 'कल्याणि, भूरमणमरणमानिश्चितम् । किंच दैवज्ञकथितो मथितोद्धताराति: सार्वभौमोऽभिरामो भविता सुकुमारः कुमारस्त्वदुदरे वसति । तस्मादद्य तव मरणमनुचितम्' इति भूषितभा-

---

खण्डिताऽपि । अवन्ध्यतयाऽवश्यंभाविफलकतया । 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः । सूतं सारथिम् । 'सूतः क्षत्ता च सारथिः' इत्यमरः । निहत्य विनाश्य । मूर्च्छितं मोहमुपगतम् । वीतो रथान्मुक्तः प्रग्रहो रश्मिर्येषां ते । 'तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च' इत्यमरः । अक्षतोऽपीडितो विग्रहः शरीरं येषां तादृशाः। 'शरीरं वर्ष्म विग्रहः' इति च । वाहा अश्वाः 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः । अन्तःपुरस्यावरोधस्य शरणे रक्षणे साधु 'तत्र साधुः' इति यत् । 'शरणं गृहरक्षित्रोः' इत्यमरः । जयलक्ष्म्या सनाथो युक्तः । प्राज्यं संपूर्णम् 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः । समाक्रम्य स्वायत्तीकृत्य । पुष्पपुरमित्यत्र 'अधिशीङ्स्थासां कर्म' इति कर्मता । अध्यतिष्ठत् अध्यास्ते स्म ।

**तत्रेति** । द्वितीये संग्रामे । हेतिततिभिः शस्त्रसंततिभिर्या हतिर्हननं प्रहारस्तेन श्रान्ताः खिन्नाः । 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः' इत्यमरः । अमात्याः सचिवाः । दैवगत्या प्रालब्धवशात् । अनुत्क्रान्तजीविता अनिर्गतप्राणाः । निशान्तवातेन प्रातःकालिकपवनेन लब्धसंज्ञाः प्राप्तचैतन्याः । 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इत्यमरः । 'संज्ञा स्याच्चेतना नाम' इति च । कथंचिन्महता कष्टेन आश्वस्य समाहितचित्ता भूत्वा । समन्तात् सर्वतः । अन्विष्य गवेषयित्वा । दैन्यवन्तो दुःखिताः सन्तः । तेभ्यो मन्त्रिभ्यः । निखिलसैन्यक्षतिं संपूर्णसेनाविनाशम् । उद्विग्ना विषण्णा । शोकसमुद्रे मन्युपारावारे मग्ना निमज्जन्ती । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । रमणानुगमने पत्या सह मरणे । मतिं व्यधत्त निश्चयं कृतवती । भूरमणस्य भूपतेः मरणं निधनमनिश्चितं न निर्धारितम् । दैवं मनुष्याणां भागधेयं जानन्तीति दैवज्ञा ज्यौतिषिकास्तैः कथितः प्रोक्तः । 'सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि' इत्यमरः । मथिताः संमर्दिता उद्धतारातय उन्मत्तशत्रवो येन तादृशः, सर्वभूमेरीश्वरः सार्वभौमः । 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण् प्रत्ययः । अभिरामः सुन्दरः । भविता कालान्तरे उत्पत्स्यमानः । तृजन्तमिदम् । सुकुमारोऽत्यन्तकोमलः । 'सुकुमारं तु कोमलं मृदुलं मृदु' इत्यमरः । तवोदरे कुक्षौ । 'पिचण्डकुक्षी जठरोदरं तुन्दम्'

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

षितैरमात्यपुरोहितैरनुनीयमानया तया क्षणं क्षणहीनया तूष्णीमस्थायि । अथार्धरात्रे निद्रानिर्लीननेत्रे परिजने विजने शोकपारावारमपारमुत्तर्तुमशक्नुवती सेनानिवेशदेशं निःशब्दलेशं शनैरतिक्रम्य यस्मिन्रथस्य संसक्ततया तदानयनपलायनश्रान्ता गन्तुमक्षमाः क्षमापतिरथ्याः पथ्याकुलाः पूर्वमतिष्ठंस्तस्य निकटवटतरोः शाखायां मृतिरेखायामिव क्वचिदुत्तरीयार्धेन बन्धनं मृतिसाधनं विरचय्य मार्तुकामाभिरामा वाङ्माधुरीविरसीकृतकलकण्ठा साश्रुकण्ठा व्यलपत्—'लावण्योपमितपुष्पसायक, भूनायक, भवानेव भाविन्यापि जन्मनि वल्लभो भवतु' इति । तदाकर्ण्य नीहारकरकिरणनिकरसंपर्कलब्धावबोधो माग-

---

इत्यमरः । 'प्रत्ययोत्तरपदयोश्च' इति त्वादेशः । अनुचितमयुक्तम् । भूषितं सचमत्कारं भाषितं वचनं येषां तैः । अनुनीयमानयाऽऽश्वासं प्राप्यमाणया । क्षणं स्वल्पकालमपि । 'कालाध्वनोः—' इति द्वितीया । क्षणहीनया सन्तोषरहितया । 'क्षण उद्धर्षो मह उद्धव उत्सवः' इत्यमरः । तूष्णीमस्थायि मौनमवलम्ब्य स्थितम् । 'मौने तु तूष्णीं तूष्णीकाम्' इत्यमरः । 'ष्ठा गतिनिवृत्तौ' इत्यस्माद्भावे लुङि रूपम् । **अथेति** । अर्धं रात्रेरर्धरात्रः तस्मिन्निशीथसमये । 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः । 'अर्धं नपुंसकम्' इति समासे 'अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इति समासान्तेऽचि 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् । निद्रया निर्लीने निमीलिते नेत्रे चक्षुषी यस्य तस्मिन् । परिजनेऽभिचरवर्गे । विजने जनसंचाररहिते एकान्तप्रदेशे इति यावत् । 'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः' इत्यमरः । शोकपारावारं मन्युसागरम् । अपारं निःसीममुत्तर्तुमुल्लङ्घयितुम् । अशक्नुवती असमर्था । सेनाया निवेशदेशं शिबिरप्रदेशम् । 'निवेशः शिबिरम्' इत्यमरः । निर्गतः शब्दस्य लेशोऽपि यस्मात्तादृशम् । शनैर्मन्दम् । संसक्ततया संलग्नतया । क्षमापते राज्ञो रथ्या वाहाः । रथं वहन्ति 'तद्वहति रथयुगप्रासङ्गम्' इति यत् प्रत्ययः। पथि मार्गे आकुलाः संत्रस्ताः । निकटवटतरोः पार्श्ववर्तिन्यग्रोधवृक्षस्य । शाखायां विटपे । उत्तरीयार्धेन संव्यानप्रान्तभागेन । 'संव्यानमुत्तरीयं च' इत्यमरः । विरचय्य कृत्वा । 'ल्यपि लघुपूर्वात्, इति णेरयादेशः । मर्तुं कामोऽभिलाषो यस्याः 'तुं काममनसोरपि' इति मकारलोपः । अभिरामा सुकुमाराङ्गी । वाङ्माधुर्या वाणीमाधुर्येण विरसीकृतोऽधरितः कलकण्ठः कोकिलः यया सा । कलोऽव्यक्तमधुरः कण्ठः कण्ठरवः यस्य स कलकण्ठः । अश्रुणा बाष्पेण सहितः कण्ठो यस्याः सा । 'रोदनं चास्रमश्रु च' इत्यमरः । 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्'इति ङीषो वैकल्पिकत्वादत्र न । व्यलपत् रोदनं कृतवती । **लावण्येति** । लावण्येन सौन्दर्येणोपमितस्तुलितः पुष्पसायको मकरध्वजो येन तादृशः 'पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः' इत्यमरः । भाविन्यागामिनि । वल्लभः प्रियः । भवतु प्रार्थनायां लोट् । आकर्ण्य निशम्य । नीहारकरस्य हिमांशोः किरणनिकरस्य मयूखसमुदायस्य संपर्केण संयोगेन लब्धावबोधः प्राप्तचैतन्यः । 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

धोऽगाधरुधिरविक्षरणनष्टचेष्टो देवीवाक्यमेव निश्चिन्वानस्तन्वानः प्रियवचनानि शनैस्तामाह्वयत्। सा ससंभ्रममागत्यामन्दहृदयानन्दसंफुल्लवदनारविन्दा तमुपोषिताभ्यामिवानिमिषिताभ्यां लोचनाभ्यां पिबन्ती पिकस्वरेण स्वरेण पुरोहितामात्यजनमुच्चैराहूय तेभ्यस्तमदर्शयत्। राजा निटिलतटचुम्बितनिजचरणाम्बुजैः प्रशंसितदैवमाहात्म्यैरमात्यैरभाणि—'देव, रथ्यचयः सारथ्यपगमे रथं रभसादरण्यमनयत्' इति। 'तत्र निहतसैनिकग्रामे संग्रामे मालवपतिनाराधितपुरारातिना प्रहितया गदया दयाहीनेन ताडितो मूर्च्छामागत्यात्र वने निशान्तपवनेन बोधितोऽभवम्' इति महीपतिरकथयत्। ततो विरचितमहेन मन्त्रिनिवहेन विरचितदैवानुकूल्येन कालेन शिविरमानीयापनीताशेषशल्यो विकासितनिजाननारविन्दो राजा सहसा विरोपितव्रणोऽकारि। विरोधिदैवधिक्कृतपुरुषकारो दैन्य-

हिमम्' 'वलिहस्तांशवः कराः' 'किरणोस्रमयूखांशु--' इत्यमरः। मगधानां देशानां राजा मागधः। 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इत्यण्। अगाधरुधिरस्य बहुशोणितस्य विक्षरणेन शरीरान्निर्गमेन नष्टचेष्टो निश्चेष्टः। 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः। निश्चिन्वानः सत्यत्वेन मन्वानः। तन्वानो विस्तारयन्। **सेति**। वसुमती। संभ्रमेण त्वरया सह वर्तत इति ससंभ्रमम्। 'संभ्रमस्त्वरा' इत्यमरः। अमन्देनात्युत्कटेन हृदयानन्देन मनःसन्तोषेण संफुल्लं वदनारविन्दं मुखकमलं यस्यास्तादृशी सती। उपोषिताभ्यामिव कृतोपवासाभ्यामिव। न विद्यते निमिषितं पक्ष्मचालनं ययोस्तादृशाभ्याम्। पिबन्ती सादरमवलोकयन्ती। पिकस्य कोकिलस्येव स्वरो रवो यस्य तेन। 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः। अदर्शयद्दर्शितवती। 'दृशिर् प्रेक्षणे' इत्यतो णिजन्ताल्लङ्। निटिलतटेन भालदेशेन चुम्बिते निजे राजकीये चरणाम्बुजे पादकमले यैस्तादृशैः सद्भिः। 'गोधिर्ललाटमलिलं निटिलं भालमर्धकम्' इति पञ्चतत्त्वप्रकाशे। प्रशंसितं श्लाघितं दैवमाहात्म्यं विधिप्राबल्यं यैस्तैः। अभाणि उक्तः। 'भण व्यक्तायां वाचि' इत्यतः कर्मणि लुङ्। **देवेति**। रथ्यचयोऽश्ववृन्दः। 'समवायश्चयो गणः' इत्यमरः। सारथेः सूतस्यापगमे विनाशे जाते सति। 'सूतः क्षत्ता च सारथिः' इत्यमरः। अरण्यं काननम्। 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः। मालवपतिना मानसारेण। 'पतिः समास एव' इति घित्वान्नादेशः। प्रहितया प्रक्षिप्तया। ताडितो विद्धः। निशान्तपवनेन प्राभातिकसमीरणेन। बोधितो लब्धसंज्ञः। विरचितमहेन कृतोत्सवेन। 'मह उद्धव उत्सवः' इत्यमरः। मन्त्रिनिवहेन सचिवसमूहेन। 'समूहनिवहव्यूह--' इत्यमरः। कालेन समयेन 'कालो दिष्टोऽप्यनेहाऽपि समयः' इत्यमरः। शिबिरं निवेशम्। अपनीतानि शरीरान्निष्कासितानि अशेषाणि शल्यानि बाणाग्राणि यस्य। 'वा पुंसि शल्यं शंकुर्ना' इत्यमरः। आननमरविन्दमिवेति 'उपमितं व्याघ्रादिभिः--' इति समासः। विकसितं प्रफुल्लं निजमात्मीयमाननारविन्दं यस्य तादृशः। विरोपिताः शान्तिं प्रापिताः व्रणा ईर्माणि यस्य तादृशः। 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः। अकारि कृतः। 'डुकृञ् करणे' इत्यतः कर्मणि लुङ्। विरोधि आत्मनः प्रतिकूलं यद्दैवं भाग्यं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

व्याप्ताकारो मगधाधिपतिरधिकाधिकाधिरमात्यसंमत्या मृदुभाषितया वसुमत्या मत्या कलितया च समबोधि—'देव, सकलस्य भूपालकुलस्य मध्ये तेजोवरिष्ठो गरिष्ठो भवानद्य विन्ध्यवनमध्ये निवसतीति जलबुद्बुदसमाना विराजमाना संपत्तडिल्लतेव सहसैवोदेति नश्यति च । तन्निखिलं दैवायत्तमेवावधार्य कार्यम् । किं च पुरा हरिश्चन्द्ररामचन्द्रमुख्या असंख्या महीन्द्रा ऐश्वर्योपमितमहेन्द्रा दैवतन्त्रं दुःखयन्त्रं सम्यगनुभूय पश्चादनेककालं निजराज्यमकुर्वन् । तद्वदेव भवान् भविष्यति । कंचन कालं विरचितदैवसमाधिस्तिष्ठतु तावत्' इति ।

ततः सकलसैन्यसमन्वितो राजहंसस्तपोविभ्राजमानं वामदेवनामानं तपोधनं निजाभिलाषावाप्तिसाधनं जगाम । तं प्रणम्य तन कृतातिथ्यस्तस्मै कथितकथ्यस्तदाश्रमे दूरीकृतश्रमे कंचन कालमुषित्वा निजराज्याभिलाषी मितभाषी सोमकुलावतंसो राजहंसो मुनिमभाषत—'भगवन्, मानसारः प्रबलेन दैवबलेन

---

तेन धिकृतपुरुषकारः तिरस्कृतपौरुषः । अधिकाधिकोऽतिमहान् आधिर्मनोदुःखो यस्य सः । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । संमत्याऽनुमत्या मृदुभाषितया मञ्जुभाषिण्या । कलितया यथोचितया । मत्या धिया । 'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । समबोधि विज्ञापितः । 'बुध अवगमने' इत्यतः कर्मणि लुङ् । **देवेति** । तेजसा पराक्रमेण वरिष्ठोऽतिशयेनोरुर्महान् अतिशयेन गुरुर्गरिष्ठः । 'अतिशायने तमबिष्ठनौ' इतीष्ठनि 'प्रियस्थिरस्फिरोरुबहुलगुरु-' इत्यादिनोभयत्र वरादेशो गरादेशश्च । जलबुद्बुदसमाना पयःस्फोटसदृशी । क्षणिकेति भावः । तडिल्लतेव विद्युल्लतेव । 'तडित्सौदामिनी विद्युत्' इत्यमरः । उदेति प्रादुर्भवति । 'इण् गतौ' दैवायत्तं भाग्याधीनम् । 'अधीनो निघ्न आयत्तः' इत्यमरः । अवधार्य निश्चयनीयम् । पुरा पूर्वस्मिन्काले । असंख्या अपरिमिताः । ऐश्वर्येणोपमितस्तुलितो महेन्द्रो देवेन्द्रो यैस्तादृशाः । दैवतन्त्रं दैवायत्तम् । तद्वदेव हरिश्चन्द्रादिवदेव । विरचितदैवसमाधिः कृतदेवोपासनः ।

**तत इति** । विशेषेण भ्राजमानो जाज्वल्यमानः तम् । 'भ्राजृ दीप्तौ' । तप एव धनं यस्य तम् । निजः आत्मीयो योऽभिलाषो मनोरथस्तस्यावाप्तेरुपलब्धेः साधनं हेतुभूतम् । 'वाञ्छा लिप्सा मनोरथः' 'कामोऽभिलाषस्तर्षश्च' इत्यमरः । प्रणम्य नमस्कृत्य । 'णमु प्रह्वत्वे शब्दे च' तेन वामदेवेन । कृतमातिथ्यमतिथिसत्कारो यस्य । अतिथये इदमातिथ्यम् । 'अतिथेर्ञ्यः' इति तादर्थ्ये ञ्यः प्रत्ययः । कथितकथ्यो निवेदितवृत्तान्तः । आसमन्तात् श्राम्यन्ति तपस्यन्ति तापसा अस्मिन् इत्याश्रमः । 'श्रमु तपसि खेदे च' 'पुंसि संज्ञायां घः प्रायेण' इत्यधिकरणे घः । दूरीकृतश्रमे परिहृतप्रयासे । उषित्वा निवासं कृत्वा । 'वस निवासे' इत्यतः क्त्वा । 'ग्रहिज्या' इत्यादिना संप्रसारणे 'वसतिक्षुधोरिट्' इतीटि षत्वे च रूपम् । मितं भाषते तच्छीलतया मितभाषी । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । सोमकुलस्य चन्द्रवंशस्यावतंसः शेखरीभूतः । 'कुलान्यभिजनान्वयौ । वंशोऽन्ववायः' इत्यमरः । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मां निर्जित्य मद्भोग्यं राज्यमनुभवति । तद्वदहमप्युग्रं तपो विरचय्य तमरातिमुन्मूलयिष्यामि लोकशरण्येन भवत्कारुण्येनेति नियमवन्तं भवन्तं प्राप्नवम्' इति। ततस्त्रिकालज्ञस्तपोधनो राजानमवोचत–'सखे, शरीरकार्श्यकारिणा तपसालम् । वसुमतीगर्भस्थः सकलरिपुकुलमर्दनो राजनन्दनो नूनं संभविष्यति, कंचन कालं तूष्णीमास्स्व' इति । गगनचारिण्यापि वाण्या 'सत्यमेतत्' इति तदैवावाचि । राजापि मुनिवाक्यमाङ्गीकृत्यातिष्ठत् ।

ततः संपूर्णगर्भदिवसा वसुमती सुमुहूर्ते सकललक्षणलक्षितं सुतमसूत । ब्रह्मवर्चसेन तुलितवेधसं पुरोधसं पुरस्कृत्य कृत्यविन्महीपतिः कुमारं सुकुमारं जात-

---

शेखरे' इति च । भगोऽस्यास्तीति भगवान् 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इत्युक्तलक्षणो भगः । 'तदस्यास्त्यस्मिन्निति मतुप्' । 'मादुपधायाः--' इति वत्वम् । प्रबलेनात्युत्कटेन । निर्जित्याभिभूय । मया भोग्यमनुभाव्यम् । 'भुज पालनाभ्यवहारयोः' इत्यतः 'ऋहलोर्ण्यत्' इति ण्यति 'चजोः कुघिण्ण्यतोः' इति कुत्वम् । तद्वत् तेन मानसारेण तुल्यम् । 'तेन तुल्यं क्रियाचेद्वतिः' इति वतिः । उग्रं दुष्करम् । विरचय्य कृत्वा । 'रच प्रतियत्ने' इत्यतः स्वार्थणिजन्तात् क्त्वो ल्यपि 'ल्यपि लघुपूर्वात्' इति णेरयादेशः । तं मानसारनामानम् । अरातिं प्रत्यर्थिनम् । 'अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः' इत्यमरः । उन्मूलयिष्यामि उद्गतमूलं करिष्यामि। राज्याद्भ्रंशयिष्यामि इति यावत्। लोकानां शरणागतजनानां शरणे रक्षणे साधु लोकशरणम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । 'तत्र साधुः' इति यत् । कारुण्येन कृपया । 'कारुण्यं करुणा घृणा' इत्यमरः । नियमवन्तं व्रतशीलम् । 'नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम्' इत्यमरः। त्रीन् भूतभविष्यद्वर्तमानान्कालान् जानाति वेत्तीति त्रिकालज्ञः। 'आतोऽनुपसर्गे कः' इति कः । राजानं राजहंसम् । अवोचदुक्तवान् । 'ब्रूञ् व्यक्तायां वाचि' इत्यतो लुङि 'ब्रुवो वचिः' इति वचादेशे 'अस्यतिवक्ति' इत्यङि 'वच उम्' इत्युमि रूपम् । सुख इति । शरीरस्य वपुषः कार्श्यं तनुत्वं करोतीति शरीरकार्श्यकारि तेन । 'शरीरं वर्ष्म विग्रहः' 'स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु' इत्यमरः । तपसाऽलं तेन किमपि कार्यं नास्तीत्यर्थः । 'गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका' इति वचनात्तपसेति तृतीया । रिपुकुलमर्दनः वैरिवंशविदारणः । नन्द्यादित्वाल्ल्युः । राजनन्दनो राजकुमारः । तत एव ल्युः । नूनं संभविष्यति अवश्यमुत्पत्स्यते इति वितर्कये । 'नूनं तर्केऽर्थ निश्चये'इत्यमरः । तूष्णीं मौनमाश्रित्य । 'मौने तु तूष्णीं तूष्णीकाम्' इत्यमरः । गगनचारिण्यावाण्याऽऽकाशगिरा।तदैव ऋषिवाक्याव्यवधानेनव।अवाच्युक्तम् अङ्गीकृत्योरीकृत्य ।

**तत इति** । संपूर्णा गर्भदिवसा यस्यास्तादृशी । सुमुहुर्ते शोभने मुहूर्ते । सकलैर्लक्षणैः राजकीयैर्लक्षितं युक्तम् । असूत प्रसूतवती । 'षूङ् प्राणिगर्भविमोचने' । ब्रह्मवर्चसेन ब्राह्मणतेजसा । 'ब्रह्महस्तिभ्यां वर्चसः' इति समासान्तोऽच् । तुलित उपमितो वेधा ब्रह्मा येन तादृशम् । 'स्रष्टा प्रजापतिर्वेधा' इत्यमरः । पुरोधसं पुरोहितम् । पुरस्कृत्याग्रे कृत्वा । 'पुरोऽ-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

संस्कारेण बालालङ्कारेण च विराजमानं राजवाहननामानं व्यधत्त। तस्मिन्नेव काले सुमतिसुमित्रसुमन्त्रसुश्रुतानां मन्त्रिणां प्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुताख्याः महदभिख्याः सूनवो नवोद्यदिन्दुरुचश्चिरायुषः समजायन्त। राजवाहनो मन्त्रिपुत्रैरात्ममित्रैः सह बालकेलीरनुभवन्नवर्धत।

अथ कदाचिदेकेन तापसेन रसेन राजलक्षणविराजितं कंचिन्नयनानन्दकरं सुकुमारं कुमारं राज्ञे समर्प्यावाचि--'भूवल्लभ, कुशसमिदानयनाय वनं गतेन मया काचिदशरण्या व्यक्तकार्पण्याश्रु मुञ्चन्ती वनिता विलोकिता। 'निर्जने वने किंनिमित्तं रुद्यते त्वया' इति पृष्टा सा करसरोरुहैरश्रु प्रमृज्य सगद्गदं मामवोचत्--'मुने, लावण्याजितपुष्पसायके मिथिलानायके कीर्तिव्याप्तसुधर्मणि

---

व्ययम्' इति गतित्वे 'कुगति-' इति समासे विसर्गस्य 'नमस्पुरसोर्गत्योः' इति सत्वम्। कृत्यविद् कर्तव्यज्ञाता सुकुमारमतिकोमलम्। 'सुकुमारं तु कोमलं मृदुलं मृदु' इत्यमरः। जातसंस्कारेण उत्पत्तिकाले कर्तव्यसंस्कारविशेषेण। विराजमानं देदीप्यमानम्। प्रमति-विश्रुताख्याः विश्रुतान्तो द्वन्द्वः। विश्रुता इत्याख्या नाम येषां ते। 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः। महतां स्वपित्रादीनामिवाभिख्या कान्तिर्येषां ते महदभिख्याः। महत्याभिख्या येषामिति तु न 'आन्महतः समानाधिकरणजातीययोः' इत्यात्वप्रसक्तेः। 'सुषमा परमा शोभाऽभिख्या कान्तिर्द्युतिश्छविः' इत्यमरः। सूनवः पुत्राः। 'आत्मजस्तनयः सूनुः' इत्यमरः। नवो नूतनः उद्यन्नुदयं प्राप्नुवंश्च य इन्दुश्चन्द्रमास्तस्येव रुक्कान्तिर्येषां ते। 'नवीनो नूतनो नवः' 'हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः' 'स्युः प्रभारुग्रुचिस्त्विड्भाभास्छविद्युतिदीप्तयः' इति सर्वत्रामरः। समजायन्त समुत्पन्नाः। 'जनी प्रादुर्भावे' 'ज्ञाजनोर्जा' इति जादेशः। आत्ममित्रैः सह स्वसुहृद्भिः साकम्। 'अथ मित्रं सखा सुहृत्' 'साकं सत्रा समं सह' इत्यमरः। बालकेलीर्बालक्रीडाः। अवर्धत वृद्धिं गतोऽभूत्। 'वृधु वृद्धौ'।

**अथेति।** रसेन सानुरागम्। 'शृङ्गारादौ रसे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः। राजलक्षणैर्नृपचिह्नैर्विराजितं शोभितम्। 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः। नयनयोर्नेत्रयोरानन्दकरं प्रीतिवर्धनम्। 'लोचनं नयनं नेत्रम्' इत्यमरः। सुकुमारं कोमलम् अवाच्यूचे। कुशा दर्भाः समिध इध्मानि च तेषामानयनायाऽऽहरणार्थम्। 'अस्त्री कुशं कुथो दर्भः' 'इन्धनं त्वेध इध्ममेधः समित्स्त्रियाम्' इत्यमरः। अशरण्याऽनाथा। 'शरणं गृहरक्षित्रोः' इत्यमरः। व्यक्तं प्रकटीभूतं कार्पण्यं दीनभावो यस्यास्तादृशी। अश्रु रोदनजलम्। 'रोदनं चास्रमश्रु च' इत्यमरः। वनिता वधूः। 'प्रतीपदर्शिनी वामा वनिता महिला तथा' इत्यमरः। विलोकिता दृष्टा। निर्जने विविक्ते। 'विविक्तविजनच्छन्न--' इत्यमरः। रुद्यतेऽश्रु विमुच्यते। 'रुदिर् अश्रुविमोचने'। पृष्टाऽनुयुक्ता। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। प्रमृज्य निवार्य। सगद्गदं गद्गदस्वरेण सहितम्। मुनिस्तपस्वी। मनुते जानाति सर्वान्विषयानिति 'मनेरुच्च' इत्यौणादिक इन् अत उकारादेशश्च। तल्लक्षणं तु--"दुःखेष्वनुद्विग्नमनाः सुखेषु



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

निजसुहृदो मगधराजस्य सीमन्तिनीसीमन्तमहोत्सवाय पुत्रदारसमन्विते पुष्पपुरमुपेत्य कंचन कालमधिवसति समाराधितगिरीशो मालवाधीशो मगधराजं योद्धुमभ्यगात्। तत्र प्रख्यातयोरेतयोरसंख्ये संख्ये वर्तमाने सुहृत्साहाय्यकं कुर्वाणो निजबले सति विदेहे विदेहेश्वरः प्रहारवर्मा जयवता रिपुणाभिगृह्य कारुण्येन पुण्येन विसृष्टो हतावशेषेण शून्येन सैन्येन सह स्वपुरगमनमकरोत्। ततो वनमार्गेण दुर्गेण गच्छन्नधिकबलेन शबरबलेन रभसादभिहन्यमानो मूलबलाभिरक्षितावरोधः स महानिरोधः पलायिष्ट। तदीयार्भकयोर्यमयोर्धात्रीभावेन परिकल्पिताहं मद्दुहितापि तीव्रगतिं भूपतिमनुगन्तुमक्षमे अभूव। तत्र विवृतवदनः कोऽपि रूपी कोप इव व्याघ्रः शीघ्रं मामाघ्रातुमागतवान्। भीताहमुदग्रग्राविण-

---

विगतस्पृहः। वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते॥" इति भगवद्गीतायाम्। 'तपस्वी तापसः पारिकांक्षी वाचंयमो मुनिः' इत्यमरः। लावण्येन सौन्दर्येण जितः पराजितः पुष्पसायको रतिपतिर्येन तादृशे। कीर्त्या यशसा व्यापृता व्याप्ता सुधर्मा देवसभा येन तथाभूते 'यशः कीर्त्तिः समज्ञा च' इति 'स्यात्सुधर्मा देवसभा' इति चामरः। सीमन्तिनी वधूः। 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः। पुत्रैः सुतैः दारैः कुटुम्बिन्या च समन्विते युक्ते। 'दाराः स्यात्तु कुटुम्बिनी' इत्यमरः। उपेत्य प्राप्य। अधिवसति अधितिष्ठति सति। 'उपान्वध्याङ्वसः' इति पुष्पपुरस्य कर्मत्वम्। गिरिशः शिवः। 'गिरीशो गिरिशो मृडः' इत्यमरः। अभ्यगात् आभिमुख्येन गतवान्। 'इण् गतौ' इत्यतो धातोः 'इणो गा लुङि' इति गादेशः। तत्रेति। पुष्पपुरे। एतयो राजहंसमानसारयोः। संख्ये संपराये। 'मृधमास्कन्दनं संख्यं समीकं सांपरायिकम्' इत्यमरः। वर्तमाने प्रचलति सति। सुहृदो राजहंसस्य। विदेहे त्यक्तवपुषि। रिपुणा वैरिणा मानसारेण। 'रिपौ वैरिसपत्नारि–' इत्यमरः। अभिगृह्य गृहीत्वा। विसृष्ट उपेक्षितः। हतेभ्यः मृतेभ्योऽवशेषेणावशिष्टेन। शून्येन रिक्तेन। स्वपुरगमनं मिथिलानगरीगमनम्। दुर्गेण गन्तुमशक्येन। वनमार्गेण कान्तारवर्त्मना। अधिकबलेनातिबलशालिना। शबरबलेन किरातसैन्येन। 'भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः' इत्यमरः। रभसात् वेगेनाभिहन्यमानः पीड्यमानः। मूलबलैः प्रधानसैनिकैरभिरक्षितो गोपायितोऽवरोधोऽन्तःपुरं यस्य तादृशः सन्। 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्च' इत्यमरः। महान्निरोध आग्रहो यस्य सः। पलायिष्ट पलायनं कृतवान्। परापूर्वाद् 'अय गतौ' इत्यतो लुङि 'उपसर्गस्यायतौ' इति लत्वम्। तदीयेति। अर्भकयोः शिश्वोः 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः। यमयोः सहोत्पन्नयोः। धात्रीभावेनोपमातृत्वेन। 'धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि' इति नानार्थेऽमरः। परिकल्पिता स्थापिता। दुहिता कन्या। 'स्त्रियां त्वमी। आहुर्दुहितरं सर्वे' इत्यमरः। तीव्रगतिं शीघ्रगामिनम्। अक्षमे असमर्थे। तत्रेति। काननमध्ये। विवृतं विस्फारितं वदनमास्यं येन तादृशः। 'वक्त्रास्ये वदनं तुण्डम्' इत्यमरः। रूपी सशरीरः। व्याघ्रः शार्दूलः 'शार्दूलद्वीपिनौ

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

स्खलन्ती पर्यपतम् । मदीयपाणिभ्रष्टो बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणोऽमर्षिणो व्याघ्रस्य प्राणान्वाणो वाणासनयन्त्रमुक्तोऽपाहरत् । विलोलालको बालकोऽपि शबरैरादाय कुत्रचिदुपानीयत । कुमारमपरमुद्वहन्ती मद्दुहिता कुत्र गता न जाने । साहं मोहं गता केनापि कृपालुना वृष्णिपालेन स्वकुटीरमावेश्य विरोपितव्रणाभवम् । ततः स्वस्थीभूय भूयः क्ष्माभर्तुरन्तिकमुपतिष्ठासुरसहायतया दुहितुरनभिज्ञाततया च व्याकुलीभवामि' इत्यभिदधाना ' एकाकिन्यपि स्वामिनं गमिष्यामि ' इति सा तदैव निरगात् । अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं विषादमनुभवंस्तदन्वयाङ्कुरं कुमारमन्विष्यंस्तदेकं चण्डिकामन्दिरं सुन्दरं प्रागाम् । तत्र संततमेवं-

---

व्याघ्रे ' इत्यमरः । शीघ्रं त्वरितम् । ' अथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ' इत्यमरः । आघ्रातुं व्यापादयितुमिति यावत् । उदग्रग्राव्णि अत्युन्नते पाषाणे । ' पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ' इत्यमरः । **मदीयेति** । पाणिभ्रष्टो हस्ताद्गलितः । कपिलाया धेनोः शवो मृतशरीरं तस्य । क्रोडमुरःप्रदेशम् । ' न ना क्रोडं भुजान्तरम् ' इत्यमरः । अभ्यलीयत निलीनोऽभूत् । ' लीङ् श्लेषणे ' दिवादिः । अमर्षिणः क्रोधवतः । ' कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ' इत्यमरः । प्राणानसून् । ' पुंसि भूम्न्यसवः प्राणाः ' इत्यमरः । बाणः सायकः । वाणा अस्यन्ते क्षिप्यन्तेऽनेनेति वाणासनं धनुः । तस्मादेव यन्त्रान्मुक्तः प्रहितः । अपाहरदपहृतवान् । ' हृञ् हरणे ' । विलोलाश्चञ्चला अलकाश्चूर्णकुन्तला यस्य तादृशः । ' अलकाश्चूर्णकुन्तलाः ' इत्यमरः । शबरैः किरातैः आदाय गृहीत्वा । उपानीयतः प्रापितः । उद्वहन्ती बिभ्राणा । न जाने नाहमवगच्छामि । ' ज्ञा अवबोधने ' । ' ज्ञाजनोर्जा ' इति जादेशः । मोहं गता नष्टचेतना । कृपालुना कारुणिकेन । ' स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः ' इत्यमरः । वृष्णिपालेनाजापालकेन । ' मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ' इत्यमरः । स्वकुटीरं निजवासस्थानम् । ' वासः कुटी द्वयोः शाला ' इत्यमरः । ' कुटीशमीशुण्डाभ्यो रः । इत्यल्पार्थे रप्रत्ययः । आवेश्य नीत्वा । विरोपिताश्चिकित्सिता व्रणा ईर्माणि यस्यास्तादृशी । ' व्रणोऽस्त्रियामीर्ममरुः ' इत्यमरः । स्वस्थीभूय कुशलिनी भूत्वा । भूयः पुनरपि । क्ष्माभर्तुः प्रहारवर्मणोऽन्तिकमुपकण्ठम् । ' उपकण्ठान्तिकाभ्यर्णाभ्यग्रा ' इत्यमरः । उपस्थातुं प्राप्तुमिच्छुरुपतिष्ठासुः । ' ष्ठा गतिनिवृत्तौ ' इत्यतः सनि ' सनाशंसभिक्ष उः ' इत्युप्रत्ययः । अनभिज्ञाततया कुत्र गतेत्यवबोधाभावेन । व्याकुलीभवामि उद्विग्नाऽस्मि । **इतीति** । अभिदधाना ब्रुवन्ती । एकाकिन्यपि असहायाऽपि । ' एकादाकिनिच्चासहाये ' इत्याकिनिच् । स्वामिनं प्रहारवर्माणम् । निरगात् निर्जगाम । ' इण् गतौ ' ' इणो गा लुङि ' इति गादेशः । विषादं शोकम् । तदन्वयाङ्कुरं तत्कुलबीजम् । ' अङ्कुरोऽभिनवोद्भिदि ' इत्यमरः । अन्विष्यन् गवेषयन् । चण्डिकामन्दिरमम्बिकागारम् । ' मृडानी चण्डिकाऽम्बिका ' ' भवनागारमन्दिरम् ' इत्यमरः । प्रागामगमम् । सन्ततमनवरतम् । एवंविधानां प्रहारवर्मसह-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

विधविजयसिद्धये कुमारं देवतोपहारं करिष्यन्तः किराताः 'महीरुहशाखावलम्बितमेनमसिलतया वा, सैकततले खनननिक्षिप्तचरणं लक्षीकृत्य शितशरनिकरेण वा, अनेकचरणैः पलायमानं कुक्कुरबालकैर्वा दंशयित्वा संहनिष्यामः' इति भाषमाणा मया समभ्यभाष्यन्त—'ननु किरातोत्तमाः, घोरप्रचारे कान्तारे स्खलितपथः स्थविरभूसुरोऽहं मम पुत्रकं क्वचिच्छायायां निक्षिप्य मार्गान्वेषणाय किंचिदन्तरमगच्छम्। स कुत्र गतः, केन वा गृहीतः, परीक्ष्यापि न वीक्ष्यते। तन्मुखावलोकनेन विनानेकान्यहान्यतीतानि। किं करोमि, क्वयामि, 'भवद्भिर्न किमदर्शि' इति। द्विजोत्तम, कश्चिदत्र तिष्ठति। किमेष तव नन्दनः सत्यमेव। तदेनं गृहाण' इत्युक्त्वा दैवानुकूल्येन मह्यं तं व्यतरन्। तेभ्यो दत्ताशीरहं बालकमङ्गीकृत्य शिशिरोदकादिनोपचारेणाश्वास्य निःशङ्कं भवदङ्कं समानीतवानस्मि। एवमायुष्मन्तं पितृरूपो भवानाभिरक्षतात्' इति। राजा सुहृदा-

---

शानां राज्ञां विजयस्य सिद्धये प्राप्तये। उपहारमुपायनम्। 'उपायनमुपग्राह्यमुपहारस्तथो पदा' इत्यमरः। करिष्यन्तः कर्तुमुद्युक्ताः। किराता भिल्लाः। महीरुहस्य वृक्षस्य शाखायां स्कन्धदेशेऽवलम्बितमधोमुखीभूय लम्बमानम्। 'वृक्षो महीरुहः शाखी' समे शाखालते स्कन्धशाखाशाले' इत्यमरः। असिलतया खड्गेन। 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरः। सैकततले वालुकामये देशे। 'सैकतं सिकतामयम्' इत्यमरः। खनने गर्ते निक्षिप्तौ निहितौ चरणौ पादौ यस्य तादृशं कृत्वेति शेषः। लक्षीकृत्य शरव्यं कृत्वा। 'लक्ष्यं लक्षं शरव्यं च' इत्यमरः। शितशरनिकरेण तीक्ष्णबाणसमुदायेन। कुक्कुरबालकैः सारमेयशिशुभिः 'कौलेयकः सारमेयः कुक्कुरो मृगदंशकः' इत्यमरः। दंशयित्वा दन्तैर्विदार्य। संहनिष्यामो मारयिष्यामः। समभ्यभाष्यन्त उक्ताः। **नन्विति**। किरातोत्तमा शबरश्रेष्ठाः। घोरप्रचारेऽतिदुर्गमे। कान्तारे वने। 'कान्तारं वर्त्म दुर्गमम्' इत्यमरः। स्खलितपथो मार्गभ्रष्टः। 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तोऽप्रत्ययः। स्थविरभूसुरो वृद्धब्राह्मणः। 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इत्यमरः। अनुकम्पितः पुत्रः पुत्रकः। 'अनुकम्पायाम्' इति कः। निक्षिप्य निधाय। मार्गान्वेषणाय अध्वगवेषणाय। अन्तरं दूरदेशम्। परीक्ष्यापि अन्विष्यापि। तन्मुखावलोकनेन विना तस्य मुखमदृष्ट्वा। 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' इति तृतीया। अहानि दिनानि। 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः। अतीतानि अतिक्रान्तानि। न किमदर्शि न दृष्टः किम्। 'दृशिर् प्रेक्षणे' इत्यतः कर्मणि लुङ्। अत्रास्मिन्मन्दिरे। नन्दनः पुत्रः। व्यतरन्नददुः। व्युपवर्गात् 'तॄ प्लवनतरणयोः' दत्ताशीः कृताशीर्वादः। आशीर्हिताशंसाऽहिदंष्ट्रयोः' इति नानार्थेऽमरः। अङ्गीकृत्य स्वीकृत्य। शिशिरं शीतलम्। 'सुषीमः शिशिरो जडः। तुषारः शीतलः शीतः' इत्यमरः। आश्वास्य गतश्रमं कृत्वा। भवदङ्कं भवत उत्सङ्गदेशम्। 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः। एवम् आयुष्मन्तं दैववशाच्चिरजीविनम्। 'जैवातृकः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

z+9=
6

द्यन्निमित्तं शोकं तन्नन्दनविलोकनसुखेन किंचिदधरीकृत्य तमुपहारवर्मनाम्नाहूय राजवाहनमिव पुपोष।

जनपतिरेकस्मिन्पुण्यदिवसे तीर्थस्नानाय पक्कणनिकटमार्गेण गच्छन्नबलया कयाचिदुपलालितमनुपमशरीरं कुमारं कंचिदवलोक्य कुतूहलाकुलस्तामपृच्छत्— 'भामिनि, रुचिरमूर्तिः स राजगुणसंपूर्तिरसावर्भको भवदन्वयसंभवो न भवति कस्य नयनानन्दनः, निमित्तेन केन भवदधीनो जातः कथ्यतां याथातथ्येन त्वया' इति। प्रणतया तया शबर्या सलीलमलापि—'राजन्, आत्मपल्लीसमीपे पदव्यां वर्तमानस्य शक्रसमानस्य मिथिलेश्वरस्य सर्वस्वमपहरति शबरसैन्ये मद्दयितेनापहृत्य कुमार एष मह्यमर्पितो व्यवर्धत' इति। तदवधार्य कार्यज्ञो

---

स्यादायुष्मान्' इत्यमरः। पितृरूपः प्रशस्तः पिता तत्तुल्य इति यावत्। 'प्रशंसायां रूपप्' इति रूपप्प्रत्ययः। अभिरक्षतात्पालयतात्। 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' इत्याशिषि तातङ्। सुहृदः प्रहारवर्मणः या आपत् पथि जाता तन्निमित्तं तत्कारणकम्। शोकं मन्युम्। 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः। अधरीकृत्य दूरीकृत्य। उपहारवर्मनाम्नाऽऽहूय तस्योपहारवर्मेति नामकर्मसंस्कारं कृत्वा। राजवाहनवत् स्वकीयपुत्रवत्। 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः। पुपोष पोषितवान्। 'पुष पुष्टौ' क्रैयादिकः सकर्मकः।

**जनपतिरिति**। राजहंसः। पुण्यदिवसे पुण्यदिने। पक्कणनिकटमार्गेण शबरालयसमीपवर्तिनाऽध्वना। 'पक्कणः शबरालयः' इत्यमरः। अबलया योषिता। 'स्त्री योषिदबला योषा' इत्यमरः। उपलालितं सस्नेहं धारितम्। अनुपमशरीरम् अतिसुन्दरमूर्तिम्। कुतूहलाकुलः कौतुकाविष्टः। भामिनि हे सुन्दरि! 'सुन्दरी रमणी रामा कोपना सैव भामिनी' इत्यमरः। रुचिरमूर्तिः सुन्दरतनुः। 'सुन्दरं रुचिरं चारु' 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। राजगुणानां नृपचिह्नानां संपूर्तिः संपूर्णता यस्मिंस्तथाभूतः। अथवा सराजगुणसम्पूर्तिरित्येकं पदम्। राजगुणसंपूर्त्या सह वर्तमानः। अर्भकः शिशुः। 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः। भवत्याः शबर्याः। अन्वयसम्भवः कुलोत्पन्नः। 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंस्त्वम्। नयनानन्दनः नेत्रोत्सवकारी पुत्र इति यावत्। भवत्या अधीन आयत्तः। 'अधीनो निघ्न आयत्तः' इत्यमरः। कथ्यतामुच्यताम्। 'कथ वाक्यप्रबन्धे' याथातथ्येन वास्तवतया। प्रणतया नम्रया। अलापि उक्तः। 'लप व्यक्तायां वाचि' कर्मणि लुङ्। आत्मपल्ल्याः निजघोषस्य। समीपे निकटे। 'घोष आभीरपल्ली स्यात्' इत्यमरः। पदव्यां मार्गे। 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः। शक्रेण दिवस्पतिना समानस्य तुल्यस्य। 'जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः' इत्यमरः। 'वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक्। साधारणः समानश्च' इति च। मिथिलेश्वरस्य प्रहारवर्मणः। अपहरति चोरयति सति शबरसैन्ये किरातबले। मद्दयितेन मम पत्या। 'दयितं वल्लभं प्रियम्'

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

राजा मुनिकथितं द्वितीयं राजकुमारमेव निश्चित्य सामदानाभ्यां तामनुनीयाप-हारवर्मेत्याख्याय देव्यै 'वर्धय' इति समर्पितवान् ।

कदाचिद्वामदेवशिष्यः सोमदेवशर्मा नाम कंचिदेकं बालकं राज्ञः पुरो निक्षिप्याभाषत—'देव, रामतीर्थे स्नात्वा प्रत्यागच्छता मया काननावनौ वनितया कयापि धार्यमाणमेनमुज्ज्वलाकारं कुमारं विलोक्य सादरमभाणि—'स्थविरे, का त्वम् । एतस्मिन्नटवीमध्ये बालकमुद्वहन्ती किमर्थमायासेन भ्रमसि' इति । वृद्धयाप्यभाषि—'मुनिवर, कालयवननाम्नि द्वीपे कालगुप्तो नाम धनाढ्यो वैश्यवरः कश्चिदस्ति । तन्नन्दिनीं नयनानन्दकारिणीं सुवृत्तां नामैतस्माद्द्वीपादागतो मगधनाथमन्त्रिसंभवो रत्नोद्भवो नाम रमणीयगुणालयो भ्रान्तभूवलयो मनोहारी व्यवहार्युपयम्य सुवस्तुसंपदा श्वशुरेण संमानितोऽभूत् । कालक्रमेण नताङ्गी गर्भिणी जाता । ततः सोदरविलोकनकुतूहलेन रत्नोद्भवः कथंचिच्छ्वशुरमनुनीय

---

इति विशेष्यनिघ्नेऽमरः । अवधार्य पर्यालोच्य । मुनिना वामदेवेन कथितं प्रोक्तम् । सामदानाभ्यामुपायाभ्याम् । तां शबरीमनुनीय समाधाय । अपहारवर्मेत्याख्याय तस्य कुमारस्य अपहारवर्मेति नामधेयं विधाय । देव्यै वसुमत्यै । समर्पितवान् अर्पयामास ।

**कदेति** । पुरः सन्निधौ । प्रत्यागच्छता प्रतिनिवर्तमानेन । काननावनौ अरण्यभुमौ । 'गहनं काननं वनम्' 'क्ष्माऽवनिर्मेदिनी मही' इत्यमरः । वनितया महिलया । 'प्रतीपदर्शिनी वामा वनिता महिला तथा' इत्यमरः । धार्यमाणं हस्ताभ्यां गृह्यमाणम् । उज्ज्वलाकारं दीप्यमानम् । विलोक्य दृष्ट्वा । अभाण्युक्तम् ।' भण व्यक्तायां वाचि '। स्थविरे हे वृद्धे ! 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इत्यमरः । अटवीमध्ये अरण्यमध्ये । 'अटव्यरण्यं विपिनम्' इत्यमरः । उद्वहन्ती धारयन्ती । किमर्थं कं वा प्रयोजनमुद्दिश्य । भ्रमसि इतस्ततो विचरासि । 'भ्रमु अनवस्थाने' । अभाषि कथितम् । 'भाष व्यक्तायां वाचि' द्वीपे समुद्रमध्यदेशे । 'द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्' इत्यमरः । द्विर्गता आपोऽस्मिन्निति 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तेऽप्रत्यये । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इति ईति च रूपमिदम् । धनेन द्रव्येणाढ्यः स्वामी ! 'द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु' 'इभ्य आढ्यो धनी स्वामी' इत्यमरः । तन्नन्दिनीं तत्पुत्रीम् । मगधनाथस्य राजहंसस्य यो मन्त्री पद्मोद्भवः तत्संभवः तत्पुत्रः । रमणीयानां मनोहराणां गुणानामालयः स्थानभूतः । 'गृहाः पुंसि च भूम्न्येव निकाय्य निलयालयाः' इत्यमरः । व्यवहारी व्यवहारज्ञाता । उपयम्य परिणीय । श्वशुरेण पत्नीपित्रा कालगुप्तेन । 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः । संमानितः सत्कृतः । नतान्यङ्गानि यस्यास्तादृशी सुवृत्ता । गर्भिणी गर्भवती । **तत इति** । सोदरस्य भ्रातुः सुश्रुतस्य विलोकने दर्शने कुतूहलेन कौतुकेन । कथंचित्

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

चपललोचनयानया सह प्रवहणमारुह्य पुष्पपुरमभिप्रतस्थे । कल्लोलमालिकाभिहतः पोतः समुद्राम्भस्यमज्जत् । गर्भभरालसां तां ललनां धात्रीभावेन कल्पिताहं कराभ्यामुद्वहन्ती फलकमेकमधिरुह्य दैवगत्या तीरभूमिमगमम् । सुहृज्जनपरिवृतो रत्नोद्भवस्तत्र निमग्नो वा केनोपायेन तीरमगमद्वा न जानामि । क्लेशस्य परां काष्ठामधिगता सुवृत्तास्मिन्नटवीमध्येऽद्य सुतमसूत । प्रसववेदनया विचेतना सा प्रच्छायशीतले तरुतले निवसति । विजने वने स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुमुद्युक्तया मया विवशायास्तस्याः समीपे बालकं निक्षिप्य गन्तुमनुचितमिति कुमारोऽप्यानायि ' इति'। तस्मिन्नेव क्षणे वन्यो वारणः कश्चिददृश्यत । तं विलोक्य भीता सा बालकं निपात्य प्राद्रवत् । अहं समीपलतागुल्मके प्रविश्य परीक्षमाणोऽतिष्ठम् । निपातितं बालकं पल्लवकवलमिवाददति गजपतौ

महता कष्टेन । अनुनीय सान्त्वयित्वा । चपले चञ्चले लोचने नेत्रे यस्यास्तया । ' लोचनं नयनं नेत्रम् ' इत्यमरः । प्रवहणं जलयानम् । आरुह्याधिष्ठाय । प्रतस्थे प्रस्थानं चकार । ' ष्ठा गतिनिवृत्तौ ' इत्यतः ' समवप्रविभ्यः स्थः ' इत्यात्मनेपदम् । कल्लोलानां महातरङ्गाणां मालिकाभिः श्रेणीभिः अभिहतो विद्धः । ' महत्सूल्लोलकल्लोलौ ' इत्यमरः । पोतः प्रवहणम् । ' यानपात्रे शिशौ पोतः ' इति नानार्थेऽमरः । अम्भसि जले । ' अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ' इत्यमरः । अमज्जत् निमग्नोऽभूत् । ' टुमस्जो शुद्धौ ' । गर्भभरेणालसां जडीभूतां तां सुवृत्ताम् । ललनां कान्ताम् । ' प्रमदा मानिनी कान्ता ललना च नितम्बिनी ' इत्यमरः । धात्रीभावेनोपमातृतया । ' धात्री स्यादुपमातापि वसुधाप्यामलक्यपि ' इत्यमरः । उद्वहन्ती धारयन्ती । फलकं काष्ठम् । तीरभूमिं तटप्रदेशम् । ' कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ' इत्यमरः । परिवृतः वेष्टितः । तत्र समुद्रजले । काष्ठां मर्यादाम् । अधिगता प्राप्ता । असूत प्रसूतवती । ' षूङ् प्राणिप्रसवे ' अदादिकः । प्रसववेदनया प्रसूतिकालिकदुःखेन । विचेतना निश्चेष्टा । प्रकृष्टा छाया प्रच्छायम् 'विभाषा सेनासुरा-- ' इत्यादिना नपुंसकत्वम् । तेन शीतले शीते । ' तुषारः शीतलः शीतः ' इत्यमरः । तरोर्वृक्षस्य तले मूलदेशे । ' वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ' इत्यमरः । निवसति तिष्ठति । ' वस निवासे ' । जनपदगामिनं देशगामिनम् । ' नीवृज्जनपदो देशविषयौ तूपवर्तनम् ' इत्यमरः । अन्वेष्टुं गवेषयितुम् । उद्युक्तया कृतोद्योगया । विवशाया विचेतनायाः । तस्याः सुवृत्तायाः । निक्षिप्य स्थापयित्वा । गन्तुमन्यत्र प्रयातुमयुक्तमनुचितम् । आनायि आनीतः । तस्मिन्निति । स्थविरायां ब्रुवन्त्यामेव सत्याम् । वने भवो वन्यः । ' तत्र भवः ' इत्यधिकारे ' दिगादिभ्यो यत् ' इति यत्प्रत्ययः । वारणः करी । ' कुञ्जरो वारणः करी ' इत्यमरः । अदृश्यत दृश्यते स्म । ' दृशिर् प्रेक्षणे ' कर्मणि लङ् । सा स्थविरा । निपात्य भूमौ परित्यज्य । प्राद्रवत् पलायिष्ट । ' द्रु गतौ '। अहं सोमदेवशर्मा । समीपलतागुल्मके निकटवर्तिनि लतानिकुञ्जे । परीक्षमाणः कुमारस्य कावाऽवस्था भाविनीति पश्यन् । निपतितं भूमौ गलितम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कण्ठीरवो भीमरवो महाग्रहेण न्यपतत् । भयाकुलेन दन्तावलेन झटिति वियति समुत्पात्यमानो बालको न्यपतत् । चिरायुष्मत्तया स चोन्नततरुशाखासमासीनेन वानरेण केनचित्पक्कफलबुद्ध्या परिगृह्य फलेतरतया विततस्कन्धमूले निक्षिप्तोऽभत् । सोऽपि मर्कटः क्वचिदगात् । बालकेन सत्त्वसंपन्नतया सकलक्लेशसहेनाभावि । केसरिणा करिणं निहत्य कुत्रचिदगामि । लतागृहान्निर्गतोऽहमपि तेजःपुञ्जं बालकं शनैरवनीरुहादवतार्य वनान्तरे वनितामन्विष्याविलोक्यैनमानीय गुरवे निवेद्य तन्निदेशेन भवन्निकटमानीतवानस्मि ' इति । सर्वेषां सुहृदामेकदैवानुकूलदैवाभावेन महदाश्चर्यं बिभ्राणो राजा 'रत्नोद्भवः कथमभवत्' इति चिन्तयंस्तन्नन्दनं पुष्पोद्भवनामधेयं विधाय तदुदन्तं व्याख्याय सुश्रुताय विषादसंतोषावनुभवंस्तदनुजतनयं समर्पितवान् ।

अन्येद्युः कंचन बालकमुरसि दधती वसुमती वल्लभमभिगता । तेन 'कुत्रत्यो-

---

पल्लवकवलमिव किसलयग्रासमिव । 'पल्लवोऽस्त्री किसलयम्' 'ग्रासस्तु कवलः पुमान्' इत्यमरः । आददति स्वीकुर्वति सति । कण्ठीरवः सिंहः । 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः । कण्ठीरवो मृगरिपुः' इत्यमरः । भीमो घोरो रवः गर्जना यस्य तादृशः । 'घोरं भीमं भयानकम्' 'ध्वनिध्वानरवस्वनाः' इत्यमरः । महताऽऽग्रहेणावेशेन सह । **चिरेति** । चिरंजीवितया । उन्नतस्यात्युच्छ्रितस्य तरोर्महीरुहस्य शाखायां स्कन्धे समासीनेन स्थितेन वारणेन मर्कटेन 'मर्कटो वानरः कीशः' इत्यमरः । पक्कफलबुद्ध्या इदं पक्कं फलम् इति मनीषया । परिगृह्य गृहीत्वा । फलेतरतया फलभिन्नतया । वितते विस्तृते स्कन्धयोर्मूले । निक्षिप्तः स्थापितः । सत्त्वसंपन्नतया बलशालितया । सकलान्क्लेशान्दुःखानि सहते क्षमत इति सकलक्लेशसहः तेन । अभावि भूतम् । केसरिणा सिंहेन । करिणं गजम् । अगामि गतम् । अहं सोमदेवः । तेजःपुञ्जं नितान्ततेजस्विनम् । शनैः सावधानतया । अवनीरुहात् वृक्षात् । अवतार्य अवरोप्य । वनान्तरे वनमध्ये । वनितां स्थविरां सुवृत्तां च । अविलोक्यादृष्ट्वा । गुरवे वामदेवाय । निवेद्य कथयित्वा । तस्य निदेशेन शासनेन । 'अववादस्तु निर्देशो निदेशः शासनं च सः' इत्यमरः । **सर्वेषामिति** । एकदैव एकस्मिन्नेव काले । अननुकूलतया प्रातिकूलतया । आश्चर्यमद्भुतम् । राजा राजहंसः । रत्नोद्भवः कथमभवत् समुद्रात्केनचिदुपायेनोत्तीर्णो वा तत्रैव निमग्न इति । तदुदन्तं पुष्पोद्भवस्य वृत्तान्तम् । व्याख्याय सविस्तरं कथयित्वा । विषादसन्तोषौ निजमन्त्रिणो रत्नोद्भवस्य गत्यविज्ञानेन खेदम्, तत्पुत्रस्य लाभात् आनन्दं च । समर्पितवान् दत्तवान् ।

**अन्येद्युरिति** । अन्यस्मिन्नहनि अन्येद्युः 'सद्यःपरुत्परारि' इत्येद्युस् । उरसि वक्षःप्रदेशे । 'उरो वत्सं च वक्षश्च' इत्यमरः । दधती धारयन्ती । 'डुधाञ् धारणपोषणयोः' इत्यतः शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः । वल्लभं पतिं राजहंसम् । अभिगताऽऽभिमुख्येन प्राप्तवती

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

ऽयम्' इति पृष्टा समभाषत—'राजन्, अतीतायां रात्रौ काचन दिव्यवनिता मत्पुरतः कुमारमेनं संस्थाप्य निद्रामुद्रितां मां विबोध्य विनीताब्रवीत्—'देवि, त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभा यक्षकान्ताहं तारावली नाम, नन्दिनी मणिभद्रस्य । यक्षेश्वरानुमत्या मदात्मजमेतं भवत्तनूजस्याम्भोनिधिवलयवेष्टितक्षोणीमण्डलेश्वरस्य भाविनो विशुद्धयशोनिधे राजवाहनस्य परिचर्याकरणायानीतवत्यस्मि । त्वमेनं मनोजसंनिभमभिवर्धय' इति । विस्मयविकसितनयनया मया सविनयं सत्कृता स्वक्षी यक्षी साप्यदृश्यतामयासीत्' इति । कामपालस्य यक्षकन्यासंगमे विस्मयमानमानसो राजहंसो रञ्जितमित्रं सुमित्रं मन्त्रिणमाहूय तदीयभ्रातृपुत्रमर्थपालं विधाय तस्मै सर्वं वार्तादिकं व्याख्यायादात् ।

ततः परस्मिन्दिवसे वामदेवान्तेवासी तदाश्रमवासी समाराधितदेवकीर्ति

---

कुत्र भवः कुत्रत्यः । 'अमेहक्वतसित्रेभ्य एव' इति त्यप् । पृष्टाऽनुयुक्ता सती । समभाषत उक्तवती । 'भाष व्यक्तायां वाचि'। अतीतायां रात्रौ पूर्वेद्यू रजन्याम्। दिव्यवनिता अद्भुतरूपा महिला । 'वनिता महिला तथा'। संस्थाप्य निधाय । निद्रया मुद्रितां विचेतनाम् । 'स्यान्निद्रा शयनं स्वापः' इत्यमरः । विबोध्य उत्थाप्य । विनीता विशेषेण नम्रा सती । अब्रवीदुवाच । **देवीति** । तव मन्त्री सचिवः त्वन्मन्त्री 'प्रत्ययोत्तरपदयोश्च' इति त्वादेशः । यक्षकान्ता यक्षकुमारी । नन्दिनी पुत्री । अनुमत्या संमत्या । ममात्मजं पुत्रम् । 'प्रत्ययोत्तरपदयोश्च' इति मादेशः । 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः।भवत्यास्तनूजस्य पुत्रस्य । अम्भोनिधिः समुद्र एव वलयः कटकं तेन वेष्टितं व्याप्तं यत्क्षोणीमण्डलं भूचक्रवालं तस्येश्वरः पतिः । 'कटकं वलयोऽस्त्रियाम्' 'क्षोणी ज्या काश्यपी क्षितिः' 'चक्रवालं तु मण्डलम्' 'इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता' इति सर्वत्रामरः । भाविनः उत्पत्स्यमानस्य । 'भविष्यति गम्यादयः' इति णिनिः । विशुद्धस्य निर्मलस्य यशसः कीर्तेः निधिः स्थानं तस्य 'यशः कीर्तिः समज्ञा च' इत्यमरः। परिचर्याकरणाय उपासनार्थम् ।'वरिवस्यातु शुश्रूषा परिचर्याऽप्युपासना' इत्यमरः । मनसो जायते मनोजः कामः। 'पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः' इत्यमरः । तेन सन्निभं तुल्यम् । अभिवर्धय पोषय । 'वृधु वृद्धौ' । णिजन्ताल्लोट् । विस्मयेन आश्चर्येण विकसिते प्रफुल्ले नयने चक्षुषी यस्यास्तादृश्या । 'विस्मयोऽद्भुतमाश्चर्यम्' इत्यमरः । मया वसुमत्या । सत्कृता बहुमानिता । शोभने अक्षिणी नेत्रे यस्यास्तादृशी सुलोचनेति यावत् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्'इति षचि 'षिद्गौरादिभ्यश्च' इति ङीष् । अदृश्यतां दृष्टेरगोचरताम् । अयासीदगात् । 'या प्रापणे' इत्यतो लुङि रूपम् । **संगमे** संयोगे । विस्मयमानं संजाताश्चर्यं मानसं मनो यस्य सः । 'स्वान्तं हृन्मानसं मनः' इत्यमरः । रञ्जितानि आनन्दितानि मित्राणि सखायो येन तम् । आहूयाकार्य । तदीयभ्राता कामपालः । अर्थपालं विधायार्थपालेति नामधेयं कृत्वा । व्याख्याय विस्तरेण कथयित्वा । अदात् समर्पितवान् । 'डुदाञ् दाने' लुङ् ।

**तत इति** । परस्मिन्दिवसेऽपरेद्युः । 'अन्ते वसतीत्यन्तेवासी शिष्यः । 'छात्रान्तेवासिनौ

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

निर्भर्त्सितमारमूर्तिं कुसुमसुकुमारं कुमारमेकमवगमय्य नरपतिमवादीत्—'देव, तीर्थयात्राप्रसङ्गेन कावेरीतीरमागतोऽहं विलोलालकं बालकं निजोत्सङ्गतले निधाय रुदतीं स्थविरामेकां विलोक्यावोचम्—'स्थविरे, का त्वम्, अयमर्भकः कस्य नयनानन्दकरः, कान्तारं किमर्थमागता, शोककारणं किम्' इति । सा करयुगेन बाष्पजलमुन्मृज्य निजशोकशंकूत्पाटनक्षममिव मामवलोक्य शोकहेतुमवोचत्—'द्विजात्मज, राजहंसमन्त्रिणः सितवर्मणः कनीयानात्मजः सत्यवर्मा तीर्थयात्रामिषेण देशमेनमागच्छत् । स कस्मिंश्चिदग्रहारे कालीं नाम कस्याचिद्भूसुरस्य नन्दिनीं विवाह्य तस्या अनपत्यतया गौरीं नाम तद्भगिनीं काञ्चनकान्तिं परिणीय तस्यामेकं तनयमलभत । काली सासूयमेकदा धात्र्या मया सह बालमेनमेकेन मिषेणानीय तटिन्यामेतस्यामक्षिपत् । करेणैकेन बालमुद्धृत्याप-

---

शिष्ये' इत्यमरः । निर्भर्त्सिताऽधरीकृता मारस्य मन्मथस्य मूर्तिस्तनुर्येन । 'मदनो मन्मथो मारः' 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । कुसुममिव पुष्पमिव सुकुमारं कोमलम् 'प्रसूनं कुसुमं सुमम्' 'सुकुमारं कोमलं मृदुलं मृदु' इत्यमरः । अवगमय्य राज्ञे समर्प्य । अवपूर्वात् 'गम्लृ गतौ' इत्यतो णिजन्तात् ल्यपि 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। नरपतिं राजहंसम् । अवादीदुवाच । 'वद व्यक्तायां वाचि' इत्यतो लुङि 'वदव्रजहलन्तस्याचः' इति वृद्धिः । हे देवेति । विलोलाश्चञ्चला अलकाश्चूर्णकुन्तला यस्य तादृशम् । 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । निजोत्सङ्गतले आत्मीयेऽङ्कदेशे । निधाय स्थापयित्वा । रुदतीं परिदेवमानाम् । स्थविरां जरठाम् । 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इत्यमरः । विलोक्य दृष्ट्वा । अवोचमब्रवम् । 'ब्रूञ् व्यक्तायां वाचि' लुङ् । अर्भकः शिशुः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । कान्तारमरण्यम् । करयुगेन पाणियुगलेन । 'युग्मं तु युगलं युगम्' इत्यमरः । बाष्पजलमश्रुसलिलम् । 'बाष्पमूष्माश्रु' इत्यमरः । उन्मृज्य निवार्य । निजशोकस्यात्मदुःखस्यैव शङ्कोः शल्यस्योत्पाटने निष्कासने क्षमं कुशलम् । 'वा पुंसि शल्यं शंकुर्ना' 'क्षमं शक्ते हिते त्रिषु' इत्यमरः । शोकहेतुं मन्युकारणम् । अवोचदुवाच । कनीयान्यवीयान् । आत्मजः पुत्रः । तीर्थयात्राया मिषेण व्याजेन । अग्रहारे महीपतेः सकाशात् प्रतिग्रहरूपेण प्राप्तग्रामादौ भूसुरस्य विप्रस्य । नन्दिनीं कन्याम् । विवाह्य परिणीय । काञ्चनकान्तिं सुवर्णवत्प्रकाशमानाम् । 'चामीकरं जातरूपं महारजतकाञ्चने' इति सुवर्णपर्यायेऽमरः। तस्याः काल्या भगिनीमनुजां स्वसारम् । 'भगिनी स्वसा' इत्यमरः । तनयं पुत्रमलभत प्राप्तवान् । असूयया अक्षमया सहितम् । 'अक्षान्तिरीर्ष्या' इत्यमरः । धात्र्योपमात्रा । 'धात्री स्यादुपमाताऽपि' इत्यमरः । मिषेण व्याजेन । तटिन्यां नद्याम् । 'तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी' इत्यमरः । अक्षिपत्त्यक्तवत् । 'क्षिप प्रेरणे' । उद्धृत्य उद्गताशिरस्कं धारयित्वा । प्लवमाना तरन्ती । नदीवेगागतस्य सरिद्वेगेन प्राप्तस्य । तरोर्वृक्षस्य । 'विटपी पादपस्तरुः' इत्यमरः । शाखामवलम्ब्य स्कन्धमाश्रित्य । शिशुं बालं निधाय स्थापयित्वा । ऊह्यमाना

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

रेण प्लवमाना नदीवेगागतस्य कस्यचित्तरोः शाखामवलम्ब्य तत्र शिशुं निधाय नदीवेगेनोह्यमाना केनचित्तरुलग्नेन कालभोगिनाहमदंक्षि । मदवलम्बीभूतो भूरुहोऽयमस्मिन्देशे तीरमगमत् । गरलस्योद्दीपनतया मयि मृतायामरण्ये कश्चन शरण्यो नास्तीति मया शोच्यते' इति । ततो विषमविषज्वालावलीढावयवा सा धरणीतले न्यपतत् । दयाविष्टहृदयोऽहं मन्त्रबलेन विषव्यथामपनेतुमक्षमः समीपकुञ्जेष्वौषधिविशेषमान्विष्य प्रत्यागतो व्युत्क्रान्तजीवितां तां व्यलोकयम् । तदनु तस्याः पावकसंस्कारं विरचय्य शोकाकुलचेता बालमेनमगतिमादाय सत्यवर्मवृत्तान्तश्रवणवेलायां तन्निवासाग्रहारनामधेयस्याश्रुततया तदन्वेषणमशक्यमित्यालोच्य भवदमात्यतनयस्य भवानेवाभिरक्षितेति भवन्तमेनमनयम्' इति । तन्निशम्य सत्यवर्मस्थितेः सम्यगनिश्चिततया खिन्नमानसो नरपतिः सुमतये मन्त्रिणे सोमदत्तं नाम तदनुजतनयमर्पितवान् । सोऽपि सोदरमागतमिव मन्यमानो विशेषेण पुपोष ।

---

नीयमाना । 'वह प्रापणे' 'वचिस्वपियजादीनां किति' इति सम्प्रसारणम् । तरुलग्नेन वृक्षसमासीनेन । कालभोगिना कृष्णसर्पेण । 'उरगः पन्नगो भोगी' इत्यमरः । अदंक्षि दष्टा । 'दंश दशने' । कर्मणि लुङि उत्तमपुरुषैकवचनमिदम् । ममावलम्बीभूत आश्रयभूतः । भूरुहो विटपी । तीरं तटम् । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इत्यमरः । अगमत् प्राप्तः । गरलस्य विषस्य । 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः । उद्दीपनतया । अतिबाधकतया । मृतायां प्रेतायां सत्याम् । 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः । मृतप्रमीतौ त्रिष्वेते' इत्यमरः । अरण्ये विपिने । 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः । शरण्यो रक्षिता । शोच्यते शोकः क्रियते । 'शुच शोके' । **तत इति** । विषमस्यासह्यस्य विषस्य क्ष्वेडस्य ज्वालाभिरवलीढा व्याप्ता अवयवा अङ्गानि यस्यास्तादृशी । धरणीतले पृथिवीतले ।'धरा धरित्री धरणी' इत्यमरः । न्यपतत् पतिता । 'पत्लृ पतने' इत्यतो लुङि लृदित्वादङ् । दयया कारुण्येनाविष्टं व्याप्तं हृदयं मानसं यस्य तथाभूतः । 'कृपा दयानुकम्पा स्यात्' इत्यमरः । मन्त्राणां बलेन सामर्थ्येन । विषव्यथां गरलजन्यसंतापम् । 'पीडा बाधा व्यथा दुःखम्' इत्यमरः । अपनेतुं परिहर्तुम् । अक्षमोऽसमर्थः । समीपकुञ्जेषु निकटवर्तिषु लतागृहेषु । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः। आन्विष्य मार्गयित्वा । प्रत्यागतः प्रतिनिवृत्तः । व्युत्क्रान्तं विनष्टं जीवितं जीवनं यस्यास्तादृशीं मृतामिति यावत् । व्यलोकयमपश्यम् ।'लोकृ लोचने'। **तदन्विति**। पावकसंस्कारं वह्निना दाहम् ।' कृशानुः पावकोऽनलः' इत्यभिधर्यायेऽमरः । विरचय्य कृत्वा । शोकाकुलचेताः दुःखाक्रान्तमनाः अगतिमनाथम् । आदाय गृहीत्वा । वृत्तान्तश्रवणवेलायां कथाकर्णनकाले । नामधेयस्य नाम्नः । अश्रुततयाऽनाकर्णिततया । तदन्वेषणं सत्यवर्मणो मार्गणम् । अशक्यं कर्तुमयोग्यम् । आलोच्य विचार्य । अमात्यतनयस्य मन्त्रिसूनोः । अभिरक्षिता पालयिता । अनयं नीतवानस्मि । **तदिति** । निशम्य श्रुत्वा । स्थितेः निवासस्य सम्यगनिश्चिततया यथार्थत्वेनाज्ञाततया । खिन्नमानसः दुःखितचेताः । नरपती राजहंसः । अर्पितवान् । ददौ । सोदरं समानोदरं सत्यवर्माणम् । आगतमिव प्राप्तमिव । पुपोष पोषयामास ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

एवं मिलितेन कुमारमण्डलेन वालकेलीरनुभवन्नधिरूढानेकवाहनो राजवाहनोऽनुक्रमेण चौलोपनयनादिसंस्कारजातमलभत। ततः सकललिपिज्ञानं निखिलदेशीयभाषापाण्डित्यं षडङ्गसहितवेदसमुदायकोविदत्वं काव्यनाटकाख्यानकाख्यायिकेतिहासचित्रकथासहितपुराणगणनैपुण्यं धर्मशब्दज्योतिस्तर्कमीमांसादिसमस्तशास्त्रनिकरचातुर्यं कौटिल्यकामन्दकीयादिनीतिपटलकौशलं वीणाद्यशेषवाद्यदाक्ष्यं संगीतसाहित्यहारित्वं मणिमन्त्रौषधादिमायाप्रपञ्चचञ्चुत्वं मातङ्गतुरङ्गादिवाहनारोहणपाटवं विविधायुधप्रयोगचणत्वं चौर्यदुरोदरादिकपटकलाप्रौढत्वं च तत्तदाचार्येभ्यः सम्यग्लब्ध्वा यौवनेन विलसन्तं कृत्येष्वनलसं तं कुमारनिकरं निरीक्ष्य महीवल्लभः सः 'अहं शत्रुजनदुर्लभः' इति परमानन्दममन्दमविन्दत॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते कुमारोत्पत्तिर्नाम प्रथम उच्छ्वासः॥ १॥

## द्वितीयोच्छ्वासः॥ २॥

अथैकदा वामदेवः सकलकलाकुशलेन कुसुमसायकसंशयितसौन्दर्येण कलितसोदर्येण साहसापहसितकुमारेण सुकुमारेण जयध्वजातपवारणकुलिशाङ्कित-

---

**एवमिति**। मिलितेन एकत्रीभूतेन। कुमारमण्डलेन बालकसमुदायेन। वालकेलीः कुमारक्रीडाः। अनुभवन् उपभुञ्जानः। अधिरूढानि अनेकानि वाहनानि अश्वादीनि येनैतादृशः। अनुक्रमेण क्रमशः। संस्कारजातं संस्कारकलापम्। अलभत प्रापत्। 'डुलभष् प्राप्तौ'। लिपिज्ञानमक्षरपरिचयम्। 'लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ' इत्यमरः। पाण्डित्यं नैपुण्यम्। कौटिल्यश्चाणक्याचार्यस्तेन कृते कामन्दकीयादिनीत्या नीतिशास्त्रस्य पटले कौशलं दाक्ष्यम्। संगीतसाहित्याभ्यां हारित्वमितरजनमनोवशीकरत्वम्। मायाप्रपञ्चेन मायाजालेन वित्तो मायाप्रपञ्चचञ्चुः तस्य भावम्। 'तेन वित्तश्चञ्चुप्चणपौ' इति चञ्चुप्प्रत्ययः। मातङ्गो गजः। तुरङ्गोऽश्वः। प्रयोगे वित्तः प्रयोगचणः। पूर्वेणैव चणप्प्रत्ययः। दुरोदरः द्यूतक्रीडा। तत्तदाचार्येभ्यस्तत्तद्विषयज्ञेभ्यः। सम्यक् साधुतया लब्ध्वा प्राप्य। अनलसम् अमन्दं चतुरमितीति यावत्। कुमारनिकरं बालकसमुदायम्। स राजहंसः। शत्रुजनदुर्लभः एतेषु शूरेषु कुमारेषु वर्तमानेषु सत्सु रिपुजनैरसाध्यः। अमन्दं विपुलम्। अविन्दत संप्राप। 'विद्लृ लाभे'॥

इति दशकुमारचरितव्याख्यायां मनोरमाख्यायां प्रथम उच्छ्वासः समाप्तः॥ १॥

**अथेति**। मन्त्रिकुमारनिवहैः साकं राजवाहस्य निखिलविद्याभ्यासानन्तरम्। एकदैकस्मिन्काले। 'सर्वैकान्यार्कियत्तदः काले दा' इति दाप्रत्ययः। सकलासु कलासु विद्यासु कुशलेन कृतिना। 'वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि' इत्यमरः। कुसुमसायकेन पुष्पधन्वनाऽपि संशयितमात्मन्येतादृशमस्ति वा नेति तर्कितं सौन्दर्यं लावण्यं यस्य तादृशेन। 'शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः' इत्यमरः। समानमुदरं येषां ते सोदरास्तेषां भावः सौदर्यम्, कलितं परस्पराबद्धं सोदर्यं भ्रातृवात्सल्यं येनैतादृशेन। साहसेनापहसितः दूरीकृतः कुमारः क्रौञ्चदारणो येन तादृशेन। 'षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः' इत्यमरः। सुकुमारेण

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

करेण कुमारनिकरेण परिवेष्टितं राजानमानतशिरसं समभिगम्य तेन तां कृतां परिचर्यामङ्गीकृत्य निजचरणकमलयुगलमिलन्मधुकरायमाणकाकपक्षं विदालिष्यमाणविपक्षं कुमारचयं गाढमालिङ्गय मितसत्यवाक्येन विहिताशीरभ्यभाषत— 'भूवल्लभ, भवदीयमनोरथफलमिव समृद्धलावण्यं तारुण्यं नुतामित्रो भवत्पुत्रोऽनुभवति । सहचरसमेतस्य नूनमेतस्य दिग्विजयारम्भसमय एषः । तदस्य सक-

---

कोमलेन । 'सुकुमारं तु कोमलं मृदुलं मृदु' इत्यमरः । जयध्वजो विजयपताका, आतपवारणं छत्रं, कुलिशं वज्रायुधम्, एतै राजचिह्नैरङ्कितौ चिह्नितौ करौ हस्तौ यस्य तथाभूतेन । 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' 'हैमं छत्रं त्वातपत्रम्' 'ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः' इत्यमरः । कुमारनिकरेण बालवृन्देन । 'स्तोमौघनिकरव्रात—' इति समूहपर्यायेष्वमरः । परिवेष्टितं व्याप्तम् । राजानं राजहंसम् । आनतं नम्रं शिरो मूर्धा यस्य तादृशम् । 'उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः । समभिगम्य अभिमुखं गत्वा । 'वा ल्यपि' इति वैकल्पिकत्वान्नात्रानुनासिकलोपः । कृतां रचिताम् । परिचर्यां शुश्रूषाम् । 'वरिवस्या तु शुश्रूषा परिचर्याप्युपासना' इत्यमरः । अङ्गीकृत्य स्वीकृत्य । निजचरणकमलयोः पादपद्मयोः युगले युग्मे मिलन्तः संलगन्तो मधुकरायमाणाः षट्पदा इवाचरन्तः काकपक्षाः शिखण्डका यस्य तथाभूतम् । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' 'सहस्रपत्रं कमलम्' 'युग्मं तु युगलं युगम्' 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः' 'काकपक्षः शिखण्डकः' इति सर्वत्रामरः । मधुकरा इवाचरन्ति मधुकरायमाणाः । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः । विदालिष्यमाणा उन्मूलयिष्यमाणाः विपक्षा अमित्राः येन तथाभूतम् । 'द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रवः' इत्यमरः । विपूर्वात् 'दल विशरणे' इत्यतः कर्मणि लृडन्तात् 'लृटः सद्वा' इति शानच् । कुमाराणां चयं गणम् । 'समुदायः समुदयः समवायश्चयो गणः' इत्यमरः । गाढं दृढतया । 'गाढबाढदृढानि च' इत्यमरः । आलिङ्गय आश्लिष्य । 'लिगि संगमे' । मितमल्पं सत्यमवितथं च यद्वाक्यं वचनं तेन । विहिता कृता आशीर्हिताशंसनं येन सः । 'आशीर्हिताशंसाऽहिदंष्ट्रयोः' इत्यमरः । अभ्यभाषत ब्रवीति स्म । 'भाष व्यक्तायां वाचि' । **भूवल्लभेति** । पृथिवीपते । भवदीयानां मनोरथानां मानसारविजयकामनानां फलममीप्सितसिद्धिमिव स्थितम् । समृद्धमतिबहुलं लावण्यं 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इत्युक्तलक्षणं सौन्दर्यं यस्मिन्नेतादृशम् । तरुणस्य यूनो भावस्तारुण्यम् । 'वयस्यस्तरुणो युवा' इत्यमरः । नुतानि श्लाघितानि मित्राणि सुहृदो येन तादृशः । 'अथ मित्रं सखा सुहृत्' इत्यमरः । अनुभवति भुङ्क्ते । सहचरैः मन्त्रिकुमारैः समेतस्य युतस्य । नूनमवश्यम् । एतस्य राजवाहनस्य । दिग्विजयारंभसमयः दिग्विजयाय समुचितः कालः । तत् तस्मात्कारणात् । सकलानां क्लेशानां दिग्विजयकालिकानां दुःखानां सहस्य सोढुमर्हस्य । दिशां विजयाय प्रयाणं प्रस्थानं क्रियतामनुष्ठीयताम् । अथैवायं त्वया प्रस्थापितव्य इति यावत् । **कुमारा इति** । मारो मदनः स इवाभिरामाः मनोहराः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

लक्षेशसहस्य राजवाहनस्य दिग्विजयप्रयाणं क्रियताम् ' इति । कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेन यानेनाभ्युदयाशंसं राजानमकार्षुः । तत्साचिव्यमितरेषां विधाय समुचितां बुद्धिमुपदिश्य शुभे मुहूर्ते सपरिवारं कुमारं विजयाय विससर्ज ।

राजवाहनो मङ्गलसूचकं शुभशकुनं विलोकयन्देशं कञ्चिदतिक्रम्य विन्ध्याटवीमध्यमविशत् । तत्र हेतिहतिकिणाङ्कं कालायसकर्कशकायं यज्ञोपवीतेनानुमेयविप्रभावं व्यक्तकिरातप्रभावं लोचनपरुषं कमपि पुरुषं ददर्श । तेन विहितपूजनो राजवाहनोऽभाषत—' ननु मानव, जनसङ्गरहिते मृगहिते घोरप्रचारे

---

'मदनो मन्मथो मारः' इत्यमरः। रामो दशरथपुत्रः श्रीरामः स आद्यो येषां ते लक्ष्मणादयः । तेषामिव पौरुषं पराक्रमः येषां ते । रुषा क्रोधेन । 'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः । भस्मीकृता दग्धा अरयो रिपवो यैः । ' रिपौ वैरिसपत्नारि–' इत्यमरः । रयेण वेगेनोपहसितास्तिरस्कृतः समीरणः मरुत् यैरेतादृशाः । 'शरीरस्था इमे रंहस्तरसी तु रयः स्यदः ' इत्यमरः । 'समीरमारुतमरुज्जगत्प्राणसमीरणाः ' इति च । रणं युद्धमभिमुखीकृत्य यातीत्येतादृशेन यानेन प्रस्थानेन । अभ्युदये दिग्विजये आशंसा प्रार्थना यस्यैतादृशम् । राजानं राजहंसम् । अकार्षुः कृतवन्तः । 'डुकृञ् करणे' इत्यतो लुङ् । तस्य राजवाहनस्य साचिव्यं सहायकत्वम् । इतरेषां नवानां मन्त्रिकुमाराणाम् । विधाय कल्पयित्वा । समुचितां समीचीनाम् । उपदिश्य शिक्षयित्वा । शुभे मङ्गलदायके । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । कुमारं राजवाहनम् । विससर्ज प्रेषयामास । 'सृज विसर्गे' ।

**राजेति** । शुभशकुनं दक्षिणाङ्गस्फुरणादिकम् । विलोकयन्पश्यन् । अतिक्रम्योल्लङ्घ्य । अविशत्प्रविष्टवान् । तत्र विन्ध्यारण्यमध्ये । हेतिहतिभिः शस्त्रप्रहारैः जाता ये किणाः मांसग्रन्थिभेदास्त एवाङ्काश्चिह्नानि यस्यैतादृशस्तम् । ' रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ' ' कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ' इत्यमरः । कालं च तदयश्च कालायसं लोहः । ' अनोश्मायःसरसां जातिसंज्ञयोः ' इत्यच् । कालायसमिव कर्कशं क्रूरः कायो देहो यस्य तादृशम् । ' लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी ' ' कर्कशं कठिनं क्रूरम् ' ' कायो देहः क्लीबपुंसोः ' इति सर्वत्रामरः । यज्ञोपवीतेन उपवीततन्तुनैव केवलमनुमेयः ' अयं ब्राह्मणः स्याद्यज्ञोपवीतित्वात् ' इति तर्कनीयः विप्रभावो ब्राह्मण्यं यस्य तादृशम् । व्यक्तः प्रत्यक्षतया दृश्यमानः किरातानां शबराणां प्रभावः प्रभुता यस्य तथाविधम् । नेत्रयोर्दर्शकलोचनयोः परुषं भयानकम् । ददर्शाद्राक्षीत् । ' दृशिर् प्रेक्षणे '। **तेनेति** । अटवीस्थपुरुषेण । विहितं संपादितं पूजनं सत्कृतिर्यस्य तादृशः । जनसङ्गेन रहिते वर्जिते । मृगेभ्यो व्याघ्रादिभ्यो हिते प्रिये । कान्तारे दुर्गमे वर्त्मनि । ' कान्तारं वर्त्म

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कान्तारे विन्ध्याटवीमध्ये भवानेकाकी किमिति निवसति । भवदंसोपनीतं यज्ञोपवीतं भूसुरभावं द्योतयति । हेतिहातीभिः किरातरीतिरनुमीयते । कथय किमेतत्' इति । 'तेजोमयोऽयं मानुषमात्रपौरुषो नूनं न भवति ' इति मत्वा स पुरुषस्तद्वयस्यमुखान्नामजनने विज्ञाय तस्मै निजवृत्तान्तमकथयत्––राजनन्दन, केचिदस्यामटव्यां वेदादिविद्याभ्यासमपहाय निजकुलाचारं दूरीकृत्य सत्यशौचादिधर्मव्रातं परिहृत्य किल्बिषमन्विष्यन्तः पुलिन्दपुरोगमास्तदन्नमुपभुञ्जाना बहवो ब्राह्मणब्रुवा निवसन्ति, तेषु कस्यचित्पुत्रो निन्दापात्रचारित्रो मातङ्गो नामाहं सह किरातबलेन जनपदं प्रविश्य ग्रामेषु धनिनः स्त्रीबालसहितानानीयाटव्यां बन्धने निधाय तेषां सकलधनमपहरन्नुद्धृत्य वीतदयो व्यचरम् । कदाचिदेकस्मिन्कान्तारे मदीयसहचरगणेन जिघांस्यमानं भूसुरमेकमवलोक्य दयायत्तचित्तोऽब्रवम्–' ननु पापाः न हन्तव्यो ब्राह्मणः '

---

दुर्गमम् ' इत्यमरः । एकाकी असहायः । ' एकादाकिनिच्चासहाये इति स्वार्थे आकिनिच् । ' एकाकी त्वेक एककः ' इत्यमरः । किमिति किमर्थम् । भवतोंऽसे उपनीतं स्थापितम् । यज्ञोपवीतं ब्रह्मसूत्रम् । द्योतयति प्रकाशयति । हेतिहतिभिः शस्त्राघातैः । किरातानां भिल्लानां रीतिः स्वभावोऽनुमीयते तर्क्यते । ' माङ् माने ' इत्यतः ' कर्माणि यकि ' घुमास्था–' इतीत्वम् । प्रचुरं तेजोऽस्मिन्नस्तीति तेजोमयः ' तत्प्रकृतवचने मयट् ' इति मयट् । मानुषमात्रमितरजनसाधारणं पौरुषं पुरुषकारो यस्यैतादृशो नूनं न भवति किन्त्वपूर्वविक्रमशालीति मत्वा विचार्य । वयसा तुल्या वयस्या मित्राणि । 'नौवयोधर्म--' इत्यादिना तुल्यार्थे यत् । तेषां मुखात् तद्द्वारा नामजनने राजवाहन इति नामधेयं मगधदेशावंतसात् राजहंसात् स्वमहिष्यां वसुमत्यामुत्पत्तिं च । विज्ञायावगत्य । निजवृत्तान्तमात्मकथाम् । ' वार्ता प्रवृत्तिर्वृत्तान्तः ' इत्यमरः । अकथयत् कथयामास । ' कथ वाक्यप्रबन्धे ' । **हे राजेति** । राजकुमार ! अस्यामटव्यां विन्ध्यारण्ये । ' अटव्यरण्यं विपिनम्' इत्यमरः । अपहाय परित्यज्य । निजकुलाचारं निजपूर्वजानुष्ठितमाचारं च दूरीकृत्य त्यक्त्वा । धर्मव्रातं धर्मसमुदायम् । किल्बिषं पापम् । ' अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषे ' इत्यमरः । अन्विष्यन्तः गवेषयन्तः । पुलिन्दा म्लेच्छजातिविशेषास्ते पुरोगमा अग्रेसरा येषां ते । ' भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः' 'पुरोगमः पुरोगामी' इत्यमरः । तेषां पुलिन्दादीनाम् अन्नमुपभुञ्जानाः अदन्तः।आत्मानं ब्राह्मणं ब्रुवन्ति ब्राह्मणब्रुवाः । नाममात्रेण ब्राह्मणाः वस्तुतः नीचा इति यावत् । निन्दापात्रं निन्दायोग्यं चारित्रमाचारः यस्यैतादृशः । जनपदं देशम् । ' नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः । बन्धने कारागृहे । 'कारा स्याद्बन्धनालये' इत्यमरः । निधाय निक्षिप्य । तेषां धनिनाम् । धनं वित्तम् । अपहरंश्चोरयन् । वीताऽपगता दया कृपा यस्मात् सः । ' कृपा दयाऽनुकम्पा स्यात् ' इत्यमरः । व्यचरं भ्रमन्नासम् । **कदेति** । कान्तारे वने । सहचरगणेनानुचरवर्गेण । जिघांस्यमानं हन्तुमिष्यमाणम् । ' हन हिंसागत्योः ' इत्यस्मान् सनि ' अज्झनगमां सनि ' इति दीर्घे कर्मणि यकि रूपम् । भूसुरं विप्रम् । अवलोक्य वीक्ष्य ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

इति। ते रोषारुणनयना मां बहुधा निरभर्त्सयन्। तेषां भाषणपारुष्यमसहिष्णुरहमवनिसुररक्षणाय चिरं प्रयुध्य तैरभिहतो गतजीवितोऽभवम्। ततः प्रेतपुरीमुपेत्य तत्र देहधारिभिः पुरुषैः परिवेष्टितं सभामध्ये रत्नखचितसिंहासनासीनं शमनं विलोक्य तस्मै दण्डप्रणाममकरवम्। सोऽपि मामवेक्ष्य चित्रगुप्तं नाम निजामात्यमाहूय तमवोचत्–'सचिव, नैषोऽमुष्य मृत्युसमयः। निन्दितचरितोऽप्ययं महीसुरनिमित्तं गतजीवितोऽभूत्। इतःप्रभृति विगलितकल्मषस्यास्य पुण्यकर्मकरणे रुचिरुदेष्यति। पापिष्ठैरनुभूयमानमत्र यातनाविशेषं विलोक्य पुनरपि पूर्वशरीरमनेन गम्यताम्' इति। चित्रगुप्तोऽपि तत्रतत्र संतप्तेष्वायसस्तम्भेषु वध्यमानान्, अत्युष्णीकृते विततशरावे तैले निक्षिप्यमाणान्, लगुडैर्जर्जरीकृतावयवान्, निशितटङ्कैः परितक्ष्यमाणानपि दर्शयित्वा पुण्यबुद्धिमुपदिश्य माममुञ्चत्। तदेव पूर्वशरीरमहं प्राप्तो महाटवीमध्ये शीतलोपचारं

दयाया आयत्तम् अधीनं चित्तं चेतः यस्य तादृशः सन्। 'अधीनो निघ्न आयत्तः' इत्यमरः। 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति च। अब्रवमवोचम्। पापाः हे नृशंसाः। 'नृशंसो घातुकः क्रूरः पापः' इत्यमरः। हन्तव्यो वध्यः। 'न ब्राह्मणं हन्यात्' इति धर्मशास्त्रात्। रोषेणामर्षेणारुणे ताम्रे नयने चक्षुषी येषां ते। 'कोपक्रोधामर्षरोषप्रतिघा', 'अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु' इत्यमरः। बहुधाऽनेकाभिर्विधाभिः। 'संख्याया विधार्थे धा' इति धाप्रत्ययः। निरभर्त्सयंस्तर्जयामासुः। भाषणपारुष्यं वचननैष्ठुर्यम्। 'निष्ठुरं परुषम्' इत्यमरः। असहिष्णुरसहनशीलः। 'अलंकृञ्–' इत्यादिनेष्णुच्। ततो नञ्समासः। अवनिसुररक्षणाय विप्रपरिपालनाय। चिरं बहुकालपर्यन्तम्। प्रयुद्ध्य तैः सह समरं विरचय्य। अभिहतस्ताडितः। गतजीवितो मृत इत्यर्थः। **तत इति**। प्रेतपुरीं यमनगरीं संयमिनीमुपेत्य प्राप्य। रत्नैर्मणिभिः खचितं संयोजितम्। आसीनमुपविष्टम्। शमनं यमराजम्। 'शमनो यमराड्यमः' इत्यमरः। दण्डवत् प्रणामं नमस्कारम्। अकरवं कृतवान्। सोऽपि यमोऽपि। आहूय आकार्य। अवोचदुवाच। मृत्युसमयः मरणकालः। निन्दितचरितः दुराचारः। महीसुरनिमित्तं विप्रमुद्दिश्य। विगलितकल्मषस्य धूतपापस्य। 'पापं किल्विषकल्मषम्' इत्यमरः। अस्य मातंगस्य। रुचिः प्रीतिः। उदेष्यति उत्पत्स्यते। 'इण् गतौ'। अतिशयेन पापाः पापिष्ठाः। 'अतिशायने तमबिष्ठनौ' इतीष्ठन्। अनुभूयमानं भुज्यमानम्। यातनाविशेषं दुःखविशेषम्। 'यातना तीव्रवेदना' इत्यमरः। विलोक्य दृष्ट्वा। संतप्तेषु प्रज्वलितेषु। आयसस्तम्भेषु लोहस्थूणासु। अत्युष्णीकृते नितान्तं सन्तप्ते। वितते विस्तृते। शरावे पात्रविशेषे। तैलेस्नेहे निक्षिप्यमाणान् प्रणुद्यमानान्। लगुडैर्दण्डैः। जर्जरीकृताश्चूर्णीकृताः अवयवा अङ्गानि येषां तादृशान्। 'अङ्गं प्रतीकोऽवयवः' इत्यमरः। निशितैस्तीक्ष्णैष्टङ्कैः पाषाणदारणयन्त्रैः 'टंकः पाषाणदारणः' इत्यमरः। परितक्ष्यमाणांस्तनूक्रियमाणान्। 'तक्ष तनूकरणे' अमुञ्चन्मुक्तवान्। 'मुच्लृ मोक्षणे' इत्यतो लङ्। 'शे मुचादीनाम्' इति नुम्। **तदेवेति**। प्राप्तोऽधिगतः। शीतलं शीतम्। रचयता कुर्वता। विप्रेण ब्राह्मणेन। शिलायां

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

रचयता महीसुरेण परीक्ष्यमाणः शिलायां शायितः क्षणमतिष्ठम् । तदनु विदितोदन्तो मदीयवंशबन्धुगणः सहसागत्य मन्दिरमानीय मामपक्रान्तव्रणमकरोत् । द्विजन्मा कृतज्ञो मह्यमक्षरशिक्षां विधाय विविधागमतन्त्रमाख्याय कल्मषक्षयकारणं सदाचारमुपदिश्य ज्ञानेक्षणगम्यमानस्य शशिखण्डशेखरस्य पूजाविधानमभिधाय पूजां मत्कृतामङ्गीकृत्य निरगात् । तदारभ्याहं किरातकृतसंसर्गं बन्धुकुलवर्गमुत्सृज्य सकललोकैकगुरुमिन्दुकलावतंसं चेतसि स्मरन्नस्मिन्कानने दूरीकृतकलङ्को वसामि । 'देव, भवते विज्ञापनीयं रहस्यं किंचिदस्ति । आगम्यताम्' इति । स वयस्यगणादपनीय रहसि पुनरेनमभाषत—'राजन्, अतीते निशान्ते गौरीपतिः स्वप्नसंनिहितो निद्रामुद्रितलोचनं विबोध्य प्रसन्नवदनकान्तिः प्रश्रयानतं मामवोचत्—'मातङ्ग, दण्डकारण्यान्तरालगामिन्यास्तटिन्यास्तीरभूमौ सिद्धसाध्याराध्यमानस्य स्फटिकलिङ्गस्य पश्चादद्रिपतिकन्यापदपंक्तिचिह्नितस्याश्मनः सविधे विधेराननमिव किमपि विलं विद्यते । तत्प्रविश्य तत्र निक्षिप्तं

---

पाषाणे । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः । शायितः शयनं कारितः । तदनु तदनन्तरम् । विदितः ज्ञात उदन्तः प्रवृत्तिर्येन तादृशः । सहसा सत्वरम् । मन्दिरमानीय गृहं प्रापय्य । अपक्रान्ता निर्गता व्रणा ईर्माणि यस्य तादृशम् । अकरोच्चकार । द्विजन्मा महीसुरः । कृतमुपकारं जानाति इति कृतज्ञः । अक्षरशिक्षां लिप्यभ्यासम् । कृत्वा विधाय । विविधागमानां नानाशास्त्राणां तन्त्रं सिद्धान्तम् । 'तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे' इत्यमरः । आख्याय उपदिश्य । 'चक्षिङ् व्यक्तायां वाचि' इत्यस्य 'चक्षिङः ख्याञ्' इति ख्यादेशः । कल्मषस्य पापस्य । क्षये नाशे । कारणं निमित्तभूतम् । सदाचारं शिष्टाचारम् । उपदिश्य शिक्षयित्वा । ज्ञानेक्षणेन विज्ञानचक्षुषा । गम्यमानस्य ज्ञातव्यस्य । शशिखण्डः चन्द्रकला शेखरोऽवतंसो यस्य महादेवस्येत्यर्थः । पूजाविधानं पूजाविधिम् । अभिधाय कथयित्वा । पूजां सपर्याम् । निरगान्निर्जगाम । तदारभ्य तस्माद्दिनात्प्रभृति । किरातैः सह कृतः संसर्गः संबन्धः येन तथाविधम् । बन्धुकुलवर्गं ज्ञातिसमुदायम् । 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरः । उत्सृज्य परिहृत्य । इन्दुकलावतंसं चन्द्रशेखरम् । चेतसि मनसि । स्मरंश्चिन्तयन् । कानने वने । दूरीकृतकलङ्कः धूतकल्मषः सन् । **हे देवेति** । विज्ञापनीयम् अवश्यकथनीयम् । रहस्येकान्ते भवं रहस्यम् । गोप्यो वृत्तान्त इत्यर्थः । 'रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु' इत्यमरः । आगम्यतां मया साकमागमनं क्रियताम् । स मातङ्गः । वयस्यगणान्मित्रवर्गादपनीय राजवाहनमन्यत्र नीत्वा । रहसि एकान्ते । अतीतेऽतिक्रान्ते । निशान्ते प्रभातकाले । गौरीपतिर्महेश्वरः । स्वप्ने निद्रायां सन्निहितः कृतसान्निध्यः । विबोध्य उत्थाप्य । प्रश्रयेण विनयेनानतं नम्रम् । अवोचदुवाच । अन्तरालं मध्यभागः । तटिन्या नद्याः । 'तटिनी ह्रादिनी धुनिः' इत्यमरः । तीरभूमौ तटोद्देशे । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इत्यमरः । सिद्धैः साध्यैश्च देवयोनिविशेषैः । आराध्यमानस्योपास्यमानस्य । पश्चात्पृष्ठदेशे । अद्रिपतिकन्या हिमवत्पुत्री पार्वती तस्याः पदपङ्क्त्या चरणविन्यासश्रेण्या । चिह्नितस्याङ्कितस्य । अश्मनः पाषा-



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

ताम्रशासनं शासनं विधातुरिवसमादाय विधिं तदुपदिष्टं दिष्टविजयमिव विधाय पातालोकाधीश्वरेण भवता भवितव्यम्। भवत्साहाय्यकरो राजकुमारोऽद्य श्वो वा समागमिष्यति' इति। तदादेशानुगुणमेव भवदागमनमभूत्। साधनाभिलाषिणो मम तोषिणो रचय साहाय्यम्' इति। 'तथा' इति राजवाहनः साकं मातङ्गेन नमितोत्तमाङ्गेन विहायार्धरात्रे निद्रापरतन्त्रं मित्रगणं वनान्तरमवाप। तदनु तदनुचराः कल्ये साकल्येन राजकुमारमनवलोकयन्तो विषण्णहृदयास्तेषु तेषु वनेषु सम्यगन्विष्यानवेक्षमाणा एतदन्वेषणमनीषया देशान्तरं चरिष्णवोऽतिसहिष्णवो निश्चितपुनःसंकेतस्थानाः परस्परं वियुज्य ययुः।

लोकैकवीरेण कुमारेण रक्ष्यमाणः संतुष्टान्तरङ्गो मातङ्गोऽपि बिलं शशिशेखरकथिताभिज्ञानपरिज्ञातं निःशङ्कं प्रविश्य गृहीतताम्रशासनो रसातलं पथा

---

णस्य। सविधे समीपे। विधेर्दैवस्य। आननं मुखमिव। बिलं छिद्रम्। प्रविश्य प्रवेशं कृत्वा। निक्षिप्तं निहितम्। ताम्रफलके विलिखितं शासनं शिक्षाम्। समादाय गृहीत्वा। विधिं विधानम्। भवितव्यं भवितुमर्हम्। श्वः आगामिदिवसे। तस्य परमेश्वरस्य आदेशस्य अनुगुणमनुरूपम्। अभूत् जातम्। साधनाभिलाषिणः भवत्साहाय्यरूपां सामग्रीमभिकांक्षमाणस्य। तोषिणः भवदागमेन जातानन्दस्य। रचय कुरु। साकं सह 'साकं सत्रा समं सह' इत्यमरः। नमितोत्तमाङ्गेन नम्रशिरसा। 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः। विहाय त्यक्त्वा। रात्रेरर्धमर्धरात्रः। 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इति समासान्तोऽच्। 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम्। तस्मिन्निशीथकाले। निद्रापरतन्त्रं स्वापाधीनम्। मित्रगणं सुहृद्वर्गम्। अन्यद्वनं वनान्तरम्। 'मयूरव्यंसकादयश्च' इति समासः। अवाप प्राप्तवान्। **तदन्विति**। ततोऽनन्तरम्। तस्य राजवाहनस्यानुचरा अनुगामिनः सचिवकुमाराः। कल्ये प्रातःसमये 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः। साकल्येन सकलास्वपि दिक्षु। अनवलोकयन्तः अनवेक्षमाणाः। विषण्णं दुःखाभिभुतं हृदयं चेतः येषां तादृशाः सन्तः। सम्यक् साधुतयाऽन्विष्य गवेषयित्वा। एतस्य राजवाहनस्यान्वेषणमनीषया मार्गणबुद्ध्या। देशान्तरमन्यं देशम्। चरन्ति तच्छीलाश्चरिष्णवः। 'अलंकृञ्--' इत्यादिनेष्णुच्। अत्यन्तं सहनशीलाः अतिसहिष्णवः पूर्ववदिष्णुच्। निश्चितं निर्धारितं पुनः संकेतस्य कालान्तरीयसंमेलनसंकेतस्य स्थानं यैस्तादृशाः सन्तः। वियुज्य विभक्ता भूत्वा। ययुः प्रयाणं कर्तुमारेभिरे। 'या प्रापणे'।

**लोकेति**। लोके भुवने एकवीरेण प्रधानशूरेण। 'पूर्वकालैकसर्व--' इति सामान्यतः प्राप्तमपि एकशब्दस्य पूर्वनिपातित्वं बाधित्वा 'पूर्वापरप्रथम--' इति वीरशब्दस्य पूर्वनिपाते प्राप्ते 'विशेषणं विशेष्येण बहुलम्' इत्यत्र बहुलग्रहणादेकस्यैव पूर्वं प्रयोगः 'एके मुख्यान्यकेवलाः' इत्यमरः। कुमारेण राजवाहनेन। रक्ष्यमाणः परिपाल्यमानः। 'रक्ष पालने' इत्यस्मात्कर्मणि शानच्। संतुष्टान्तरङ्गः प्रसन्नमनाः। बिलं छिद्रम्। शशिशेखरेण महेश्वरेण। कथितं यदभिज्ञानं लक्षणं तेन परिज्ञातं विज्ञातम्। निःशङ्कं शङ्कां विहाय। गृहीतं स्वायत्तीकृतं ताम्रशासनं येन तादृशः। रसातलं पातालम्। 'अधोभुवनपातालं बलिसद्म रसातलम्'

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तेनैवोपेत्य तत्र कस्याचित्पत्तनस्य निकटे केलीकाननकासारस्य विततसारसस्य समीपे नानाविधेनेशशासनविधानोपपादितेन हविषा होमं विरच्य प्रत्यूहपारिहारिणि सविस्मयं विलोकयति राजवाहने समिदाज्यसमुज्ज्वलिते ज्वलने पुण्यगेहं देहं मन्त्रपूर्वकमाहुतीकृत्य तडित्समानकान्तिं दिव्यां तनुमलभत। तदनु मणिमयमण्डनमण्डलमण्डिता सकललोकललनाकुलललामभूतकन्यका काचन विनीतानेकसखीजनानुगम्यमाना कलहंसगत्या शनैरागत्यावनिसुरोत्तमाय मणिमेकमुज्ज्वलाकारमुपायनीकृत्य तेन 'का त्वम्' इति पृष्टा सोत्कण्ठा कलकण्ठस्वनेन मन्दंमन्दमुदञ्जलिरभाषत–'भूसुरोत्तम, अहमसुरोत्तमनन्दिनी कालिन्दी नाम। मम पितास्य लोकस्य शासिता महानुभावो निजपराक्रमासहिष्णुना

---

इत्यमरः। पथा मार्गेण। 'अयनं वर्त्ममार्गाध्वपन्थानः' इत्यमरः। उपेत्य गत्वा। तत्र पाताले। पत्तनस्य नगरस्य। 'पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्' इत्यमरः। निकटे आसन्नप्रदेशे। केलीकाननं क्रीडावनं तस्य कासारः सरः तस्य। 'कासारः सरसी सरः' इत्यमरः। वितताः परितो निषण्णाः सारसाः पक्षिविशेषा यत्रैतादृशस्य। समीपे निकटे। नानाविधाः प्रकारा यस्यानेकप्रकारेण। ईशशासनविधानेन महादेवाज्ञानुसारतः। उपपादितेन संपादितेन। हविषा होमद्रव्येण। हूयते इति हविराज्यादि द्रव्यजातम्। होमं हवनक्रियां विरचय्य संपाद्य। प्रत्यूहपरिहारिणि विघ्नानां निवारके। 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। सविस्मयं साश्चर्यम्। 'विस्मयोऽद्भुतमाश्चर्यम्' इत्यमरः। विलोकयति पश्यति सति। समिद्भिरेधोभिराज्येन सर्पिषा च समुज्ज्वलितेऽत्यन्तं दीपिते ज्वलनेऽग्नौ। 'कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्' इत्यमरः। पुण्यगेहं सुकृतास्पदं देहं शरीरम्। मन्त्रः पूर्वो यस्मिंस्तथा। आहुतीकृत्य हुत्वा। तडिता विद्युता समाना कान्तिः शोभा यस्याः सा तडित्समानकान्तिः ताम्। दिवि भवां दिव्याम्। 'दिगादिभ्यो यत्' इति यत्। तनुं शरीरम्। 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। अलभत लब्धवान्। 'डुलभष् प्राप्तौ'। **तदन्विति**। मणिमयैः रत्नविकारैर्मण्डनमण्डलैर्भूषणजालैर्मण्डितालंकृता।'अलंकारस्त्वाभरणं परिष्कारो विभूषणम्। मण्डनं च' इत्यमरः। ललनाकुलललामभूता प्रमदावृन्दभूषणायमाणा 'ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु' इत्यमरः। कन्यका काचित्कुमारी। विनीता विनययुक्ता। अनुगम्यमानाऽनुस्रियमाणा। कलहंसस्य कादम्बपक्षिण इव गत्या गमनेन। 'कादम्बः कलहंसः स्यात्' इत्यमरः। शनैर्मन्दम्। आगत्य निकटं प्राप्य। अवनिसुरोत्तमाय ब्राह्मणश्रेष्ठाय मातङ्गाय। मणिं रत्नम्। उज्ज्वलाकारं दीप्तम्। उपायनीकृत्य उपहारत्वेन समर्प्य। तेन मातङ्गेन। पृष्टाऽनुयुक्ता। सोत्कण्ठा सकौतुका। कलोऽव्यक्तमधुरः कण्ठः कण्ठरवः यस्य स कलकण्ठः कोकिलः तस्येव स्वनेन शब्देन। 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः। उदञ्जलिः प्रोद्गतकरयुगला सती। अभाषत वक्तुमारभते स्म। 'भाष व्यक्तायां वाचि'। हे **भूसुरोत्तमेति**। अस्य पातालस्य। शासिता शिक्षकः राजेति यावत्। 'शासु अनुशिष्टौ' इत्यतः कर्तरि तृच्। महाननुभावः प्रभावः यस्य सः। निज-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

विष्णुना दूरीकृतामरे समरे यमनगरातिथिरकारि। तद्वियोगशोकसागरमग्नां मामवेक्ष्य कोऽपि कारुणिकः सिद्धतापसोऽभाषत—'बाले, कश्चिद्दिव्यदेहधारी मानवो नवो वल्लभस्तव भूत्वा सकलं रसातलं पालयिष्यति' इति। तदादेशं निशम्य घनशब्दोन्मुखी चातकी वर्षागमनमिव तवालोकनकांक्षिणी चिरमातिष्ठम्। मन्मनोरथफलायमानं भवदागमनमवगम्य मद्राज्यावलम्बभूतामात्यानुमत्या मदनकृतसारथ्येन मनसा भवन्तमागच्छम्। लोकस्यास्य राजलक्ष्मीमङ्गीकृत्य मां तत्सपत्नीं करोतु भवान्' इति। मातङ्गोऽपि राजवाहनानुमत्या तां तरुणीं परिणीय दिव्याङ्गनालाभेन हृष्टतमो रसातलराज्यमुररीकृत्य परमानन्दमाससाद।

वञ्चयित्वा वयस्यगणं समागतो राजवाहनस्तदवलोकनकौतूहलेन भुवं गमिष्णुः कालिन्दीदत्तं क्षुत्पिपासादिक्लेशनाशनं मणिं साहाय्यकरणसन्तुष्टान्मातङ्गाल्लब्ध्वा

---

पराक्रमस्य मत्पितृविक्रमस्यासहिष्णुना असहनशीलेन। 'अलंकृञ्–' इतीष्णुच्। विष्णुना भगवता नारायणेन दूरीकृताः पलायिता अमरा देवा यस्मात्तादृशे समरे रणे। 'अस्त्रियां समरानीकरणाः' इत्यमरः। यमनगरातिथिरकारि पञ्चत्वं प्रापितः इति भावः। 'डुकृञ् करणे' इत्यस्मात्कर्मणि लुङ्। तस्य मत्पितुः। वियोगेन विरहेणोत्पन्नो यः शोकः मन्युः तस्मिन्नेव सागरेऽर्णवे मग्नां निमज्जन्तीम्। अवेक्ष्य दृष्ट्वा। कारुणिको दयालुः। दिव्यमद्भुतं देहं कायं धारयति इति दिव्यदेहधारी। 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः। नवो नूतनः। वल्लभः प्रियः। रसातलं पाताललोकम्। पालयिष्यति गोपायिष्यति। 'पाल रक्षणे' तदादेशं सिद्धतापसाज्ञाम्। निशम्याकर्ण्य। घनशब्दोन्मुखी मेघरवं प्रतीक्षमाणा। चातकी सारङ्गपक्षिणः स्त्री। वर्षागमनं वृष्टिपातम्।'वृष्टिर्वर्षम्' इत्यमरः। तवालोकनकांक्षिणी भवद्दर्शनेच्छावती। चिरं बहुकालम्। आतिष्ठं स्थितवत्यस्मि। 'ष्ठा गतिनिवृत्तौ'। 'पाघ्राध्मास्था–' इत्यादिना तिष्ठादेशः। मन्मनोरथस्य मदीयकामनायाः फलायमानं फलरूपम्। अवगम्य विबुध्य। मद्राज्यस्यावलम्बभूत आश्रयीभूतो योऽमात्यः सचिवस्तस्य। अनुमत्या संमत्या। मदनेन मन्मथेन कृतं रचितं सारथ्यं रथनियन्तृत्वं यस्य। 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः। सारथेः कर्म भावो वा सारथ्यम्। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ्। एतादृशेन मनसा चित्तेन। आगच्छमागतवती। 'गम्लृ गतौ' इत्यतो लङि 'इषुगमियमां छः' इति छः। राजलक्ष्मीं नृपसंपत्तिम्। अङ्गीकृत्य स्वीकृत्य। समानः पतिर्यस्याः सा सपत्नी। 'नित्यं सपत्न्यादिषु' इति ङीब्नुकौ। तस्या राजलक्ष्म्याः सपत्नीम्। करोतु विदधातु। उभे अप्यङ्गीकृत्य यथायोग्यं परिपालयतु भवानित्यर्थः। **मातङ्ग इति**। राजवाहनस्य अनुमत्या संमत्या। तरुणीं युवतीम्। परिणीय पाणिग्रहणं कृत्वा। दिव्याङ्गनालाभेन अपूर्वसुन्दरीप्राप्त्या। अतिशयेन हृष्ट इति हृष्टतमः। 'अतिशायने तमबिष्ठनौ' इति तमप्। रसातलराज्यं पातालराज्यम्। उररीकृत्याङ्गीकृत्य। आससाद प्राप। आङ्पूर्वात् 'षद्लृ विशरणगत्यवसादनेषु' इत्यतो लिट्।

**वञ्चयित्वेति**। प्रतार्य। वयस्यगणे मित्रवर्गम्। तस्य मित्रवृन्दस्यावलोकने दर्शने कौतू-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कंचनाध्वानमनुवर्तमानं तं विसृज्य विलपथेन तेन निर्ययौ । तत्र च मित्रगणमनवलोक्य भुवं बभ्राम । भ्रमंश्च विशालोपशल्ये कमप्याक्रीडमासाद्य तत्र विशिश्रमिषुरान्दोलिकारूढं रमणीसहितमाप्तजनपरिवृतमुद्याने समागतमेकं पुरुषमपश्यत् । सोऽपि परमानन्देन पल्लवितचेता विकसितवदनारविन्दः 'मम स्वामी सोमकुलावतंसो विशुद्धयशोनिधी राजवाहन एषः । महाभाग्यतयाऽकाण्ड एवास्य पादमूलं गतवानस्मि । संप्रति महान्नयनोत्सवो जातः' इति ससंभ्रममान्दोलिकाया अवतीर्य सरभसपदविन्यासविलासिहर्षोत्कर्षचरितास्त्रिचतुरपदान्युद्गतस्य चरणकमलयुगलं गलदुल्लसन्मल्लिकावलयेन मौलिना पस्पर्श । प्रमोदाश्रुपूर्णो राजा पुलकिताङ्गं तं गाढमालिङ्ग्य 'अये सौम्य सोमदत्त' इति व्याजहार । ततः कस्यापि पुंनागभूरुहस्य छायाशीतले तले संविष्टेन मनुजनाथेन सप्रणय-

---

ह्लेन कुतुकेन । भुवं भूलोकम् । गमिष्णुर्गमिष्यन् । कालिन्द्या मातङ्गपत्न्या । दत्तं समर्पितम् । क्षुत् बुभुक्षा, पिपासा जलपानेच्छा, एतदादिक्लेशं दुःखं नाशयतीति क्लेशनाशनम् । मणिं रत्नम् । साहाय्यकरणेन सन्तुष्टः जातानन्दो यो मातङ्गस्तस्मात् । लब्ध्वा प्राप्य । अध्वानं मार्गम् । अनुवर्तमानमनुसृत्यागच्छन्तं तं मातङ्गनामानं ब्राह्मणम् । विसृज्य त्यक्त्वा । निर्ययौ बहिराजगाम । तत्रेति । विन्ध्याटव्याम् । अनवलोक्य अदृष्ट्वा । बभ्राम भ्राम्यति स्म । 'भ्रमु संचलने' विशालाया नगर्या उपशल्ये ग्रामान्तदेशे । 'ग्रामान्तमुपशल्यं स्यात्' इत्यमरः । आक्रीडमुद्यानम् । 'पुमानाक्रीड उद्यानम्' इत्यमरः। आसाद्य गत्वा । विश्रमितुमिच्छुर्विशिश्रमिषुः । 'श्रमु तपसि खेदे च' विपूर्वादस्मात्सन्नन्तात 'सनाशंसाभिक्ष उः' इत्युप्रत्ययः । आन्दोलिकारूढं दोलामधिरुह्य वर्तमानम् । रमणीसहितं सस्त्रीकम् । उद्याने उपवने । अपश्यत् ददर्श । 'दृशिर् प्रेक्षणे' । 'पाघ्राध्मा—' इति दृशः पश्यादेशः । पल्लवितं प्रफुल्लं चेतो यस्य । सोमकुलावतंसः चन्द्रवंशभूषणम् । विशुद्धस्य यशसः कीर्तेर्निधिः निक्षेपस्थानम् । महाभाग्यतया अतिदैवानुकूल्येन । अकाण्डे अकाले । 'काण्डोऽस्त्रीदण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । अस्य राजवाहनस्य । संप्रति इदानीम् । 'एतर्हि संप्रतीदानीमधुना सांप्रतं तथा' इत्यमरः । नयनोत्सवो नेत्रयोरानन्दः । जातः उत्पन्नः । ससंभ्रमं सत्वरम् । आन्दोलिकाया दोलायाः । अवतीर्य अवरोहणं कृत्वा । सरभसः सवेगः यः पदविन्यासश्चरणनिक्षेपस्तेन विलासि विलसनशीलं, हर्षोत्कर्षेण आनन्दातिरेकेण विशिष्टं च चरितं संचारः राजवाहनं प्रति यस्यैतादृशः सन् । 'मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः' इत्यमरः । त्रीणि वा चत्वारि त्रिचतुराणि । 'संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये' इति समासे 'त्र्युपाभ्यां चतुरोऽजिष्यते' इति समासान्तोऽच् । उद्गतस्योन्मुखतयाऽऽगतस्य । चरणकमलयुगलं पादपद्मद्वन्द्वम् । गलन्नधः पतन् अत एव उल्लसन् विलसन् मल्लिकावलयः पुष्पविशेषमाल्यमर्धचन्द्राकारं यस्मिन्नेतादृशेन मौलिना शिरसा । 'मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम्' इति मेदिनी । पस्पर्श स्पृष्टवान् । प्रमोदाश्रुपूर्णः आनन्दबाष्पाकुलः । पुलकिताङ्गं रोमाञ्चितगात्रम् । गाढं दृढम् । आलिङ्ग्याश्लिष्य । व्याजहार उक्तवान् । **तत इति** । पुन्नागभूरुहस्य नागकेसरवृक्षस्य । छायया शीतले शीते ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मभाणि—'सखे, कालमेतावन्तं देशे कस्मिन्, प्रकारेण केनास्थायि भवता? संप्रति कुत्र गम्यते, तरुणी केयम्, एष परिजनः संपादितः कथम्, कथय' इति। सोऽपि मित्रसंदर्शनव्यतिकरापगतचिन्ताज्वरातिशयो मुकुलितकरकमलः सविनयमात्मीयप्रचारप्रकारमवोचत् ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते द्विजोपकृतिर्नाम द्वितीय उच्छ्वासः ॥ २ ॥

## तृतीयोच्छ्वासः ॥ ३ ॥

'देव' भवच्चरणकमलसेवाभिलाषीभूतोऽहं भ्रमन्नेकस्यां वनावनौ पिपासाकुलो लतापरिवृतं शीतलं नदसलिलं पिबन्नुज्ज्वलाकारं रत्नं तत्रैकमद्राक्षम्। तदादाय गत्वा कंचनाध्वानमम्बरमणेरत्युष्णतया गन्तुमक्षमो वनेऽस्मिन्नेव किमपि देवतायतनं प्रविष्टो दीनाननं बहुतनयसमेतं स्थविरमहीसुरमेकमवलोक्य कुश-

---

तलेऽधः प्रदेशे। संविष्टेनासीनेन। सप्रणयं सस्नेहम्। अभाणि अभाषि। अस्थायि स्थितम्। संप्रतीदानीम्। कथय ब्रूहि। 'कथ वाक्यप्रबन्धे'। सोऽपि सोमदत्तोऽपि। मित्रस्य राजवाहनस्य संदर्शनव्यतिकरेण दर्शनोपलम्भेनापगतो दूरीभूतः चिन्ताया एव ज्वरस्यातिशय आधिक्यं यस्य। मुकुलितकरकमलः कृतप्रणामः। आत्मीयः निजः यः प्रचारः देशाटनं तस्य प्रकारं विधाम्। अवोचत् उक्तवान् 'ब्रूञ् व्यक्तायां वाचि'॥

इति दशकुमारचरितव्याख्यायां मनोरमाख्यायां द्वितीय उच्छ्वासः समाप्तः ॥ २ ॥

### अथ तृतीय उच्छ्वासः ॥ ३ ॥

**देवेति**। हे राजन्! 'राजा भट्टारको देवः' इत्यमरः। भवतः चरणकमलयोः पादपद्मयोः सेवायां शुश्रूषायामभिलाषीभूतः अत्याग्रही। अहं सोमदत्तः। भ्रमन्पर्यटन्। 'भ्रमु संचलने'। वनावनौ काननभूमौ। 'गहनं काननं वनम्' 'क्ष्माऽवनिर्मेदिनी मही' इत्यमरः। पातुमिच्छा पिपासा तयाऽऽकुलः पीडितः। 'पा पाने' इत्यतः सन्नन्तात् 'अ प्रत्ययात्' इत्यकारः प्रत्ययः। 'उदन्या तु पिपासा तृट् तर्षः' इत्यमरः। लताभिर्व्रततिभिः परिवृतमावृतमतएव शीतलं तुषारम्। 'वल्ली तु व्रततिर्लता' 'तुषारः शीतलः शीतः' इत्यमरः। नदसलिलं सरिद्विशेषस्थं जलम्। 'सलिलं कमलं जलम्' पिबन् तृष्णां निवारयन्। 'पा पाने' इत्यतः शता। 'पाघ्राध्मा--' इति पिबादेशः। उज्ज्वलाकारं प्रस्फुरत्स्वरूपम्। रत्नं मणिम्। तत्र नदकूले। अद्राक्षमपश्यम्। 'दृशिर् प्रेक्षणे' लुङ्। आदाय गृहीत्वा। अध्वानं मार्गम्। अम्बरमणेः आकाशे रत्नवत्प्रकाशमानस्य सूर्यस्येत्यर्थः। 'व्योम पुष्करमम्बरम्' इत्यमरः। अत्युष्णतया तीक्ष्णातपतया। गन्तुं प्रयाणं कर्तुम्। अक्षमोऽसमर्थः। वने कानने। देव एव देवता तस्या आयतनमालयम्। 'देवात्तल्' इति स्वार्थे तल्प्रत्ययः। 'चैत्यमायतनं तुल्ये' इति गृहविशेषपर्यायेऽमरः। प्रविष्टः गतः। प्रपूर्वात् 'विश प्रवेशने' इत्यतः कर्तरि 'गतिबुद्धि-' इत्यादिना क्तः। दीनं कृपणमाननं मुखं यस्य तादृशम्। 'आननं लपनं मुखम्' इत्यमरः। बहुभिः प्रभूतैस्तनयैः पुत्रैः समेतं संयुक्तम्। 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः। स्थविरमहीसुरं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

लमुदितदयोऽहमपृच्छम् । कार्पण्यविवर्णवदनो महदाशापूर्णमानसोऽवोचदग्रजन्मा--'महाभाग, सुतानेतान्मातृहीनाननेकैरुपायै रक्षन्निदानीमस्मिन्कुदेशे भैक्ष्यं संपाद्य ददद्देतेभ्यो वसामि शिवालयेऽस्मिन्' इति । 'भूदेव, एतत्कटकाधिपती राजा कोऽस्य देशस्य, किंनामधेयः, किमत्रागमनकारणमस्य' इति पृष्टोऽभाषत महीसुरः--'सौम्य, मत्तकालो नाम लाटेश्वरो देशस्यास्य पालयितुर्वीरकेतोस्तनयां वामलोचनां नाम तरुणीरत्नमसमानलावण्यं श्रावंश्रावमवधूतदुहितृप्रार्थनस्य तस्य नगरीमरौत्सीत् । वीरकेतुरपि भीतो महदुपायनमिव तनयां मत्तकालायादात् । तरुणीलाभहृष्टचेता लाटपतिः 'परिणेया निजपुर एव' इति निश्चित्य गच्छन्निजदेशं प्रति संप्रति मृगयादरेणात्र वने सैन्यवासमकारयत् ।

---

वृद्धब्राह्मणम् । ' प्रवयाः स्थविरो वृद्धः ' इत्यमरः । अवलोक्य दृष्ट्वा । कुशलं क्षेमवार्ताम् । ' भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ' इत्यमरः । उदिता दया यस्य स जातानुकम्पः सन् । ' कृपा दयाऽनुकम्पा स्यात् ' इत्यमरः । अपृच्छं पृष्टवान् । ' प्रच्छ ज्ञीप्सायाम् ' इत्यतो लङि ' ग्रहिज्या--' इति संप्रसारणम् । कार्पण्येन दैन्येन विवर्णं निष्कान्ति वदनमाननं यस्यैतादृशः । महति कार्ये आशया तृष्णया पूर्णं व्याप्तं मानसं चित्तं यस्य तथाविधः । अवोचदुवाच । अग्रजन्मा ब्राह्मणः । ' द्विजात्यग्रजन्मभूदेववाडवाः ' इत्यमरः । **महाभागेति** । हे भाग्यशालिन् ! सुतान्पुत्रान् । मातृहीनान् जननीरहितान् । ' जनयित्री प्रसूर्माता जननी ' इत्यमरः । रक्षन्परिपालयन् । इदानीमधुना । कुदेशे निन्द्यप्रदेशे । भैक्ष्यं भिक्षाटनेन लभ्यं भक्ष्यपदार्थम् । संपाद्य समासाद्य । ददद्वितरन् । ' नाभ्यस्ताच्छतुः ' इत्यनेनात्र न नुम् । एतेभ्यः पुत्रेभ्यः । शिवालये शम्भुमन्दिरे । एतस्य समीपे दृश्यमानस्य कटकस्य शिबिरस्याधिपतिः प्रभुः । किं नामधेयं यस्य सः । आगमनस्य कारणं निमित्तं किम् । अभाषतोवाच । सौम्य हे भद्रमुख ! पालयितू राज्ञः । तनयां पुत्रीम् । तरुणीषु युवतिषु रत्नं प्रकृष्टाम् । 'रत्नं स्वजातिश्रेष्ठेऽपि ' इत्यमरः । असमानमुपमारहितं लावण्यं ' मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इत्युक्तलक्षणं सौन्दर्यं यस्य तथाविधम् । श्रावंश्रावमसकृदाकर्ण्य । ' आभीक्ष्ण्ये णमुल् च ' इति णमुल् । ' नित्यवीप्सयोः' इति द्वित्वं च । अवधूता तिरस्कृता दुहितुः कन्यायाः प्रधानकर्मणः प्रार्थना याञ्चा येन तादृशस्य । तस्य वीरकेतोः । नगरीं पुरीम् । अरौत्सीदावृतवान् । 'रुधिर् आवरणे ' लुङ् । **वीरेति** । भीतस्त्रस्तः । उपायनमुपहारमिव । ' उपायनमुपग्राह्यमुपहारस्तथोपदा ' इत्यमरः । तनयां कन्याम् । अदाद्ददौ । तरुणीलाभेन कन्याप्राप्त्या । हृष्टचेताः प्रसन्नमनाः । लाटपतिर्मत्तकालः । परिणेया विवाहार्हा । निजपुरे लाटदेशे एव । निश्चित्य निर्धार्य । निष्पूर्वात् ' चिञ् चयने' इत्यतो ल्यपि ' ह्रस्वस्य पिति कृति तुक् ' इति तुक् । निजदेशं प्रति लाटदेशमुद्दिश्य । ' अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति द्वितीया । संप्रति इदानीम् । मृगयाया-माखेटे आदरेणाग्रहेण । ' आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ' इत्यमरः । सैन्यस्य सेनाया वासं निवासस्थानं शिबिरमित्यर्थः । अकारयत् कारयामास । ' डुकृञ् करणे ' इत्यतो

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कन्यासारेण नियुक्तो मानपालो नाम वीरकेतुमन्त्री मानधनश्चतुरङ्गबलसमन्वितोऽन्यत्र रचितशिबिरस्तं निजनाथावमानखिन्नमानसोऽन्तर्बिभेद' इति। विप्रोऽसौ बहुतनयो विद्वान्निर्धनः स्थविरश्च दानयोग्य इति तस्मै करुणापूर्णमना रत्नमदाम्। परमाह्लादविकसिताननोऽभिहितानेकाशीः कुत्रचिदग्रजन्मा जगाम। अध्वश्रमखिन्नेन मया तत्र निरवेशि निद्रासुखम्। तदनु पश्चान्निगडितबाहुयुगलः स भूसुरः कशाघातचिह्नितगात्रोऽनेकैर्नैस्त्रिंशिकानुयातोऽभ्येत्य माम् 'असौ दस्युः' इत्यदर्शयत्। परित्यक्तभूसुरा राजभटा रत्नावाप्तिप्रकारं मदुक्तमनाकर्ण्य भयरहितं मां गाढं नियम्य रज्जुभिरानीय कारागारम् 'एते तव सखायः' इति निगडितान्कांश्चिन्निर्दिष्टवन्तो मामपि निगडितचरणयुगलमकार्षुः। किंकर्तव्यता-

---

हेतुमण्णिचि लङ्। कन्यासारेण कन्यारूपश्रेष्ठवस्तुना 'सारो बले स्थिरांशे च मज्ज्ञि पुंसि जले धने' इति मेदिनी। नियुक्तः प्रेरितः। मानधनः अभिमानी। चतुरंगेण हस्त्यश्वरथपादातयुक्तेन बलेन सैन्येन समन्वितः युक्तः। रचितं शिबिरं सेनानिवासस्थानं येन तथाभूतः। तं मत्तकालम्। निजनाथस्य स्वराजस्य वीरकेतोः। अवमानेनऽवज्ञया खिन्नं दुःखाक्रान्तं मानसं चित्तं यस्य तादृशः। 'रीढाऽवमाननाऽवज्ञाऽवहेलनमसूर्क्षणम्' इत्यमरः। अन्तर्बिभेद मत्तकालसैनिकानां मनसि परस्परमेव कलहं कारितवान्। **विप्र इति**। बहुतनयः अनेकैः पुत्रैर्युक्तः। विद्वान्सुधीः। 'विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः' इत्यमरः। निर्धनो दरिद्रः। स्थविरो वृद्धः। दानाय योग्यः अर्हः। करुणया कृपया पूर्णं मनो यस्यैतादृशः सन्। अदां व्यतरम्। 'डुदाञ् दाने' इत्यतो लुङि। 'गातिस्थाघु–' इति सिचो लुक्। परमाल्हादेन आनन्दातिरेकेण विकसिताननः प्रफुल्लवदनः। अभिहिता प्रोक्ता अनेका आशिष आशीर्वादा येन सः। जगाम गतवान्। अध्वश्रमेण मार्गायासेन खिन्नेन दुःखितेन। तत्र देवतालये। निरवेशि उपभुक्तम्। निष्पूर्वात् 'विश प्रवेशने' इत्यतः कर्मणि लुङि रूपम्। 'निर्वेशो भृतिभोगयोः' इत्यमरः। **तदन्विति**। ततोऽनन्तरम्। पश्चात्पृष्ठभागे निगडितं शृंखलाभिर्बद्धं बाहुयुगलं दोर्युग्मं यस्य तथाविधः। 'शृंखला पुंस्कटी वस्त्रबन्धे च निगडे त्रिषु' इति मेदिनी। 'भुजबाहू प्रवेष्टो दोः' 'युग्मं तु युगलं युगम्' इत्यमरः। भूसुरो विप्रः। कशाया आघातैरश्वादिताडनाय लगुडान्तबद्धरज्जुविशेषस्य प्रहारैः। 'अश्वादेस्ताडनी कशा' इत्यमरः। चिह्नितं लक्षितं गात्रं वपुर्यस्य सः। 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः। निस्त्रिंशोऽसिः प्रहरणं येषां ते नैस्त्रिंशिकाः। 'प्रहरणम्' इत्यनेन ठक्। 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरः। तैरनुयातोऽनुगतः। माम् अभ्येत्य मत्समीपमागत्य दस्युस्तस्करः 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः' इत्यमरः। अदर्शयद्दर्शयांचकार। परित्यक्त उज्झितो भूसुरो विप्रो यैस्ते। राजभटाः नृपकिंकराः रत्नावाप्तेर्मण्युपलम्भस्य प्रकारं रीतिम्। मदुक्तं मयाऽसकृत्कथितमपि। अनाकर्ण्याश्रुत्य भयरहितं निर्भीकम्। मां सोमदत्तम्। नियम्य बद्ध्वा। कारागारं बन्धनालयम्। एते बन्धागारे वर्तमानाः। सखायः सुहृदः। निगडितान्बद्धान्। निर्दिष्टवन्तः निदर्शितवन्तः निगडितचरणयुगलं शृंखलितपादयुग्मम्। अकार्षुः चक्रुः। किंकर्तव्य-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मूढेन निराशक्लेशानुभवेनावोचि मया—'ननु परुषा वीर्यपुरुषाः, निमित्तेन केन निर्विशथ कारावासदुःखं दुस्तरम्। यूयं वयस्या इति निर्दिष्टमेतैः, किमिदम्' इति। तथाविधं मामवेक्ष्य भूसुरान्मया श्रुतं लाटपतिवृत्तान्तं व्याख्याय चोरवीराः पुनरवोचन्—'महाभाग, वीरकेतुमन्त्रिणो मानपालस्य किंकरा वयम्। तदाज्ञया लाटेश्वरमारणाय रात्रौ सुरङ्गाद्वारेण तदगारं प्रविश्य तत्र राजाभावेन विषण्णा बहुधनमाहृत्य महाटवीं प्राविशाम। अपरेद्युश्च पदान्वेषिणो राजानुचरा बहवोऽभ्येत्य धृतधनचयानस्मान्परितः परिवृत्य दृढतरं बद्ध्वा निकटमानीय समस्तवस्तुशोधनवेलायामेकस्यानर्घ्यरत्नस्याभावेनास्मद्वधाय माणिक्यादानायास्मान्किलाश्रृङ्खलयन्' इति। श्रुतरत्नरत्नावलोकनस्थानोऽहम् 'इदं तदेव माणिक्यम्' इति निश्चित्य भूदेवदाननिमित्तां दुरवस्थामात्मनो जन्म नामधेयं युष्मदन्वेषणपर्यटनप्रकारं चाभाष्य समयोचितैः संलापैर्मैत्रीमकार्षम्। ततोऽर्धरात्रे तेषां मम च श्रृङ्खलाबन्धनं निर्भिद्य तैरनुगम्यमानो निद्रितस्य द्वाःस्थगणस्यायुधजालमादाय पुररक्षान्पुरतोऽभिमुखागतान्पटुपराक्रमलीलयाभिद्राव्य मान-

---

तायां किं कर्तव्यमापद्यासन्नायामिति विचारे मूढेनासमर्थेन। निराशः अनभीष्टः आकस्मिक इत्यर्थः। तादृशः क्लेशानुभवो दुःखसाक्षात्कृतिर्यस्यैतादृशः। अवाचि अभिहितम्। **नन्विति**। परुषा निष्ठुरकर्माणः। निर्विशथ अनुभवथ। कारावासदुःखं बन्धनागारस्थितिजातं कष्टम्। दुस्तरमसह्यम्। वयस्या वयसा तुल्याः सवयसः। एतै राजपुरुषैः। मां सोमदत्तम्। अवेक्ष्य दृष्ट्वा। श्रुतमाकर्णितम्। लाटपतेर्मत्तकालनाम्नो वृत्तान्तं प्रवृत्तिम्। व्याख्याय कथयित्वा। किंकराः सेवकाः। तस्य वीरकेतोः। आज्ञया निदेशेन। मारणाय व्यापादनाय। रात्रौ निशायाम्। सुरङ्गाद्वारेण बिलपथा। विषण्णाः खिन्नाः। आहृत्य मोषयित्वा। प्राविशाम प्रविष्टवन्तो वयम्। अपरेद्युरन्यस्मिन्नहनि। पदानि चरणविन्यासानन्विच्छन्ति अनुसृत्य मार्गयन्ति इति पदान्वेषिणः। अभ्येत्यास्मदभिमुखमागत्य। धृतः हस्ताभ्यां गृहीतः। धनस्य चयः समूहो यैस्तादृशान्। परितः समन्तात्। परिवृत्य वेष्टयित्वा। बद्ध्वा नियम्य। निकटं शिबिरस्य समीपम्। समस्तानां वस्तूनां पदार्थानां शोधनवेलायामन्वेषणकाले। अनर्घ्यरत्नस्य अमूल्यमणेः। अभावेनानुपलब्धतया। माणिक्यस्य रत्नस्य। आदानाय ग्रहणाय। अशृंखलयन् निगडितवन्तः। रत्नस्य स्थानं मत्तकालशिबिरम्, रत्नावलोकनस्थानं नदकूलमेतदुभयं श्रुतं राजपुरुषमुखादाकर्णितं प्रत्यक्षतोऽनुभूतं च येन तादृशः। इदं नदकूलोपलब्धम्। तदेवान्वेषणकालेऽदृष्टमेव। निश्चित्य निर्धार्य। भूदेवाय ब्राह्मणाय। यद्दानं प्रतिपादनं तन्निमित्तां तद्धेतुकाम्। दुरवस्थां दुर्दशाम्। जन्म उत्पत्तिम्। आभाष्य कथयित्वा। समयोचितैः कालानुरूपैः संलापैः परस्परभाषणैः। 'संलापो भाषणं मिथः' इत्यमरः। मैत्रीं सख्यम्। अकार्षं सम्पादितवान्। **तत इति**। अर्धरात्रे निशीथसमये। 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः। श्रृंखलाबन्धनं निगडरज्जुम्। निर्भिद्य विदार्य। 'भिदिर् विदारणे'। तै राजपुरुषैः। अनुगम्यमान अनुयातः निद्रितस्य सुप्तस्य। द्वाःस्थगणस्य द्वारपालवर्गस्य। आयुधजालं शस्त्रसमुदायम्। 'आयुधं तु

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पालशिविरं प्राविशम् । मानपालो निजकिंकरेभ्यो मम कुलाभिमानवृत्तान्तं तात्कालिकं विक्रमं च निशम्य मामार्चयत् । परेद्युर्मत्तकालेन प्रेपिताः केचन पुरुषा मानपालमुपेत्य 'मन्त्रिन्, मदीयराजमन्दिरे सुरङ्गया वहुधनमपहृत्य चोरवीरा भवदीयं कटकं प्राविशन् । तानर्पय । नो चेन्महाननर्थः संभाविष्यति' इति क्रूरतरं वाक्यमब्रुवन् । तदाकर्ण्य रोषारुणितनेत्रो मन्त्री 'लाटपतिः कः' तेन मैत्री का, पुनरस्य वराकस्य सेवया किं लभ्यम्' इति तान्निरभर्त्सयत् । ते च मानपालेनोक्तं विप्रलापं मत्तकालाय तथैवाकथयन् । कुपितोऽपि लाटपतिर्दोर्वीर्यगर्वेणाल्पसैनिकसमेतो योद्धुमभ्यगात् । पूर्वमेव कृतरणनिश्चयो मानी मानपालः संनद्धयोधो युद्धकामो भूत्वा निःशङ्कं निरगात् । अहमपि सवहुमानं मन्त्रिदत्तानि वहुलतुरंगमोपेतं चतुरसारथिं रथं च दृढतरं कवचं मदनुरूपं चापं च विविधबाणपूर्णं तूणीरद्वयं रणसमुचितान्यायुधानि गृहीत्वा युद्धसंनद्धो मदीयवलविश्वासेन रिपूद्धरणोद्युक्तं मन्त्रिणमन्वगाम् । परस्परमत्सरण तुमुलसं-

---

प्रहरणं शस्त्रमस्त्रमथास्त्रियौ' इत्यमरः । आदाय गृहीत्वा । पुररक्षान्नगरपालकान् । पुरतः नगरात् । 'पञ्चम्यास्तसिल्' इति तसिल् । अभिमुखं संमुखतयाऽऽगतान्प्राप्तान् । पटुपराक्रमस्यामन्दशौर्यस्य । लीलया विलासेन । अभिद्राव्य पलायनं कारयित्वा । मानपालस्य वीरकेतुसचिवस्य शिबिरं सेनानिवासम् । प्राविशं प्रविष्टवान् । तस्मिन्काले भवं तात्कालिकम् । 'कालाट्ठञ्' इति ठञ् । विक्रमं शौर्यम् । निशम्य श्रुत्वा । आर्चयत् बहुमानितवान् । 'अर्च पूजायाम्' लङ् । राजमन्दिरे नृपागारे । सुरङ्गया बिलमार्गेण । अपहृत्य चोरयित्वा । चोरेषु वीराः तस्करश्रेष्ठाः । कर्मधारये तु 'पूर्वापरप्रथम–' इति वीरस्य पूर्वनिपातः स्यात् । कटकं शिबिरं प्राविशन् प्रविष्टाः । अर्पय अस्मभ्यं देहि । 'ऋ गतौ' इत्यतो हेतुमण्णिचि 'अर्तिह्रीव्लीरी–' इत्यादिना पुक् । नो चेत् यद्येवं न करिष्यसि । संभविष्यति उत्पत्स्यते । क्रूरतरमतिपरुषम् । रोषेण कोपेनारुणिते ताम्रे नेत्रे यस्य सः । मन्त्री मानपालः । मैत्री सख्यम् । वराकस्य अधमस्य । सेवयाऽऽश्रयेणं । लभ्यं प्राप्यं प्रयोजनम् । निरभर्त्सयत् तर्जयमास । ते राजपुरुषाः । विप्रलापं विरुद्धवाक्यम् । 'विप्रलापो विरोधोक्तिः' इत्यमरः । तथैव तेनैव प्रकारेण । 'प्रकारवचने थाल्' इति थाल् । कुपितः क्रुद्धः । दोर्वीर्यगर्वेण बाहुबलाहङ्कारेण । अल्पेन सैनिकेन समेतो युक्तः । योद्धुं युद्धं कर्तुम् । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमुन् । पूर्वमेवादावेव । कृतः रणनिश्चयः समरोऽवश्यंभावीति येन तादृशः । मानी गर्वितः । सन्नद्धाः सज्जाः योधा भटा यस्य सः । युद्धकामः रणाभिलाषी । निःशङ्कं निर्भयम् । **अहमिति** । सोमदत्तः । सबहुमानं सादरम् । तुरंगमा अश्वाः । चतुरो निपुणः सारथिर्यन्ता यस्य तादृशं रथं स्यन्दनम् । कवचं वर्म । चापं धनुः । 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः । तूणीरद्वयं इषुधिद्वन्द्वम् । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । रणसमुचितानि युद्धयोग्यानि । आयुधानि प्रहरणानि । गृहीत्वाऽऽदाय । मदीयबले मामकीनशक्तौ विश्वासेन विस्रम्भेण । 'समौ विस्रम्भविश्वासौ' इत्यमरः । रिपोः शत्रोरुद्धरणे उन्मूलने उद्युक्तं कृतोद्यो-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

गरकरमुभयसैन्यमतिक्रम्य समुल्लसद्भुजाटोपेन बाणवर्षं तदङ्गे विमुञ्चन्नरातीन् प्राहरम् । ततोऽतिरयतुरंगमं मद्रथं तन्निकटं नीत्वा शीघ्रलङ्घनोपेततदीयरथोऽहमरातेः शिरःकर्तनमकार्षम् । तस्मिन्पतिते तदवशिष्टसैनिकेषु पलायितेषु नानाविधहयगजादिवस्तुजातमादाय परमानन्दसंनतो मन्त्री ममानेकविधां संभावनामकार्षीत् । मानपालप्रेपितात्तदनुचरादेनमखिलमुदन्तजातमाकर्ण्य संतुष्टमना राजाभ्युद्गतो मदीयपराक्रमे विस्मयमानः समहोत्सवममात्यबान्धवानुमत्या शुभदिने निजतनयां मह्यमदात् । ततो यौवराज्याभिषिक्तोऽहमनुदिनमाराधितमहीपालचित्तो वामलोचनयानया सह नानाविधं सौख्यमनुभवन्भवद्विरहवेदनाशल्यसुलभवैकल्यहृदयः सिद्धादेशेन सुहृज्जनावलोकनफलं प्रदेशं महाकालनिवासिनः परमेश्वरस्याराधनायाद्य पत्नीसमेतः समागतोऽस्मि । भक्तवत्सलस्य

---

गम् । अन्वगामन्वयासिषम् । मत्सरेण द्वेषेण । 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः । तुमुलं निबिडं संगरं युद्धं करोतीति तादृशः । 'अथ प्रतिज्ञाजिसंविदापत्सु संगरः' इत्यमरः । 'संगरो युधिचापदि' इति मेदिनी च । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टः प्रत्ययः । अतिक्रम्योल्लङ्घ्य । समुल्लसतोः प्रकाशमानयोः भुजयोर्दोष्णोराटोपेण गर्वेण । बाणवर्षं सायकवृष्टिम् । 'पृषत्कबाणविशिखा अजिह्मगखगाशुगाः' इत्यमरः । तस्य शत्रुसैन्यस्य । अङ्गे गात्रे । विमुञ्चन् प्राक्षिपन् । अरातीञ्छत्रून् । प्राहरम् आहतवान् । अतिरयौ शीघ्रगामिनौ तुरंगमावश्वौ यस्मिन्नेतादृशम् । शीघ्रलङ्घनेन झटिति समुत्पतनेनोपेतः प्राप्तः तदीयरथः मत्तकालस्य स्यन्दनः येन तादृशः । अरातेः विपक्षस्य । शिरःकर्तनं शीर्षच्छेदनम् । अकार्षमकरवम् । तस्मिन् मत्तकाले । पतिते भूमौ निपतिते । पलायितेषु विद्रुतेषु । हयोऽश्वः । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः । आदाय स्वायत्तीकृत्य । संभावनां सत्कारम् । प्रेषितात्प्रहितात् । उदन्तजातं वार्ताकलापम् । संतुष्टमनाः प्रसन्नचित्तः । राजा वीरकेतुः । अभ्युद्गत आभिमुख्येनागतः । विस्मयमानः आश्चर्ययुक्तः । महोत्सवेन सह यथा स्यात्तथा । निजतनयां स्वकन्यां वामलोचनाम् । **तत इति** । युवा चासौ राजा च युवराजः । 'राजाहः सखिभ्यष्टच्' इति टच् । तस्य भावः कर्म वा यौवराज्यम् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् । तस्मिन्, युवराजपदव्यामिति भावः । अभिषिक्तः कृताभिषेकः । अहं सोमदत्तः । अनुदिनमहन्यहनि । आराधितं सन्तोषितं महीपालस्य वीरकेतोश्चित्तं येन तादृशः । सुखमेव सौख्यम् । इन्नन्तात्ष्यञ् । अनुभवन्निर्विशन् । भवतो विरहेण वियोगेन जन्या या वेदना दुःखं सैव शल्यं शंकुस्तेन सुलभं सुगमं वैकल्यं दैन्यं येन तथाविधं हृदयं यस्य तादृशः । 'वा पुंसि शल्यं शंकुर्ना' इत्यमरः । सिद्धादेशेन तापसनिदेशेन । सुहृज्जनस्य मित्रस्य भवतः अवलोकनं दर्शनरूपं फलं यस्मिन्भावि तादृशम् । महाकाले क्षेत्रविशेषे निवसतीति तथाविधस्य । आराधनाय पूजनाय । पत्न्या वामलोचनाभिधया सहधर्मिण्या । 'पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी' इत्यमरः । भक्तेषु वत्सलस्य प्रियस्य

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

गौरीपतेः कारुण्येन त्वत्पदारविन्दसंदर्शनानन्दसंदोहो मया लब्धः' इति।

तन्निशम्याभिनन्दितपराक्रमो राजवाहनस्तन्निरपराधदण्डे दैवमुपालभ्य तस्मै क्रमेणात्मचरितं कथयामास। तस्मिन्नवसरे पुरतः पुष्पोद्भवं विलोक्य ससंभ्रमं निजनिटिलतटस्पृष्टचरणांगुलिमुदञ्जालिममुं गाढमालिङ्ग्यानन्दवाष्पसंकुलसंफुल्ललोचनः 'सौम्य सोमदत्त, अयं स पुष्पोद्भवः' इति तस्मै तं दर्शयामास। तौ च चिरविरहदुःखं विसृज्यान्योन्यालिङ्गनसुखमन्वभूताम्। ततस्तस्यैव महीरुहस्य च्छायायामुपविश्य राजा सादरहासमभाषत-'वयस्य, भूसुरकार्यं करिष्णुरहं मित्रगणो विदितार्थः सर्वथान्तरायं करिष्यतीति निद्रितान्भवतः परित्यज्य निरगाम्। तदनु प्रबुद्धो वयस्यवर्गः किमिति निश्चित्य मदन्वेषणाय कुत्र गतवान् भवानेकाकी कुत्र गतः' इति। सोऽपि ललाटतटचुम्बदञ्जलिपुटः सविनयमलपत ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते सोमदत्तचरितं नाम तृतीय उच्छ्वासः ॥ ३ ॥

---

गौरीपतेः पार्वतीनाथस्य। कारुण्येनानुकम्पया। तव पदारविन्दयोश्चरणकमलयोः संदर्शनाज्जात आनन्दसंदोहः प्रमोदनिवहः। 'समूहनिवहव्यूहसंदोहविसरव्रजाः' इत्यमरः। लब्धः प्राप्तः। 'डुलभष् प्राप्तौ' **इतीति**। अस्य द्वितीयोच्छ्वासावसानस्थेन अवोचत् इत्यनेन संबन्धः।

**तदिति**। सोमदत्तस्य चरितं निशम्य श्रुत्वा। अभिनन्दितः श्लाघितः पराक्रमः शौर्यं मत्तकालमारणावसरे प्रदर्शितं येनैतादृशः। निरपराध आगसं विनैव प्राप्तो यो दण्डः कारागारनिवासरूपस्तत्र। 'आगोऽपराधो मन्तुश्च' इत्यमरः। दैवं भाग्यमुपालभ्य दूषयित्वा। 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः। तस्मै सोमदत्ताय। आत्मचरितं मातङ्गेन साकं विलगमनादिकम्। कथयामास प्रोक्तवान्। अवसरे समये। पुरतोऽभिमुखप्रदेशे। पुष्पोद्भवमेतदाख्यं मन्त्रिकुमारम्। विलोक्य दृष्ट्वा। ससंभ्रमं सत्वरम्। 'संभ्रमस्त्वरा' इत्यमरः। निजेनात्मीयेन निटिलतटेन भालदेशेन स्पृष्टाश्चरणांगुलयो राजवाहनस्य येनैतादृशम्। उदञ्जलिं कृतप्रणामाञ्जलिम्। अमुं पुष्पोद्भवम्। आलिङ्ग्याश्लिष्य। आनन्दबाष्पेण हर्षाश्रुणा संकुले व्याप्ते संफुल्ले विकसिते च लोचने नयने यस्य सः। 'वाष्पमूष्माश्रु' इत्यमरः। अयमग्रे वर्तमानः। तस्मै सोमदत्ताय। तं पुष्पोद्भवम्। विसृज्य त्यक्त्वा। अन्वभूतामनुभूतवन्तौ। अनुपूर्वात् 'भू सत्तायाम्' इत्यतो लुङि 'गातिस्थाघुपाभूभ्यः–' इति सिचो लुक्।

**तत इति**। छायायामनातपे देशे। उपविश्य स्थित्वा। आदरेण हासेन च साकम्। वयस्य मित्र। करिष्णुः करिष्यन्। मित्रगणः सुहृद्वर्गः विदितार्थो ज्ञातकार्यश्चेत्। सर्वथा सर्वेण प्रकारेण। अन्तरायं विघ्नम्। 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। निद्रितान्सुप्तान्। भवतो युष्मान्। प्रबुद्धः त्यक्तनिद्रः। कुत्र कस्मिन्प्रदेशे। 'सप्तम्यास्त्रल्' इति त्रल्। एकाक्यसहायः। 'एकाकी त्वेक एककः' इत्यमरः। 'एकादाकिनिच्चासहाये' इत्याकिनिच्। सोऽपि पुष्पोद्भवोऽपि। ललाटतटे भालदेशे चुम्बन् संश्लिष्यन् अञ्जलिपुटो यस्य तथाभूतः सन्। सविनयं प्रश्रयेण सह। अलपत् आत्मचरितमुवाच ॥

इति दशकुमारचरितव्याख्यायां मनोरमाख्यायां तृतीय उच्छ्वासः समाप्तः ॥ ३ ॥

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

## चतुर्थोच्छ्वासः ॥ ४ ॥

'देव, महीसुरोपकारायैव देवो गतवानिति निश्चित्यापि देवेन गन्तव्यं देशं निर्णेतुमशक्नुवानो मित्रगणः परस्परं वियुज्य दिक्षु देवमन्वेष्टुमगच्छत् । अहमापि देवस्यान्वेषणाय महीमटन् कदाचिदम्बरमध्यगतस्याम्बरमणेः किरणमसहिष्णुरेकस्य गिरितटमहीरुहस्य प्रच्छायशीतले तले क्षणमुपाविशम् । मम पुरोभागे दिनमध्यसंकुचितसर्वावयवां कूर्माकृतिं मानुषच्छायां निरीक्ष्योन्मुखो गगनतलान्महारयेण पतन्तं पुरुषं कंचिदन्तराल एव दयोपनतहृदयोऽहमवलम्ब्य शनैरवनितले निक्षिप्य दूरापातवीतसंज्ञं तं शिशिरोपचारेण विबोध्य शोकातिरेकेणोद्गतबाष्पलोचनं तं भृगुपतनकारणमपृच्छम् । सोऽपि कररुहैरश्रु-

---

### अथ चतुर्थ उच्छ्वासः ॥ ४ ॥

देवेति । महीसुरस्य ब्राह्मणस्य उपकाराय उपकृतये एव । देवो भवान् । निश्चित्य निर्णीय । गन्तव्यं गन्तुमर्हम् । निर्णेतुं निर्धारयितुम् । अशक्नुवानः असमर्थः । 'शक्लृ शक्तौ' । 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति चानश् । शानच् तु न धातोरनात्मनेपदित्वात् । परस्परं मिथः । वियुज्य विभक्तो भूत्वा । अन्वेष्टुं गवेषयितुम् । अगच्छद्गतवान् । अहमपि पुष्पोद्भवः । अन्वेषणाय मार्गणाय । महीमवनीम् । 'क्ष्माऽवनिर्मेदिनी मही' इत्यमरः । अटन्परिभ्रमन् । अम्बरमध्यं व्योमार्धभागं गतस्य प्राप्तस्य । 'व्योम पुष्करमंबरम्' इत्यमरः । 'द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति द्वितीयातत्पुरुषः । अम्बरमणेः सूर्यस्य । किरणं मयूखमेकमपि । असहिष्णुः सोढुमशक्तः । 'अलंकृञ्–' इत्यादिनेष्णुच् । गिरितटे पर्वतप्रदेशे वर्तमानो यो महीरुहो वृक्षस्तस्य । 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः । 'वृक्षो महीरुहः शाखी' इति च । प्रकृष्टा छाया प्रच्छायं तेन शीतले शीते । 'विभाषा सेनासुराच्छाया--' इति नपुंसकता । 'तुषारः शीतलः शीतः' इत्यमरः । तलेऽधोदेशे । क्षणं किंचित्कालपर्यन्तम् । उपाविशमतिष्ठम् । पुरो भागेऽग्रतः । दिनमध्ये मध्याह्नकाले । संकुचिताः ह्रासं प्राप्ताः सर्वेऽवयवा अङ्गानि यस्यास्तादृशीम् । 'अङ्गं प्रतीकोऽवयवः' इत्यमरः । कूर्मस्य कमठस्येवाकृतिः आकारः यस्यास्तादृशीम् । 'कूर्मे कमठकच्छपौ' इत्यमरः । मानुषस्य मर्त्यस्य छायामनातपम् । 'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः' इत्यमरः । 'छाया पङ्क्तौ प्रतिमायामर्कयोषित्यनातपे' इति मेदिनी । निरीक्ष्यावलोक्य । उन्मुखः ऊर्ध्वदृष्टिः । गगनतलादाकाशात् । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । महता रयेण वेगेन । 'रंहस्तरसी तु रयः स्यदः । जवः' इत्यमरः । अन्तराले मध्य एव । 'अभ्यन्तरं त्वन्तरालम्' इत्यमरः । दयोपनतहृदयः करुणाविष्टचेताः । अवलम्ब्य धारयित्वा । शनैर्मन्दम् । अवनितले भुवि । निक्षिप्य स्थापयित्वा । दूरापातेन दूरदेशात्पतनेन वीतसंज्ञं विचेतनम् । शिशिरोपचारेण शीतलोपचारेण । विबोध्य संचेतनं कृत्वा । शोकातिरेकेण दुःखाधिक्येन । उद्गतमुद्भूतं बाष्पं रोदनाश्रु याभ्यां तादृशे लोचने चक्षुषी यस्यैतादृशम् । भृगोः गिरिप्रपातात्

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कणानपनयन्नभाषत–'सौम्य, मगधाधिनाथामात्यस्य पद्मोद्भवस्यात्मसंभवो रत्नोद्भवो नामाहम्। वाणिज्यरूपेण कालयवनद्वीपमुपेत्य कामपि वणिक्कन्यकां परिणीय तया सह प्रत्यागच्छन्नम्बुधौ तीरस्यानतिदूर एव प्रवहणस्य भग्नतया सर्वेषु निमग्नेषु कथंकथमपि दैवानुकूल्येन तीरभूमिमभिगम्य निजाङ्गनावियोगदुःखार्णवे प्लवमानः कस्यापि सिद्धतापसस्यादेशादरेण षोडश हायनानि कथंचिन्नीत्वा दुरवस्थापारमनवेक्षमाणो गिरिपतनमकार्षम्' इति। तस्मिन्नेवावसरे किमपि नारीकूजितमश्रावि–'न खलु समुचितमिदं यत्सिद्धादिष्टे पतितनयमिलने विरहमसहिष्णुर्वैश्वानरं विशसि' इति। तन्निशम्य मनोविदितजनकभावं तमवादिषम्–'तात, भवते विज्ञापनीयानि बहूनि सन्ति। भवतु। पश्चादखिलमाख्यातव्यम्। अधुना नारीकूजितमनुपेक्षणीयं मया। क्षणमात्रमत्र भवता स्थीयताम्' इति। तदनु सोऽहं त्वरया किंचिदन्तरमगमम्। तत्र पुरतो भयंकरज्वालाकुलहुतभुगवगाहनसाहासिकां मुकुलिताञ्जलिपुटां वनितां कांचिदवलोक्य

---

पतने कारणं निमित्तम्। 'प्रपातस्त्वतटो भृगुः' इत्यमरः। अपृच्छगनुयुक्तवान्। 'प्रच्छ ज्ञीप्सायाम्'। 'ग्रहिज्या–' इति संप्रसारणम्। **सोऽपीति**। गिरेः पतितः। करुहैर्नखैः। 'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः। अश्रुकणान्बाष्पबिन्दून्। अपनयन् दूरीकुर्वन्। मगधाधिनाथस्य राजहंसस्य योऽमात्यः सचिवस्तस्य। आत्मसंभवः पुत्रः। 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः। वाणिज्यरूपेण व्यापारनिमित्तेन। उपेत्य गत्वा। कामपि सुवृत्तानाम्नीम्। परिणीय उद्वाह्य। प्रत्यागच्छन्प्रतिनिवर्तमानः। अम्बुधौ सागरे। तीरस्य रोधसः 'कूलं रोधश्च तीरं च' इत्यमरः। अनतिदूरे समीप एव। प्रवहणस्य नौकाविशेषस्य। भग्नतया विभिन्नतया। निमग्नेषु जलान्तर्गतेषु। कथं कथमपि महता परिश्रमेण। तीरभूमिं तटमभिगम्य प्राप्य। निजाङ्गनायाः सुवृत्तायाः पत्न्याः। वियोगदुःखार्णवे विरहव्यथासागरे। प्लवमानः निमज्जन्। आदेशे कथने। आदरेण श्रद्धया। हायनानि संवत्सरान्। 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः। नीत्वा यापयित्वा। दुरवस्थायाः कष्टदशायाः पारमवसानम्। अनवेक्षमाणो न पश्यन्। गिरेः पतनम्। अकार्षमकरवम्। **तस्मिन्निति**। पूर्वप्रकारेण भाषणावसरे। नार्या योषितः। कूजितमाक्रन्दनम्। अश्रावि श्रुतम्। 'श्रु श्रवणे' इत्यतः कर्मणि लुङ्। खलु निश्चयेन। सिद्धेन तापसेनादिष्टे कथिते पतितनययोः भर्तृपुत्रयोः। मिलने संगमे। 'धवः प्रियः पतिर्भर्ता' 'आत्मजस्तनयः सूनुः' इत्यमरः। विरहं वियोगमसहिष्णुरसहमाना। वैश्वानरं वह्निम्। 'अग्निर्वैश्वानरो वह्निः' इत्यमरः। तद्रोदनम्। निशम्य श्रुत्वा। मनसा विदितो निर्धारितो जनकभावः 'अयमेव मत्पिता रत्नोद्भवः' इति यस्य। तादृशं तं गिरेः पतितं पुरुषम्। तात हे पितः! 'तातस्तु जनकः पिता' इत्यमरः। पश्चादागमनानन्तरम्। आख्यातव्यं कथनीयम्। अधुनेदानीम्। अनुपेक्षणीयमुपेक्षितुमनुचितम्। स्थीयतां निवासः कार्यः। **तदन्विति**। ततःपरम्। अहं पुष्पोद्भवः। त्वरया वेगेन। किंचित्

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

ससंभ्रममनलादपनीय कूजन्त्या वृद्धया सह मत्पितुरभ्यर्णमभिगमय्य स्थविरामवोचम् 'वृद्धे भवत्यौ कुत्रत्ये। कान्तारे निमित्तेन केन दुरवस्थानुभूयते? कथ्यताम्' इति। सा सगद्गदमवादीत्–'पुत्र, कालयवनद्वीपे कालगुप्तनाम्नो वणिजः कस्याचिदेषा सुता सुवृत्ता नाम रत्नोद्भवेन निजकान्तेनागच्छन्ती जलधौ मग्ने प्रवहणे निजधात्र्या मया सह फलकमेकमवलम्ब्य दैवयोगेन कूलमुपेतासन्नप्रसवसमया कस्यांचिदटव्यामात्मजमसूत। मम तु मन्दभाग्यतया बाले वनमातङ्गेन गृहीते मद्द्वितीया परिभ्रमन्ती 'षोडशवर्षानन्तरं भर्तृपुत्रसंगमो भविष्यति' इति सिद्धवाक्यविश्वासादेकस्मिन्पुण्याश्रमे तावन्तं समयं नीत्वा शोकमपारं सोढुमक्षमा समुज्ज्वलिते वैश्वानरे शरीरमाहुतीकर्तुमुद्युक्ताऽऽसीत्' इति। तदाकर्ण्य निजजननीं ज्ञात्वा तामहं दण्डवत्प्रणम्य तस्मै मदुदन्तमखिलमाख्याय धात्रीभाषणफुल्लवदनं विस्मयविकसिताक्षं जनकमदर्शयम्। पितरौ तौ साभिज्ञान-

---

अन्तरं कियद्दूरम्। पुरतः अग्रे भयङ्करा भयानका या ज्वाला अर्चयस्ताभिराकुले हुतभुजि वह्नौ अवगाहने प्रवेशे साहसिकां हठादुद्युक्ताम्। 'हिरण्यरेता हुतभुग्दहनो हव्यवाहनः' 'वन्हेर्द्वयोर्ज्वालकीलावार्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः। 'ओजःसहोऽम्भसा वर्तते' इति ठक्। वनितां स्त्रियम्। ससंभ्रमं सत्वरम्। अनलात् कृशानोः 'कृशानुः पावकोऽनलः' इत्यमरः। अपनीय निवार्य। कूजन्त्या रुदत्या 'कूज अव्यक्ते शब्दे'। वृद्धया स्थविरया। मत्पितू रत्नोद्भवस्य। अभ्यर्णमन्तिकम्। 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः। अभिगमय्य प्रापय्य। वृद्ध इति। कुत्र भवे कुत्रत्ये। 'अमेहक्वतसित्रेभ्य एव' इति त्यप्। कान्तारे दुर्गमे वर्त्मनि। 'कान्तारं वर्त्म दुर्गमम्' इत्यमरः। निमित्तेन हेतुना। दुरवस्था दुर्दशा। अनुभूयते निर्विश्यते। कथ्यतामुच्यताम्। सा वृद्धा। सगद्गदं गद्गदस्वरेण युक्तं यथा तथा। अवादीदुवाच।' वद व्यक्तायां वाचि'। पुत्रेति। वणिजो वैश्यस्य। सुता कन्यका। निजकान्तेनात्मभर्त्रा। आगच्छन्ती पुष्पपुरं प्रत्यायान्ती। जलधौ सागरे। प्रवहणे जलयाने। धात्र्योपमात्रा। फलकं काष्ठम्। अवलम्ब्य गृहीत्वा। दैवयोगेन भाग्यानुकूल्येन। कूलं तटम्। उपेता गता। आसन्नः सन्निकृष्टः प्रसवसमयः प्रसूतिकालः यस्याः सा। अटव्यामरण्ये। आत्मजं पुत्रम्। असूत प्रसूतवती। 'षूङ् प्राणिगर्भविमोचने'। वनमातङ्गेनारण्यगजेन। अहं द्वितीया सहायिनी यस्यास्तथाभुता। सिद्धवाक्ये तापसादेशे। विश्वासाद्विस्रंभात्। 'समौ विस्रम्भविश्वासौ' इत्यमरः। तावन्तं षोडशवर्षात्मकम्। नीत्वा यापयित्वा। अपारममर्यादम्। वैश्वानरे वह्नौ। आहुतीकर्तुमुत्स्रष्टुम्। तत् वृद्धाया वाक्यम्। निजजननीमात्ममातरम्। प्रणम्य नमस्कृत्य। तस्मै सुवृत्तासहिताय मत्पित्रे रत्नोद्भवाय। मदुदन्तं मम वृत्तान्तम्। धात्र्या उपमातुर्भाषणेन फुल्लं पत्नीपुत्रलाभाद्विकसितं वदनं यस्य तम्। विस्मयेनाश्चर्येण विकसिते अक्षिणी यस्य तम्। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति समासान्तोऽच्। जनकं पितरम्। माता च पिता च पितरौ। 'पिता मात्रा' इत्येकशेषः। 'मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ' इत्यमरः। अभिज्ञानेन चिह्नेन सहितं यथा तथा।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मन्योन्यं ज्ञात्वा मुदितान्तरात्मानौ विनीतं मामानन्दाश्रुवर्षेणाभिषिच्य गाढमाश्लिष्य शिरस्युपाघ्राय कस्यांचिन्महीरुहच्छायायामुपाविशताम् । 'कथं निवसति महीवल्लभो राजहंसः' इति जनकेन पृष्टोऽहं तस्य राज्यच्युतिं त्वदीयजननं सकलकुमारावाप्तिं तव दिग्विजयारम्भं भवतो मातङ्गानुयानमस्माकं युष्मदन्वेषणकारणं सकलमभ्यधाम् । ततस्तौ कस्यचिदाश्रमे मुनेरस्थापयम् । ततो देवस्यान्वेषणपरायणोऽहमखिलकार्यनिमित्तं वित्तं निश्चित्य भवदनुग्रहाल्लब्धस्य साधकत्वस्य साहाय्यकरणदक्षं शिष्यगणं निष्पाद्य विन्ध्यवनमध्ये पुरातनपत्तनस्थानान्युपेत्य विविधनिधिसूचकानां महीरुहाणामधो निक्षिप्तान्वसुपूर्णान्कलशान् सिद्धाञ्जनेन ज्ञात्वा रक्षिषु परितःस्थितेषु खननसाधनैरुत्पाद्य दीनारानसंख्यान् राशीकृत्य तत्कालागतमनतिदूरे निवेशितं वणिक्कटकं कंचिदभ्येत्य तत्र बलिनो बलीवर्दान् गोणीश्च क्रीत्वान्यद्रव्यमिषेण वसु तद्गोणीसंचितं तैरुह्यमानं शनैः कटकमनयम् । तदधिकारिणा चन्द्रपालेन केनचिद्वणिक्पुत्रेण विरचितसौहृदोऽहममुनैव साकमुज्जयिनीमुपाविशम् । मत्पितरावपि तां पुरीमभिगमय्य सकलगुणनिलयेन बन्धुपालनाम्ना चन्द्रपालजनकेन नीयमानो मालवनाथदर्शनं विधाय तदनुमत्या गूढवसतिमकरवम् । ततः काननभूमिषु भवन्तमन्वेष्टुमुद्युक्तं मां परममित्रं बन्धुपालो निशम्यावदत्—'सकलं धरणितलमपारमन्वेष्टुमक्षमो भवान्मनोग्लानिं

ज्ञात्वाऽवगत्य । मुदितान्तरात्मानौ संतुष्टहृदयौ । विनीतं प्रश्रयान्वितम् । उपाघ्रायाघ्राणं कृत्वा । 'घ्रा गन्धोपादाने' । उपाविशतां निषीदतः स्म । **कथमिति** । केन वा प्रकारेण । महीवल्लभः भूपतिः । जनकेन पित्रा । तस्य राजहंसस्य । राज्याच्च्युतिं भ्रंशं मानसारकर्तृकम् । अनुयानमुपकारायानुसरणम् । अभ्यधामहमुक्तवान् । अभिपूर्वात् 'डुधाञ् धारणपोषणयोः' इत्यतो लुङि घुत्वात् 'गातिस्था–' इति सिचो लुक् । आश्रमे उटजे । देवस्य भवतः । परायणस्तत्परः । अखिलानां कार्याणां निमित्तं कारणत्वेन। वित्तं धनं । निश्चित्य निर्णीय ।'द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु' इत्यमरः । साधकत्वस्य द्रव्योपार्जनशक्तेः । साहाय्यकरणे दक्षं कुशलम् । निष्पाद्य संपाद्य । पुरातनानां जीर्णानां पत्तनानां नगराणां स्थानानि । उपेत्य गत्वा । निधिसूचकानां निक्षेपद्योतकानाम् । अधो मूलदेशे । निक्षिप्तान् स्थापितान् । वसुपूर्णान्द्रव्यसंभृतान् । कलशान्घटान् । अञ्जनेन मस्या । रक्षिषु पालकेषु । परितः समन्तात् । खननसाधनैः खनित्रप्रभृतिभिः । दीनारान्सुवर्णनाणकान् । असंख्यानपरिमितान् । राशीकृत्य समूहीकृत्य । वणिक्कटकं व्यापारिवृन्दम् । बलीवर्दान्वृषभान् । 'उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः' इत्यमरः। गोणीर्धान्यावपनानि । 'जानपदकुण्डगोण–' इति ङीप् । क्रीत्वा द्रव्यप्रदानेन गृहीत्वा । 'डुक्रीञ् द्रव्यविनिमये' । अन्यद्रव्यमिषेण धान्यादि द्रव्यान्तरव्याजेन । वसु धनम् । तैर्वृषैः । उह्यमानं नीयमानम् । अमुना चन्द्रपालेन । उपाविशं प्राप्तवान् । मालवनाथस्य मानसारनाम्नः । गूढवसतिमप्रकटनिवासम् । **तत इति** । काननभूमिषु अरण्यप्रदेशेषु । धरणितलं भूगोलम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

विहाय तूष्णीं तिष्ठतु । भवन्नायकालोकनकारणं शुभशकुनं निरीक्ष्य कथयिष्यामि' इति । तल्लपितामृताश्वासितहृदयोऽहमनुदिनं तदुपकण्ठवर्ती कदाचिदिन्दुमुखीं नवयौवनावलीढावयवां नयनचन्द्रिकां बालचन्द्रिकां नाम तरुणीरत्नं वणिङ्मन्दिरलक्ष्मीं मूर्तामिवावलोक्य तदीयलावण्यावधूतधीरभावो लतान्तबाणबाणलक्ष्यतामयासिषम् । चकितबालकुरङ्गलोचना सापि कुसुमसायकसायकायमानेन कटाक्षवीक्षणेन मामसकृन्निरीक्ष्य मन्दमारुतान्दोलिता लतेवाकम्पत । मनसाभिमुखैः समाकुञ्चितै रागलज्जान्तरालवर्तिभिः साङ्गवर्तिभिरीक्षणविशेषैर्निजमनोवृत्तिमकथयत् । चतुरगूढचेष्टाभिरस्या मनोऽनुरागं सम्यग्ज्ञात्वा सुखसंगमोपायमचिन्तयम् । अन्यदा बन्धुपालः शकुनैर्भवद्गतिं प्रेक्षिष्यमाणः पुरोपान्तविहारवनं मया सहोपेत्य कस्मिंश्चिन्महीरुहे शकुन्तवचनानि शृण्वन्नतिष्ठत् । अहमुत्कलिका-

---

अपारं निरवधिकम् । अक्षमोऽसमर्थः । मनसो ग्लानिं विषादम् । विहाय परित्यज्य । शुभशकुनमारूढशास्त्रोक्तपक्षिरवादिकम् । तस्य बन्धुपालस्य लपितामृतेन भाषणपीयूषेणाश्वासितहृदयः समाहितचित्तः । अहं पुष्पोद्भवः । अनुदिनं प्रतिदिवसम् । तस्योपकण्ठेऽन्तिके वर्तमानः । इन्दुश्चन्द्र इव मुखं यस्यास्ताम् । नवयौवनेन नूतनतारुण्येनावलीढा आक्रान्ता अवयवा यस्यास्तथाविधाम् । नयनयोश्चन्द्रिकां तद्वदाह्लादकारिणीम् । मूर्तां सशरीराम् । तदीयेन लावण्येन सौन्दर्यातिरेकेणावधूतो दूरीकृतो धीरभावो धैर्यं यस्य तादृशः सन् । लतान्तबाणस्य कुसुमायुधस्य बाणानां सायकानां लक्ष्यतां शरव्यत्वमयासिषमुपगतः । 'लक्ष्यं लक्षं शरव्यं च' इत्यमरः। 'या प्रापणे' लुङ् । चकितो भीतो यो बालकुरङ्गो हरिणशिशुस्तस्येव लोचने नेत्रे यस्याः सा । 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इत्यमरः । कुसुमसायकस्य मदनस्य सायक इव बाण इवाचरता । कटाक्षवीक्षणेनापाङ्गदर्शनेन 'अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने' इत्यमरः । असकृत्पुनःपुनः 'मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः । मन्दमारुतेन स्वल्पवायुना आन्दोलिता कम्पिता लता वल्लीव । अकम्पत सकम्पा जाता । **मनसेति** । अभिमुखैः मत्सम्मुखमागतैः । समाकुञ्चितैः परावृत्तैः । अत्र च रागस्य प्रेम्णः, लज्जाया त्रपायाश्चान्तराले मध्ये वर्तमानत्वं क्रमेण हेतुः । अङ्गवर्तिभिः शरीरपरिवर्तनैः सह वर्तन्ते इति तादृशैः । ईक्षणविशेषैर्दृष्टिपातविशेषैः । निजस्यात्मनो मनोवृत्तिं मनोरथम् । अकथयन्मह्यं सूचयामास । चतुराभिर्मनोहराभिर्गूढाभिर्गुप्ताभिश्च चेष्टाभिः । अस्या बालचन्द्रिकायाः । मनोऽनुरागं हार्दिकं प्रेमाणम् । सम्यक् साधुतया । ज्ञात्वा विदित्वा । सुखेन यः संगमः संमिलनं तत्रोपायं युक्तिम् । अचिन्तयं विचारितवान् । अन्यदाऽन्यस्मिन्काले । 'सर्वैकान्यकिंयत्तदः काले दा' इति दाप्रत्ययः । शकुनैः पक्षिभिः तद्रवैरित्यर्थः । 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः । भवतो राजवाहनस्य । गतिं गमनं कुत्रेति प्रेक्षिष्यमाणः विचारयिष्यन् । पुरोपान्ते नगरान्तिके वर्तमानं विहारवनं क्रीडोद्यानम् । उपेत्य गत्वा । महीरुहे वृक्षे । शकुन्तवचनानि पक्षिणां वाक्यानि । शृण्वन्नाकर्णयन् । अहं पुष्पोद्भवः । उत्कलि-



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

विनोदपरायणो वनान्तरे परिभ्रमन्सरोवरतीरे चिन्ताक्रान्तचित्तां दीनवदनां मन्मनोरथैकभूमिं बालचन्द्रिकां व्यलोकयम् ।तस्याः ससंभ्रमप्रेमलज्जाकौतुकमनोरमं लीलाविलोकनसुखमनुभवन्सुदत्या वदनारविन्दे विषण्णभावं मदनकदनखेदानुभूतं ज्ञात्वा तन्निमित्तं ज्ञास्यंल्लीलया तदुपकण्ठमुपेत्यावोचम्––'सुमुखि, तव मुखारविन्दस्य दैन्यकारणं कथय' इति । सा रहस्यसंजातविश्रम्भतया विहाय लज्जाभये शनैरभाषत––'सौम्य, मानसारो मालवाधीश्वरो वार्धकस्य प्रबलतया निजनन्दनं दर्पसारमुज्जयिन्यामभ्यषिञ्चत् । स कुमारः सप्तसागरपर्यन्तं महीमण्डलं पालयिष्यन्निजपैतृष्वसेयावुद्दण्डकर्माणौ चण्डवर्मदारुवर्माणौ धरणीभरणे नियुज्य तपश्चरणाय राजराजगिरिमभ्यगात् । राज्य सर्वमसपत्नं शासति चण्डवर्मणि दारुवर्मा मातुलाग्रजन्मनः शासनमतिक्रम्य पारदार्यपरद्रव्यापहरणादि दुष्कर्म कुर्वाणो मन्मथसमानस्य भवता लावण्यात्तचित्तां मामेकदा विलोक्य कन्यादूषणदोषं दूरीकृत्य बलात्कारेण रन्तुमुद्युङ्क्ते तच्चिन्तया दन्यमग-

---

काया उत्कण्ठाया विनोदेऽपनोदने परायणस्तत्परः । वनान्तरे अरण्यमध्यदेशे । परिभ्रमन् परितः संचरन् । सरोवरस्य कस्याचित्कासारश्रेष्ठस्य । तीरे कूले । 'पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः' इत्यमरः । 'कूलं रोधश्च तीरं च' इति च । चिन्तयाऽऽक्रान्तं व्याकुलं चित्तं मनोय स्यास्ताम् । व्यलोकयं दृष्टवान् । 'लोकृ लोचने' । संभ्रमस्त्वरा, प्रेमा स्नेहः लज्जा त्रपा, कौतुकं कौतूहलमेभिर्मनोहरं रमणीयम् । लीलया यद्विलोकनं कटाक्षवीक्षणं तस्य सुखमानन्दमनुभवन्निर्विशन् । शोभना दन्ता यस्याः सा सुदती तस्याः । 'वयसि दन्तस्त दतृ' इति दत्रादेशः । विषण्णभावं विषादम् । मदनकदनेन कामबाणप्रहारेण यः खेदः दुःखं तदनुभूतम् । तस्य निमित्तं कारणम् । ज्ञास्यन्नवगमिष्यन् । तस्या उपकण्ठमन्तिकम् । अवोचमब्रवम् । दैन्यस्य कार्पण्यस्य कारणं हेतुम् । रहस्ये एकान्ते संजातविस्रम्भतया जातविश्वासतया । विहाय दूरीकृत्य । **सौम्येति** । हे सुन्दर ! वार्धकस्य स्थविरतायाः । प्रबलतया आधिक्येन । निजनन्दनमात्मसूनुम् अभ्यषिञ्चत् अभिषेकं कृतवान् । 'षिच क्षरणे' । 'शे मुचादीनाम्' इति नुम् । पालयिष्यन् पालयितुकामः । पैतृष्वसेयौ पितृष्वसुरपत्ये पुमांसौ । 'पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः' इत्यमरः । 'ढकि लोपः' इति ढकि परे पितृष्वसृशब्दस्यान्तलोपविधानादेव ज्ञापकाड्ढक् अन्त्यलोपश्च । उद्दण्डकर्माणौ क्रूरकर्माणौ । धरणीभरणे भूपरिपालने । नियुज्याज्ञाप्य । राजराजगिरिं कैलासम् । 'मनुष्यधर्मा धनदो राजराजो धनाधिपः' इति कुबेरपर्यायेऽमरः । असपत्नं विरोधिशून्यम् । शासति पालयति सति मातुले मातुर्भ्राता । दर्पसारः अग्रजन्मा ज्येष्ठभ्राता चण्डवर्मा तयोः । 'मातुर्भ्राता तु मातुलः' इत्यमरः । अतिक्रम्योल्लङ्घ्य । परदारा एव दारा यस्य स परदारः । तस्य भावः कर्म वा पारदार्यम् । 'गुणवचन–' इति ष्यञ् । परदारगमनमित्यर्थः । द्रव्यापहरणं परवित्तचौर्यं चादिनी यस्य तादृशम् । दुष्कर्म निन्द्यां प्रवृत्तिं कुर्वाण आचरन् । लावण्येन सौन्दर्येणात्तमाकृष्टं चित्तं मनो यस्यास्तथाभूताम् । कन्याया दूषणे परामर्शे दोषम् । रन्तुं विहर्तुम् । उद्युङ्क्ते

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

च्छम्' इति । तस्या मनोगतम्, मयि रागोद्रेकम्, मन्मनोरथसिद्ध्यन्तरायं च निशम्य बाष्पपूर्णलोचनां तामाश्वास्य दारुवर्मणो मारणोपायं च विचार्य वल्लभामवोचम्--'तरुणि, भवदभिलाषिणं दुष्टहृदयमेनं निहन्तुं मृदुरुपायः कश्चिन्मया चिन्त्यते । यक्षः कश्चिदधिष्ठाय बालचन्द्रिकां निवसति । तदाकार-संपदाशाश्रृंखलितहृदयो यः संबन्धयोग्यः साहसिको रतिमन्दिरे तं यक्षं निर्जित्य तयैकसखीसमेतया मृगाक्ष्या संलापामृतसुखमनुभूय कुशली निर्गमिष्यति, तेन चक्रवाकसंशयाकरपयोधरा विवाहनीयेति सिद्धेनैकेनावादीति पुरजनस्य पुरतो भवदीयैः सत्यवाक्यैर्जनैरसकृत्कथनीयम् । तदनु दारुवर्मा वाक्यानीत्थंविधानि श्रावंश्रावं तूष्णीं यदि भिया स्थास्यति तर्हि वरम्, यदि वा दौर्जन्येन त्वया सङ्ग-मङ्गीकरिष्यति, तदा स भवदीयैरित्थं वाच्यः--'सौम्य, दर्पसारवसुधाधिपामात्यस्य भवतोऽस्मिन्निवासे साहसकरणमनुचितम् । पौरजनसाक्षिकं भवन्मन्दिर-मानीतया तोयजाक्ष्या सह क्रीडन्नायुष्मान्यदि भविष्यति तदा परिणीय तरुणीं मनोरथान्निर्विश' इति । सोऽप्येतदङ्गीकरिष्यति । त्वं सखीवेषधारिणा मया

---

प्रयतते । तस्या बालचन्द्रिकाया मनोगतमन्तःकरणगतमभिप्रायम् । रागोद्रेकमनुरागातिशयम् । मम मनोरथस्य कामस्य सिद्धेरन्तरायं विघ्नं च । निशम्याकर्ण्य । आश्वास्य सान्त्वयित्वा । वल्लभां प्रियाम् । भवदभिलाषिणं भवतीं कामयमानम् । निहन्तुं विनाशयितुम् । मृदुः सरलः । चिन्त्यते विचार्यते । यक्ष इति । अधिष्ठायाश्रित्य । 'अधिशीङ्स्थासां कर्म' इति बालचन्द्रिकायाः कर्मत्वम् । तस्याः बालचन्द्रिकाया आकारसंपदि सौन्दर्यसमृद्धौ आशया अभिलाषेण शृंखलितहृदयः निबद्धान्तःकरणः संबन्धाय योग्योऽर्हः । सहसा प्रवर्तते साहसिकः । 'ओजःसहोऽम्भसा वर्तते' इति ठक् । रतिमन्दिरे संभोगगृहे । निर्जित्य परिभाव्य । मृगस्य हरिणस्येवाक्षिणी यस्याः सा मृगाक्षी । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षचि । 'षिद्गौरादिभ्यश्च' इति ङीष् । तया । कुशली क्षेमवान् यक्षेणानाहत इत्यर्थः । चक्रवाकविषयकं संशयं कुरुत इति चक्रवाकसंशयकरौ । तत्समानाविति यावत् । तादृशौ पयोधरौ कुचौ यस्याः सा । विवाहनीया परिणेतुमर्हा । सिद्धेन केनचित्तापसेनावादि भाषितम् । पुरजनस्य नगरलोकस्य । पुरतः अग्रे । सत्यवाक्यैः सत्यवादिभिः । असकृत्पुनःपुनः । इत्थंविधानि पूर्वोक्तप्रकाराणि । श्रावंश्रावमसकृत् श्रुत्वा । तूष्णीं त्वत्संगमे उद्योगं विनैव । भिया साध्वसेन । 'भीतिर्भीः साध्वसं भयम्' इत्यमरः । वरमुचितम् । यदि वा तूष्णीमस्थिते । दौर्जन्येन दुर्जनतया । स दारुवर्मा । वाच्योऽभिधेयः । निवासे साधारणकुटीरे । साहसकरणं यक्षेण साकं स्वकीयबलप्रदर्शनम् । पुरे भवाः पौराः ते जनाः साक्षिणः साक्षाद्द्रष्टारो यस्मिन् कर्मणि तद्यथा तथा । 'साक्षाद्द्रष्टरि संज्ञायाम्' इति निपातनात्साधुः । भवतो मन्दिरं प्रासादम् । आनीतया प्रापितया तोयजाक्ष्या कमललोचनया बालचन्द्रिकयेति यावत् । क्रीडन्विहरन् । आयुष्मान् चिरजीवी । मनोरथान्कामान्निर्विशोपभुङ्क्ष्व । सोऽपीति । दारुवर्मा ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

सह तस्य मन्दिरं गच्छ। अहमेकान्तनिकेतने मुष्टिजानुपादाघातैस्तं रभसान्निहत्य पुनरपि वयस्यामिषेण भवतीमनु निःशङ्कं निर्गष्यामि। तदेनमुपायमङ्गीकृत्य विगतसाध्वसलज्जा भवज्जनकजननीसहोदराणां पुरत आवयोः प्रेमातिशयमाख्याय सर्वथास्मत्परिणयकरणेताननुनयेः। तेऽपि वंशसंपल्लावण्याढ्याय यूने मह्यं त्वां दास्यन्त्येव। दारुवर्मणो मारणोपायं तेभ्यः कथयित्वा तेषामुत्तरमाख्येयं मह्यम्' इति। सापि किंचिदुत्फुल्लसरसिजानना मामब्रवीत्—'सुभग, क्रूरकर्माणं दारुवर्माणं भवानेव हन्तुमर्हति। तस्मिन्हते सर्वथा युष्मन्मनोरथः फलिष्यति। एवं क्रियताम्। भवदुक्तं सर्वमहमपि तथा करिष्ये' इति मामसकृद्विवृत्तवदना विलोकयन्ती मन्दंमन्दमगारमगात्। अहमपि बन्धुपालमुपेत्य शकुनज्ञात्तस्मात् 'त्रिंशद्दिवसानन्तरमेव भवत्सङ्गः संभविष्यति' इत्यश्रृणवम्। तदनु मदनुगम्यमानो बन्धुपालो निजावासं प्रविश्य मामपि निलयाय विससर्ज। मन्मायोपायवागुरापाशलग्नेन दारुवर्मणा रतिमन्दिरे रन्तुं समाहूता बालचन्द्रिका तं गमिष्यन्ती दूतिकां मन्निकटमभिप्रेषितवती। अहमपि मणिनूपुरमेखलाकङ्कणकटकताटङ्कहारक्षौमकज्जलं वनितायोग्यं मण्डनजातं निपुणतया तत्तत्स्थानेषु निक्षिप्य सम्यगङ्गीकृतमनोज्ञवेषो वल्लभया तया सह तदागारद्वारोपान्तमगच्छम्। द्वाःस्थकथितास्मदागमनेन सादरं विहिताभ्युद्गतिना तेन द्वारोपा-

---

एकान्तनिकेतने रहस्यमन्दिरे। आघातैः ताडनैः। रभसाद्वेगेन। वयस्यामिषेण सखीव्याजेन। निःशङ्कं भयरहितम्। विगते साध्वसो भयं लज्जा च यस्यास्तादृशी भूत्वा। आवयोः परिणयकरणे विवाहोद्योगे अनुनयेः बोधयेः। उत्तरं प्रतिवचनमाख्येयं कथनीयम्। किञ्चिदुत्फुल्लमीषद्विकसितं यत्सरसिजं पद्मं तदिवाननं मुखं यस्यास्तथा भूत्वा। अर्हति समर्थो भवति। युष्माकं मनोरथो मत्परिग्राहसम्बन्धी। फलिष्यति निष्पन्नो भविष्यति। क्रियतामनुष्ठीयताम्। विवृत्तं गमनसमयेऽपि परावर्तितं वदनं यया तादृशी सती। अगारं स्वगृहम्। **अहमिति**। पुष्पोद्भवः। बन्धुपालं शकुनं पश्यन्तं बालचन्द्रिकायाः पितरम्। भवता राजवाहनेन सह संगः सम्मेलनम्। अश्रृणवमाकर्णितवान्। 'श्रु श्रवणे'। 'श्रुवः शृ च' इति श्नुः श्रादेशश्च। मयाऽनुगम्यमानः अनुव्रज्यमानः। आवासं गृहम्। प्रविश्य गत्वा। निलयाय गृहं गन्तुम्। 'तुमर्थाच्च भाववचनात्' इति चतुर्थी। विससर्जानुज्ञातवान्। मम मायोपायः कपटयुक्तिः सैव वागुरा मृगबन्धनी तस्याः पाशेषु रज्जुषु लग्नेन संसक्तेन। 'वागुरा मृगबन्धनी' इत्यमरः। रतिमन्दिरे क्रीडागारे। समाहूताऽऽकारिता। दूतिकां काञ्चन परिचारिकाम्। प्रेषितवती प्रेषयामास। नूपुरः पादकटकः, मेखला कटिभूषणम्, कङ्कणं करभूषणम्, कटकं वलयः, ताटङ्कं कर्णभूषणम्, हारो मुक्तावली, क्षौमं कौशेयं पट्टवस्त्रम्, कज्जलं नेत्राञ्जनमेतदादिकं वनितायोग्यं योषिदुपयुक्तं मण्डनजातं विभूषणसमुदायम्। निपुणतया कौशल्येन। निक्षिप्य धारयित्वा। अङ्गीकृतो धृतो मनोज्ञवेषो मनोहारि नेपथ्यं येन तादृशः सन्। 'आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्' इत्यमरः। तया बालचन्द्रिकया। तस्य दारुवर्मणः। आगारस्य भवनस्य द्वारोपान्तं प्रतीहारनिकटम्। अगच्छमगमम्। द्वाःस्थैः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

न्तनिवारिताशेषपरिवारेण मदन्विता बालचन्द्रिका संकेतागारमनीयत । नगरव्याकुलां यक्षकथां परीक्षमाणो नागरिकजनोऽपि कुतूहलेन दारुवर्मणः प्रतीहारभूमिमगमत् । विवेकशून्यमतिरसौ रागातिरेकेण रत्नखचितहेमपर्यङ्के हंसतूलगर्भशयनमानीय तरुणीं तस्यै मह्यं तामिस्रासम्यगनवलोकितपुंभावाय मनोरमस्त्रीवेषाय च चामीकरमणिमयमण्डनानि सूक्ष्माणि चित्रवस्त्राणि कस्तूरिकामिलितं हरिचन्दनं कर्पूरसहितं ताम्बूलं सुरभीणि कुसुमानीत्यादिवस्तुजातं समर्प्य मुहूर्तद्वयमात्रं हासवचनैः संलपन्नातिष्ठत् । ततो रागान्धतया सुमुखीकुचग्रहणे मतिं व्यधत्त । रोषारुणितोऽहमेनं पर्यङ्कतला-

---

द्वारपालैः कथितं निवेदितं आवयोरागमनं यस्मै तथाविधेन । सादरमादरेण सह । विहिता कृताऽभ्युद्गतिराभिमुख्येनागमनं येन तादृशेन । द्वारोपान्ते द्वारबहिर्देशे एव निवारितो निषिद्धोऽशेषपरिवारो येन । मयाऽन्विताऽनुगता । संकेतागारं संकेतगृहमनीयत नीता । **नगरेति** । नगरे पुरे व्याकुलामुद्घोषिताम् । परीक्षमाणः 'किंवा करिष्यति दारुवर्मा' इति प्रतिपालयन् । नगरे भवो नागरिकस्तादृशो जनः । 'नगराद्वुञ्' इति वुञ्प्रत्ययः । प्रतीहारभूमिं द्वारदेशम् । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । अगमत्प्राप्तः । विवेकेन कार्याकार्यविचारणया शून्या रहिता मतिर्बुद्धिर्यस्य । असौ दारुवर्मा । रागातिरेकेण प्रेमातिशयेन । रत्नैर्मणिभिः खचिते प्रत्युप्ते हेमपर्यंके सुवर्णमञ्चे । 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः । हंसानां तूलाः बालरोमाणि गर्भे यस्यैतादृशं शयनम् । आनीय प्रापय्य । 'अकथितं च' इति द्विकर्मकः । तामिस्रायामन्धकारनिबिडायां रात्रौ सम्यक् साधुतयाऽनवलोकितोऽदृष्टः पुंभावः पुरुषत्वं यस्य तादृशाय । 'तमिस्रा तामसी रात्रिः' इत्यमरः । मनोरमः सुन्दरः स्त्रिया इव वेषो यस्य तथाविधाय । चामीकरमयाणि सौवर्णानि मणिमयानि च मण्डनानि भूषणानि । 'चामीकरं जातरूपं महारजतकाञ्चने' 'अलंकारस्त्वाभरणं परिष्कारो विभूषणम् । मण्डनम्' इत्यमरः । सूक्ष्माणि मृदुलानि । चित्राणि नानावर्णानि वस्त्राणि वासांसि । 'वस्त्रमाच्छादनं वासः' इत्यमरः । कस्तूरिकया मृगमदेन मिलितं मिश्रितं हरिचन्दनं मलयजम् । 'मृगनाभिर्मृगमदः कस्तूरी' इत्यमरः । कर्पूरेण घनसारेण सहितं योजितम् । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञो सिताभ्रो हिमवालुका' इत्यमरः। ताम्बूलं नागवल्लीदलम् 'ताम्बूलवल्ली ताम्बूली नागवल्ली'इत्यमरः। सुरभीणि सुगन्धीनि । 'समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः।इष्टगन्धः सुगन्धिः स्यात्'इत्यमरः।कुसुमानि पुष्पाणि । 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्'इत्यमरः। इत्यादि वस्तुजातमेतदादि पदार्थनिचयम् । समर्प्य दत्त्वा।द्वादशक्षणात्मकः कालो मुहूर्तस्तद्द्वयपर्यन्तम्।हासवचनैः परिहासप्रधानैर्वचोभिः । संलपन्मिथो भाषमाणः अतिष्ठत्स्थितवान्।**तत इति** । रागान्धतयाऽनुरागातिरेकेण विवेकशून्यतया। सुमुख्या बालचन्द्रिकायाः कुचयोः पयोधरयोः ग्रहणे। मतिं बुद्धिम् । व्यधत्त विदधे । रोषेण कोपेनारुणितो रक्तः । अहं पुष्पोद्भवः । एनं दारुवर्माणम् । पर्यंकतलान्मञ्चोपरिभागात् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

न्निःशङ्को निपात्य मुष्टिजानुपादघातैः प्राहरम् । नियुद्धरभसाविकलमलंकारं पूर्ववन्मेलयित्वा भयकम्पितां नताङ्गीमुपलालयन्मान्दिराङ्गणमुपेतः साध्वसकम्पित इवोच्चैरकूजमहम्—' हा, बालचन्द्रिकाधिष्ठितेन घोराकारेण यक्षेण दारुवर्मा निहन्यते । सहसा समागच्छत । पश्यतेमम्' इति । तदाकर्ण्य मिलिता जनाः समुद्यद्बाष्पा हाहानिनादेन दिशो बधिरयन्तः ' बालचन्द्रिकामधिष्ठितं यक्षं बलवन्तं शृण्वन्नपि दारुवर्मा मदान्धस्तामेवायाचत । तदसौ स्वकीयेन कर्मणा निहतः । किं तस्य विलापेन' इति मिथो लपन्तः प्राविशन् । कोलाहले तस्मिंश्चटुललोचनया सह नैपुण्येन सहसा निर्गतो निजावासमगाम् । ततो गतेषु कतिपयदिनेषु पौरजनसमक्षं सिद्धादेशप्रकारेण विवाह्य तामिन्दुमुखीं पूर्वसंकल्पितान्सुरतविशेषान्यथेष्टमन्वभूवम् । बन्धुपालशकुननिर्दिष्टे दिवसेऽस्मिन्निर्गत्य पुराद्बहिर्वर्तमानो नेत्रोत्सवकारि भवदवलोकनसुखमप्यनुभवामि' इति ।

एवं मित्रवृत्तान्तं निशम्याम्लानमानसो राजवाहनः स्वस्य च सोमदत्तस्य च

---

निःशंको निर्भीकः । निपात्य अवस्रस्य । प्राहरं ताडितवान् । नियुद्धे बाहुयुद्धसमये रभसेन वेगेन विकलं स्थानान्तरगतमलंकारं भूषणम् । मेलयित्वा तत्तत्स्थाने निवेश्य । भयेन कम्पितां चकिताम् नतान्यङ्गानि यस्याः तां बालचन्द्रिकाम् । ' अङ्गगात्रकण्ठेभ्यो वक्तव्यम् ' इति ङीष् । उपलालयन्समाश्वासयन् । मन्दिरस्य गृहस्य । अङ्गणं चत्वरम् । ' अङ्गणं चत्वराजिरे ' इत्यमरः । उपेत आसन्नः । साध्वसेन भयेन कम्पित इव ' भीतिर्भीः साध्वसं भयम् ' इत्यमरः । अकूजमाक्रोशं कृतवान् । ' कूज अव्यक्ते शब्दे ' हा कष्टम् । ' हा विषादशुगर्तिषु ' इत्यमरः । निहन्यते हिंस्यते । सहसा शीघ्रमेव । मिलिताः समागताः । समुद्यन्ति निर्गच्छन्ति बाष्पाणि अश्रूणि येभ्यः तथाभूतः । हाहानिनादेन हाहा इत्याकारकाक्रन्दनध्वनिना । 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः । दिशः सर्वा अप्याशाः । बधिरयन्तः श्रवणशक्तिहीनाः कुर्वन्तः । बधिरशब्दात् ' तत्करोति तदाचष्टे ' इति णिजन्तात्कर्तरि शता । अधिष्ठितमाक्रम्य वर्तमानम् । शृण्वन्नाकर्णयन्नपि । मदेन गर्वेणान्धः कार्याकार्यविचारशून्यः । तामेव बालचन्द्रिकामेवायाचत परिणेतुं प्रार्थयामास । ' टुयाचृ याच्ञायाम् । किं तस्य विलापेन तमुद्दिश्य परिदेवनेन किं प्रयोजनं न किमपीत्यर्थः । मिथोऽन्योन्यम् । ' मिथोऽन्योन्यं रहस्यपि' इत्यमरः । लपन्तो भाषमाणाः । प्राविशन्यथागतं गताः । कोलाहले तादृशे कलकलनिर्घोषे । चटुललोचनया चञ्चलाक्ष्या । सहसा शीघ्रम् । निर्गतः तद्गृहाद्बहिरागतः । निजावासं स्वमन्दिरम् । **ततः इति** । कतिपयदिनेषु केषुचिद्दिवसेषु गतेषु व्यतीतेषु । पौरजनानां नागरिकाणां समक्षं संमुखम् । विवाह्य परिणीय । पूर्वमेव संकल्पितान्मनसा कर्तव्यत्वेन निश्चितान् । यथेष्टं काममनतिक्रम्य । अन्वभूवमुपभुक्तवान् । निर्दिष्टे सूचिते । नेत्रयोरुत्सवकारि आह्लादजनकम् ।

**एवमिति** । मित्रस्य सुहृदः पुष्पोद्भवस्य वृत्तान्तं चरितम् । निशम्याकर्ण्य । अम्लानमानसः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

वृत्तान्तमस्मै निवेद्य सोमदत्तम् 'महाकालेश्वराराधनानन्तरं भवद्वल्लभां सपरिवारां निजकटकं प्रापय्यागच्छ' इति नियुज्य पुष्पोद्भवेन सेव्यमानो भूस्वर्गायमानमवन्तिकापुरं विवेश। तत्र 'अयं मम स्वामिकुमारः' इति बन्धुपालादये बन्धुजनाय कथयित्वा तेन राजवाहनाय बहुविधां सपर्यां कारयन्सकलकलाकुशलो महीसुरवर इति पुरि प्रकटयन्पुष्पोद्भवोऽमुष्य राज्ञो मज्जनभोजनादिकमनुदिनं स्वमन्दिरे कारयामास ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते पुष्पोद्भवचरितं नाम चतुर्थ उच्छ्वासः ॥ ४ ॥

## पञ्चमोच्छ्वासः ॥ ५ ॥

अथ मीनकेतनसेनानायकेन मलयगिरिमहीरुहनिरन्तरावासिभुजंगमभुक्तावशिष्टेनेव सूक्ष्मतरेण धृतहरिचन्दनपरिमलभरेणेव मन्दगतिना दाक्षिणानिलेनवियोगिहृदयस्थं मन्मथानलमुज्ज्वलयन्, सहकारकिसलयमकरन्दास्वादनरक्तकण्ठानां

---

प्रसन्नचित्तः। निवेद्य कथयित्वा। भवतो वल्लभां प्रियां वामलोचनाम्। नियुज्याज्ञाप्य। भुवि स्वर्ग इवाचरतस्वर्गायमानम्। अवन्तिकापुरमुज्जयिनीपत्तनम्। सपर्यां पूजाम्। 'पूजा नमस्याऽपचितिः सपर्याऽर्चाऽर्हणाः समाः' इत्यमरः। सकलासु कलासु विद्यासु कुशलो निपुणः। महीसुरवरो ब्राह्मणश्रेष्ठः। प्रकटयन्प्रख्यापयन्। अमुष्य राज्ञो राजवाहनस्य मज्जनं स्नानम्। अनुदिनं प्रत्यहम्। कारयामास अचीकरत् 'डुकृञ् करणे' इत्यतो णिजन्ताल्लिटयामि अस्तेरनुप्रयोगः ॥

इति दशकुमारचरितव्याख्यायां मनोरमाख्यायां चतुर्थ उच्छ्वासः समाप्तः ॥ ४ ॥

### अथ पञ्चम उच्छ्वासः ॥ ५ ॥

**अथेति**। राजवाहनस्य पुष्पोद्भवेन साकमवन्तिकानगरीगमनानन्तरम्। मीनः मत्स्यः केतने ध्वजे यस्य सः मन्मथः। 'पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः' 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः। 'मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः' इति च। तस्य सेनानायकेन चमूपतिना। 'ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः' 'अधिभूर्नायको नेता' इत्यमरः। मलयाख्ये गिरौ पर्वते ये महीरुहा वृक्षास्तेषु निरन्तरं सततमावासिनः निवसन्तो ये भुजङ्गमाः सर्पास्तेषां पवनाशित्वात् तैर्भुक्तादास्वादितादवशिष्टेनोर्वरितेनेव स्थितेन। भुक्तावशिष्टत्वं सूक्ष्मतरत्वे हेतुः। 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इत्यमरः। सूक्ष्मतरेण अल्पीयसा धृतः स्वेनोढः हरिचन्दनस्य परिमलभरः सौगन्ध्यातिशयो येन तथाविधेन। परिमलभारवाहित्वं च मान्द्ये सुगन्धित्वे च हेतुः। मन्दगतिना शनैरागच्छता। दक्षिणानिलेन दक्षिणवायुना। 'पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः' इत्यमरः। वियोगिनां रमणीवियुक्तानां हृदयस्थं मनसि वर्तमानम्। 'सुपि स्थः' इति कप्रत्ययः। मन्मथानलं कामाग्निम्। 'कृशानुः पावकोऽनलः' इत्यमरः। उज्ज्वलयन् प्रदीप्तं कुर्वन्। सहकारस्य रसालवृक्षस्य किसलयेषु पल्लवेषु यो मकरन्दः पुष्पमधु तस्यास्वादनेन लेहनेन रक्तः कण्ठो येषाम्। 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' 'पल्लवोऽ-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मधुकरकलकण्ठानां काकलीकलकलेन दिक्चक्रं वाचालयन्, मानिनीमानसोत्कलिकामुपनयन्, माकन्दासिन्दुवाररक्ताशोककिंशुकतिलकेषु कलिकामुपपादयन्, मदनमहोत्सवाय रसिकमनांसि समुल्लासयन्, वसन्तसमयः समाजगाम । तस्मिन्नतिरमणीये कालेऽवन्तिसुन्दरी नाम मानसारनन्दिनी प्रियवयस्यया बालचन्द्रिकया सह नगरोपान्तरम्योद्याने विहारोत्कण्ठया पौरसुन्दरीसमवायसमन्विता कस्यचिच्चूतपोतकस्य छायाशीतले सैकततले गन्धकुसुमहरिद्राक्षतचीनाम्बरादिनानाविधेन परिमलद्रव्यनिकरेण मनोभवमर्चयन्ती रेमे । तत्र रतिप्रतिकृतिमवन्तिसुन्दरीं द्रष्टुकामः काम इव वसन्तसहायः पुष्पोद्भवसमन्वितो

---

स्त्री किसलयम्' 'मकरन्दः पुष्परसः' इत्यमरः । मधुकराणां मधुपानां कलकण्ठानां कोकिलानां च । 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः' इत्यमरः । काकलीकलकलेनाव्यक्तमधुरसूक्ष्मकोलाहलेन । 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे' 'कोलाहलः कलकलः' इत्यमरः । दिशां चक्रं मण्डलम् वाचालयन्मुखरयन् । वागस्यास्तीत्यर्थे 'अलजाटचौ बहुभाषिणि' इति आलचि 'तत्करोति तदाचष्टे' इति णिजन्ताच्छतरि रूपम् । मानिनीनां कुपितानामपि वनितानां मानसे चित्ते उत्कलिकामुत्कण्ठामुपनयन्नुत्पादयन् । 'प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इत्यमरः । 'उत्कण्ठोत्कलिके समे' इति च । 'माकन्दः सहकारे स्यात्' इति मेदिनी । 'सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि' इत्यमरः । 'पलाशे किंशुकः पर्णो वातपः' । 'तिलकस्तिलकालकः' इति च । एतेषु वृक्षभेदेषु कलिकां कोरकमुपपादयन्संजनयन् । 'कलिका कोरकः पुमान्' इत्यमरः । मदनमुद्दिश्य महोत्सवकरणाय । रसिकानां विलासिजनानां मनांसि चित्तानि । समुल्लासयन्प्रोत्साहयन् । वसन्तसमयः पुष्पोद्गमकालः । समाजगाम संप्राप्तः । **तस्मिन्निति** । अतिरमणीयेऽत्यन्तं मनोहारिणि । मानसारस्य नन्दिनी कन्या । प्रियवयस्यथाऽऽप्तसख्या । नगरस्योपान्ते समीपे यद्रम्यं सुन्दरमुद्यानमाक्रीडस्तस्मिन् । 'पुमानाक्रीड उद्यानम्' इत्यमरः । विहारे क्रीडायामुत्कण्ठयाऽभिलाषेण । पौरसुन्दरीणां नागरिकरमणीनां समवायेन गणेन समन्विताऽनुगता । 'सुन्दरी रमणी रामा' 'समुदायः समुदयः समवायश्चयो गणः' इत्यमरः । चूतपोतकस्य बालसहकारतरोः । 'आम्रश्चूतो रसालोऽसौ' 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः । छाययाऽनातपेन शीतले शीते । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । 'तुषारः शीतलः शीतः' इति च । सैकततले सिकतामये प्रदेशे । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । गन्धश्चन्दनम् । कुसुमं पुष्पम् । हरिद्रा वरवर्णिनी । अक्षतास्तस्तण्डुलाः । चीनाम्बरं चीनदेशोत्थं सूक्ष्मांशुकम् 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्' 'निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी, 'अम्बरं व्योम्नि वाससि' इति सर्वत्रामरः । एतदादिना नानाविधेनानेकप्रकारेण परिमलद्रव्यनिकरेण सुगन्धवस्तुजातेन । मनोभवं मन्मथमर्चयन्ती पूजयन्ती । रेमे विहारं कृतवती । 'रमु क्रीडायाम्' **तत्रेति** । उद्यानवने । रतेर्मदनकामिन्याः प्रतिकृतिं प्रतिनिधिभूतां तत्सदृशीमित्यर्थः । 'प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्' इत्यमरः । द्रष्टुं कामो यस्य सः । 'तुं काममन-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

राजवाहनस्तदुपवनं प्रविश्य तत्रतत्र मलयमारुतान्दोलितशाखानिरन्तरसमुद्भिन्नकिसलयकुसुमफलसमुल्लसितेषु रसालतरुषु कोकिलकीरालिकुलमधुकराणामालापाञ्श्रावंश्रावं किञ्चिद्विकसदिन्दीवरकह्लारकैरवराजीवराजीकेलिलोलकलहंससारसकारण्डवचक्रवाकचक्रवालकलरवव्याकुलविमलशीतलसलिलललितानि सरांसि दर्शंदर्शममन्दलीलया ललनासमीपमवाप । बालचन्द्रिकया 'निःशङ्कमित आगम्यताम्' इति हस्तसंज्ञया समाहूतो निजतेजोनिर्जितपुरुहूतो राजवाहनः कृशोदर्या अवन्तिसुन्दर्या अन्तिकं समाजगाम । या वसन्तसहायेन समुत्सुकतया रतेः केलीशालभञ्जिकाविधित्सया कंचन नारीविशेषं विरचय्या-

---

सोरपि' इति मकारलोपः । वसन्तः पुष्पोद्गमकालः सहायोऽनुचरो यस्य स तादृशः । काम इव पुष्पोद्भवेन समन्वितो युक्तः । उपवनमारामम् । 'आरामः स्यादुपवनम्' इत्यमरः । प्रविश्य गत्वा । मलयमारुतेन मलयाचलवायुनाऽन्दोलितास्वीषत्कम्पितासु शाखासु विटपेषु निरन्तरमजस्रं समुद्भिन्नानि विकसितानि यानि किसलयकुसुमफलानि पल्लवपुष्पपक्वफलानि तैः समुल्लसितेषु सुशोभितेषु । रसालतरुष्वाम्रवृक्षेषु । कोकिलाः पिकाः, कीराः शुकाः, एतेषामालीनां पंक्तीनां कुलं मण्डलं तस्य मधुकराणां भ्रमराणां च । 'कोकिलः पिक इत्यपि' 'कीरशुकौ समौ' 'वीथ्यालिरावलिः पङ्क्तिः' इत्यमरः । 'मधुव्रतो मधुकरः' इति च । आलापान् गीतरवान् । श्रावं श्रावं पुनः पुनः श्रुत्वा । किञ्चिद्विकसितानि ईषत्फुल्लानि यानीन्दीवराणि नीलकमलानि, कह्लाराणि सौगन्धिकपुष्पाणि, कैरवाणि कुमुदानि, राजीवाणि पद्मानि एतेषां राजीषु श्रेणीषु केलिलोलाः क्रीडासक्ताः ये कलहंसाः कादम्बपक्षिणः, सारसाः पुष्करपक्षिणः, कारण्डवाः पक्षिविशेषाः, चक्रवाकाः रथाङ्गपक्षिणः एतेषां कलेनाव्यक्तमधुरेण रवेण स्वनेन व्याकुलं व्याप्तं विमलं स्वच्छं, शीतलं तुषारं यत्सलिलं जलं तेन ललितानि मनोज्ञानि सरांसि तडागानि । 'इन्दीवरं च नीलेऽस्मिन्' 'सौगन्धिकं तु कह्लारम्' 'सिते कुमुदकैरवे' 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' 'श्रेणीरेखास्तु राजयः' 'कादम्बः कलहंसः स्यात्' 'पुष्कराह्वस्तु सारसः' 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' 'सलिलं कमलं जलम्' 'पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः' इति सर्वत्रामरः । दर्शंदर्शमभीक्ष्णमवलोक्य । अमन्दया लीलया विलासेन । ललनायाः कान्तायाः अवन्तिसुन्दर्याः । अवाप गतवान् । निःशङ्कं शङ्कां दूरीकृत्य । इतः अनेन मार्गेण । हस्तसंज्ञया करसंकेतेन । समाहूत आकारितः । निजेन तेजसा पराक्रमेण निर्जितः पुरुहूत इन्द्रो येन तथाविधः । 'वृद्धश्रवाः शुनासीरः पुरुहूतः पुरन्दरः' इत्यमरः । कृशमुदरं यस्याः सा । 'नासिकोदर–' इति ङीष् । अन्तिकं समीपम् । येति । अवन्तिसुन्दरी । वसन्तः सहायः परिजनो यस्य तेन मनसिजेन । समुत्सुकयाऽत्यौत्कण्ठ्येन । रतेः स्वप्रियायाः । तस्यै दातुमिति भावः । केल्यै क्रीडार्थं या शालभञ्जिका पुत्तलिका तस्या विधित्सया कर्तुमिच्छया विपूर्वात् 'डुधाञ् धारणपोषणयोः' इत्यत इच्छार्थे सनि 'सनि मीमाघुरभलभ–' इति इसि 'सस्यार्धधातुके' इति सस्य तकारे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । नारीविशेषं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

त्मनः क्रीडाकासारशारदारविन्दसौन्दर्येण पादद्वयम्, उद्यानवनदीर्घिकामत्तमरालिकागमनरीत्या लीलालसगतिविलासम्, तूणीरलावण्येन जङ्घे, लीलामन्दिरद्वारकदलीलालित्येन मनोज्ञमूरुयुगम्, जैत्ररथचातुर्येण घनं जघनम्, किंचिद्विकसल्लीलावतंसकह्लारकोरककोटरानुवृत्या गङ्गावर्तसनाभि नाभिम्, सौधारोहणपरिपाटया वलित्रयम्, मौर्वीमधुकरपङ्क्तिनीलिमलीलया रोमावलिम्, पूर्णसुवर्णकलशशोभया कुचद्वन्द्वम्, लतामण्डपसौकुमार्येण बाहू, जयशङ्खाभिख्यया कण्ठम्, कमनीयकर्णपूरसहकारपल्लवरागेण प्रतिबिम्बीकृतबिम्बं रदनच्छदम्, बाणायमानपुष्पलावण्येन शुचि स्मितम्, अग्रदूतिकाकलकण्ठिकाकलालापमाधु-

---

लोकातिरिक्तां काञ्चन सुन्दरीम् । विरचय्य निर्माय । आत्मनो मन्मथस्य । क्रीडाकासारे विहारसरोवरे स्थितम् । 'कासारः सरसी सरः' इत्यमरः । शरदि भवं शारदम् । 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यण् । तादृशं च यदरविन्दं कमलं तस्य सौन्दर्येण चारुतया । उद्यानवने या दीर्घिका वापी 'वापी तु दीर्घिका' इत्यमरः । तत्र स्थितानां मत्तानामतिपुष्टानां च मरालिकानां हंसीनां गमनरीत्या संचारविशेषेण । लीलया क्रीडयाऽलसं मन्दं गतिविलासं गमनचातुरीम् । तूणीरयोर्निषङ्गयोः 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । जंघे प्रसृते । लीलामन्दिरस्य क्रीडागृहस्य द्वारे प्रतीहारे ये कदल्यौ रम्भास्तम्भौ तयोर्लालित्येन सुषमया । 'कदली वारणबुसा रम्भा मोचांऽशुमत्फला' इत्यमरः । ऊरुयुगं सक्थिद्वयम् । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । घनं निबिडम् । जघनं कटिपुरोभागम् । 'स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः । किञ्चिद्विकसन् ईषत्प्रफुल्लः लीलावतंसः विहारकालेऽलंकाररूपेण कर्णे धार्यमाणश्च यः कह्लारकोरकः सौगन्धिककुसुमकलिका तस्य कोटरानुवृत्त्या विवरानुरोधेन । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' 'निष्कुहः कोटरं वा ना' इत्यमरः । गङ्गायाः सुरनिम्नगाया आवर्तेन जलभ्रमेण सनाभि सदृशम् । नाभिमुदरगर्तम् । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । सौधस्य सुधया रञ्जितस्य प्रासादोपरितलस्य यदारोहणं सोपानं तस्य परिपाट्या रीत्या । 'आरोहणं स्यात्सोपानम्' इत्यमरः । वलित्रयं त्रिवलीभङ्गम् । मौर्वीभूता धनुर्गुणरूपा या मधुकरपंक्तिः भ्रमरश्रेणी तस्या नीलिमलीलया कार्ष्ण्येन 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । नीलस्य भावो नीलिमा 'वर्णदृढादिभ्यः ष्यञ्च' इत्यत्र चदिमनिच् । रोमावलिं तनूरुहराजिम् 'तनूरुहं रोम लोम' इत्यमरः । कुचद्वन्द्वं स्तनयुगलम् । सौकुमार्येण म्रदिम्ना । बाहू भुजौ 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । अभिख्यया कान्त्या । 'अभिख्या नामशोभयोः' इत्यमरः । कण्ठं गलम् । 'कण्ठो गलः' इत्यमरः । कमनीयो मनोहरः कर्णपूरः कर्णालङ्कारभूतश्च यः सहकारपल्लवः आम्रकिसलयं तस्य रागेण रक्ततया । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । प्रतिबिम्बीकृतं प्रतिच्छायात्वेन रचितं ततोऽप्यतिरिक्ततया निराकृतमित्यर्थः । तादृशं बिम्बमेतन्नाम्ना प्रसिद्धं फलं येन तथाविधं रदनच्छदमधरम् । 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया' 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः । बाणा इवाचरन्ति यानि पुष्पाणि

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

र्येण वचनजातम्, सकलसैनिकनायकमलयमारुतसौरभ्येण निःश्वासपवनम्, जयध्वजमीनदर्पेण लोचनयुगलम्, चापयष्टिश्रिया भ्रूलते, प्रथमसुहृदः सुधाकरस्यापनीतकलङ्कया कान्त्या वदनम्, लीलामयूरबर्हभङ्ग्या केशपाशं च विधाय समस्तमकरन्दकस्तूरिकासंमितेन मलयजरसेन प्रक्षाल्य कर्पूरपरागेण संमृज्य निर्मितेव रराज॥ सा मूर्तिमतीव लक्ष्मीर्मालवेशकन्यका स्वेनैवाराध्यमानं संकल्पितवरप्रदानायाविर्भूतं मूर्तिमन्तं मन्मथमिव तमालोक्य मन्दमारुतान्दोलिता लतेव मदनावेशवती चकम्पे। तदनु क्रीडाविश्रम्भान्निवृत्ता लज्जया कानिकान्यपि

---

' अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ' इत्युक्तनामानि कुसुमानि तेषां लावण्येन सौन्दर्येण । शुचि धवलं स्मितं मन्दहास्यम् । ' स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम् ' इत्यमरः । अग्रदूतिका वसन्तसहायस्य मदनस्यागमनं पुरो गत्वा दूतीव सूचयन्ती या कलकण्ठिका कोकिला तस्याः कलालापस्याव्यक्तमधुरस्वरस्य माधुर्येण मधुरतया । वचनजातं वाग्जालम् । सकलानां सैनिकानां भटानां नायकस्याधिपतेः मलयमारुतस्य मलयाचलवायोः सौरभ्येण सौगन्ध्येन । निश्वासपवनं श्वासवायुम् । जयध्वजे विजयपताकायां वर्तमानयोर्मीनयोर्मत्स्ययोर्दर्पेणावलेपेन लोचनयुगलं नेत्रद्वयम् । ' दर्पोऽवलेपोऽवष्टम्भः ' इत्यमरः । चापयष्टेः धनुष्काण्डस्य श्रिया कान्त्या । भ्रूलते लतासदृशे भ्रुवौ । ' ऊर्ध्वे दृग्यां भ्रुवौ स्त्रियौ ' इत्यमरः । प्रथमसुहृदः प्रधानमित्रस्य सुधाकरस्य चन्द्रमसः । अपनीत उद्धृतः कलङ्को लाञ्छनं यस्यास्तादृश्या कान्त्या शोभया वदनं मुखम् । ' कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ' इत्यमरः । लीलार्थं पोषिता ये मयूरा बर्हिणस्तेषां वर्हभङ्ग्या पिच्छपरिपाट्या केशपाशं कचकलापं च विधाय कल्पयित्वा । ' मयूरो बर्हिणो बर्ही ' ' पिच्छबर्हे नपुंसके ' इत्यमरः । ' कचः केशः शिरोरुहः ' ' पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ' इति च । समस्तैर्मकरन्दैः पुष्परसैः कस्तूरिकया मृगमदेन संमितेन संयुक्तेन । ' मकरन्दः पुष्परसः ' ' मृगनाभिर्मृगमदः कस्तूरी ' इत्यमरः । मलयजरसेन चन्दनजलेन । प्रक्षाल्य स्नापयित्वा । कर्पूरस्य घनसारस्य परागेण चूर्णेन । संमृज्य संशोध्य । निर्मितेव कल्पितेव । रराज शुशुभे । ' राजृ दीप्तौ ' लिट् । सेति । मूर्तिमती देहधारिणी । मालवेशस्य मानसारस्य कन्यका दुहिताऽवन्तिसुन्दरी । स्वेनात्मनाऽऽराध्यमानं पूज्यमानम् । संकल्पिता मनसा लिप्सिता ये वरास्तेषां वरस्य भर्तुर्वा प्रदानाय वितरणायाविर्भूतं कृतसांनिध्यम् । मन्मथमिव काममिव स्थितम् । तं राजवाहनमालोक्य दृष्ट्वा । मन्दमारुतेन मन्दवायुना । ' समीरमारुतमरुत् ' इत्यमरः । आन्दोलिता डोलायिता लता वल्लीव । मदनस्यावेश उद्वेगस्तद्वती तेन युक्ता । चकम्पेऽकम्पत । ' कपि किंचिच्चलने' । तदनु ततः पश्चात् । क्रीडाविस्रम्भात् विहारासक्तेः । निवृत्ता पराङ्मुखीभूता । लज्जया व्रीडया ' मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः । कानि कान्यपि नानाप्र-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

भावान्तराणि व्यधत्त । 'ललनाजनं सृजता विधात्रा नूनमेषा घुणाक्षरन्यायेन निर्मिता । नो चेदब्जभूरेवंविधानिर्माणनिपुणो यदि स्यात्तर्हि तत्समानलावण्यामन्यां तरुणीं किं न करोति' इति सविस्मयानुरागं विलोकयतस्तस्य समक्षं स्थातुं लज्जिता सती किंचित्सखीजनान्तरितगात्रा तन्नयनाभिमुखैः किञ्चिदाकुञ्चितै रेचितभ्रूलतैरपाङ्गवीक्षितैरात्मनः कुरङ्गस्यानायायमानलावण्यं राजवाहनं विलोकयन्त्यातिष्ठत् । सोऽपि तस्यास्तदोत्पादितभावरसानां सामग्र्या लब्धबलस्येव विषमशरस्य शरव्यायमाणमानसो बभूव । सा मनसोत्थमचिन्तयत्—'अनन्यसाधारणसौन्दर्येणानेन कस्यां पुरि भाग्यवतीनां तरुणीनां लोचनोत्सवः क्रियते । पुत्ररत्नेनामुना पुरन्ध्रीणां पुत्रवतीनां सीमन्तिनीनां का नाम

---

काराणि । भावान्तराणि इङ्गितविशेषान् । व्यधत्ताविष्कृतवती । **ललनेति** । कान्ताजनं सृजतोत्पादयता । विधात्रा ब्रह्मणा । 'विधाता विश्वसृड्विधिः' इत्यमरः । नूनं निश्चयेन । 'नूनं तर्केऽर्थनिश्चये' इत्यमरः । एषाऽवन्तिसुन्दरी । घुणाक्षरन्यायेन नदीपुलिनादौ स्वैरं संचरन्तः कीटा यथाऽकस्मादेव कानिचिदक्षराणि स्वगतिरेखया निर्मिमते तत्परिपाट्यैव निर्मिताऽकस्मादेवोत्पादिता इतरवनितास्वेतादृक्सौष्ठवादर्शनात् । नोचेत् एवं न स्याद्यदि । अब्जभूः धाता । एवंविधानामित्थंप्रकाराणां सुन्दरीणां निर्माणे विधाने निपुणः समर्थः । यदि स्यात् भवेच्चेत् । तदा तादृशनैपुण्ये सति । तयाऽवन्तिसुन्दर्या समानलावण्यां समानरूपाम् । तरुणीं सुन्दरीम् । किं न करोति किमिति नोत्पादयति । 'किं पृच्छायां जुगुप्सने' इति नानार्थेऽमरः । विस्मयोऽद्भुतमनुरागः प्रेमा ताभ्यां सह । 'विस्मयोऽद्भुतमाश्चर्यम्' इत्यमरः । विलोकयतः पश्यतस्तस्य राजवाहनस्य समक्षमभिमुखम् । लज्जिता त्रपान्विता सती । सखीजनेनान्तरितं तिरोभूतं गात्रं वपुर्यस्यास्तादृशी । 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' । तस्य राजवाहनस्य नयनयोराभिमुखैः संमुखैः । किंचिदाकुञ्चितैः संकोचेनेषत्प्रतिनिवृत्तैः । रेचिते वक्रीकृते भ्रूलते यैस्तादृशैः । अपाङ्गवीक्षितैः नेत्रान्तविलोकनैः । 'अपाङ्गौ नेत्रयोरन्तौ' इत्यमरः । आत्मनः कुरङ्गस्यावन्तिसुन्दरीरूपहारिणस्य । यथा जालेन हरिणो गृह्यते एवं तस्य सौन्दर्यावलोकनेनावन्तिसुन्दर्या अपि गृहीतप्रायत्वात् । 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इत्यमरः । आनायो जालं तद्वदाचरल्लावण्यं सौन्दर्यं यस्य तम् । 'आनायः पुंसि जालं स्यात्' इत्यमरः । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । विलोकयन्ती सादरमवेक्षमाणा । अतिष्ठदवर्तत । **सोऽपीति** । उत्पादितानां जनितानां भावानां लज्जादिशृङ्गारानुभावानां रसस्य शृङ्गारस्य च सामग्र्या संपूर्णतया । लब्धं बलं धैर्यं येन तथाविधस्य । विषमाः पञ्चसंख्याकाः शरा बाणा यस्य तादृशस्य कामस्य । शरव्यं लक्ष्यं वेध्यमित्यर्थः । 'लक्ष्यं लक्षं शरव्यं च' इत्यमरः । तदिवाचरन्मानसं यस्य तादृशो बभूव संजातः । इत्थमनेन प्रकारेण । 'इदमस्थमुः' इति निष्पन्नः । अनन्यसाधारणसौन्दर्येणालौकिकलावण्येन । नेत्रोत्सवः नयनयोराह्लादः । क्रियते उत्पाद्यते । कुत्रत्य इति भावः । पुत्ररत्नेन श्रेष्ठेन पुत्रेण । पुरन्ध्रीणां कुटुम्बिनीनां पुत्रवतीनां पुत्रयुक्तानां सीमन्तिनीनां नारीणाम् । 'नारी सीमन्तिनी वधूः' इत्यमरः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

सीमन्तमौक्तिकीक्रियते । कास्य देवी । किमत्रागमनकारणमस्य । मन्मथो मामपहसितनिजलावण्यमेनं विलोकयन्तीमसूययेवातिमात्रं मथ्नन्निजनाम सान्वयं करोति । किं करोमि । कथमयं ज्ञातव्यः' इति । ततो बालचन्द्रिका तयोरन्तरङ्गवृत्तिं भावविवेकैर्ज्ञात्वा कान्तासमाजसंनिधौ राजनन्दनोदन्तस्य सम्यगाख्यानमनुचितमिति लोकसाधारणैर्वाक्यैरभाषत—'भर्तृदारिके, अयं सकलकलाप्रवीणो देवतासांनिध्यकरण आहवनिपुणो भूसुरकुमारो मणिमंत्रौषधिज्ञः परिचर्यार्हो भवत्या पूज्यताम्' इति। तदाकर्ण्य निजमनोरथमनुवदन्त्या बालचन्द्रिकया संतुष्टान्तरङ्गा तरङ्गावली मन्दानिलेनेव संकल्पजेनाकुलीकृता राजकन्या जितमारं कुमारं समुचितासनासीनं विधाय सखीहस्तेन शस्तेन गन्धकुसुमाक्षतघनसारताम्बूलादिनानाजातिवस्तुनिचयेन पूजां तस्मै कारयामास । राजवाहनोऽप्येवमचिन्तयत्—'नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती । नो चेदेत-

---

सीमन्तमौक्तिकीक्रियते केशपाशगतमध्यरेखायां मौक्तिकत्वेन धार्यते । यस्याः पुत्र एतादृशः सा सर्वाभिः श्लाघ्यैव भवितुमर्हतीति भावः । अस्य राजवाहनस्य देवी महिषी का । अत्रोज्जयिनीनगरे आगमनस्यापि किंवा कारणं निमित्तं स्यात् । मन्मथः कामः अपहसितं तिरस्कृतं निजलावण्यं कामस्य सौन्दर्यं येन तथाविधमेनं राजवाहनं विलोकयन्तीं पश्यन्तीं मामसूयया ईर्ष्ययेवातिमात्रं भृशं मथ्नन् पीडयन् निजनाम 'मन्मथ' इति स्वकीयमभिधानं सान्वयमर्थसम्बन्धविशिष्टं 'मनो मथ्नाति पीडयति मन्मथः' इति, करोति संपादयति । 'मनो मथ्नाति सर्वेषां पञ्चबाणेन कामिनाम् । तन्नाम मन्मथस्तेन प्रवदन्ति मनीषिणः ॥' ब्रह्मवैवर्तपुराणे । मन्थधातोः पचाद्यच् पृषोदरादित्वाट्टिलोपः । कथं केनप्रकारेण अयं राजवाहनो ज्ञातव्यः परिचेतव्यः । **तत इति** । अन्तरङ्गवृत्तिं मनोऽभिप्रायम् । भावविवेकैः मानसिकचेष्टाभिः । ज्ञात्वाऽवगत्य । कान्तासमाजस्य स्त्रीजनसमुदायस्य सन्निधौ समक्षम् । उदन्तस्य वृत्तान्तस्य । सम्यक् स्पष्टतयाऽऽख्यानं कथनम् । अनुचितमनर्हम् । भर्तृदारिके हे राजकन्ये ! 'राजा भट्टारको देवस्तत्सुता भर्तृदारिका' इत्यमरः । आहवनिपुणः संग्रामकुशलः । 'संग्रामाभ्यागमाहवाः' इत्यमरः । भूसुरकुमारः विप्रपुत्रः । मणिमन्त्रौषधिज्ञः तद्वेत्ता । परिचर्यार्हः पूजायोग्यः । 'वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासना' इत्यमरः । पूज्यतां सत्क्रियताम् । निजमनोरथमनु स्वकीयकामनानुकूलं वदन्त्या कथयन्त्या । सन्तुष्टान्तरङ्गा प्रसन्नान्तःकरणा । तरङ्गावली वीचिश्रेणी । 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' इत्यमरः । मन्दानिलेन सूक्ष्मवायुनेव । संकल्पजेन कामेन । आकुलीकृता पीड्यमानाऽन्यत्र संचाल्यमाना । जितो मारो मदनो येन तम् । 'मदनो मन्मथो मारः' इत्यमरः । समुचिते योग्ये आसने फलके आसीनमुपविष्टम् । शस्तेन प्रशस्तेन । पूजामर्हणाम् । 'पूजानमस्याऽपचितिः सपर्याऽर्चार्हणाः समाः' इत्यमरः । कारयामास संपादयामास । एवं वक्ष्यमाणप्रकारेण । नूनमवश्यम् । पूर्वजन्मनि जन्मान्तरे । 'जनुर्जननजन्मानि' इत्यमरः । जाया भार्या । 'पत्नी पाणिगृहीती च

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

स्यामेवंविधोऽनुरागो मन्मनसि न जायेत । शापावसानसमये तपोनिधिदत्तं जातिस्मरत्वमावयोः समानमेव । तथापि कालजनितविशेषसूचकवाक्यैरस्या ज्ञानमुत्पादयिष्यामि ’। तस्मिन्नेव समये कोऽपि मनोरमो राजहंसः केलीविधित्सया तदुपकण्ठमगमत् । समुत्सुकया राजकन्यया मरालग्रहणे नियुक्तां बालचन्द्रिकामवलोक्य समुचितो वाक्यावसर इति संभाषणनिपुणो राजवाहनः सलीलमलपत्—‘सखि, पुरा शाम्बो नाम कश्चिन्महीवल्लभो मनोवल्लभया सह विहारवाञ्छया कमलाकरमवाप्य तत्र कोकनदकदम्बसमीपे निद्राधीनमानसं राजहंसं शनैर्गृहीत्वा विसगुणेन तस्य चरणयुगलं निगडयित्वा कान्तामुखं सानुरागं विलोकयन्मन्दस्मितविकसितैककपोलमण्डलस्तामभाषत—‘इन्दुमुखि, मया बद्धो मरालः शान्तो मुनिवदास्ते । स्वेच्छयानेन गम्यताम् ’ इति । सोऽपि राजहंसः शाम्बमशपत्–‘ महीपाल, यदस्मिन्नम्बुजखण्डेऽनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं मामकारणं राज्यगर्वेणावमानितवानसि तदेतत्पाप्मना रमणीविरहसंतापमनुभव ’ इति । विषण्णवदनः शाम्बो जीवितेश्वरीविरहमसहिष्णुर्भूमौ दण्डवत्प्रणम्य सविनयमभाषत—‘महाभाग, यदज्ञानेनाकरवं तत्क्षमस्व ’ इति । स तापसः करुणाकृष्टचेतास्तमवदत्—‘राजन्, इह जन्मनि भवतः शापफलाभावो भवतु । मद्वचनस्यामोघतया भाविनि जनने शरीरा-

---

द्वितीया सहधर्मिणी । भार्या जाया’ इत्यमरः । न जायेत नैवोत्पद्येत । जातिस्मरत्वं जन्मान्तरस्मारकत्वम् । समानं सदृशमेव । कालजनितैः अवसरोचितैः विशेषसूचकैस्तत्स्मारकैश्च वाक्यैः संलापैः । राजहंसो हंसविशेषः । ‘ राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ’ इत्यमरः । तयोरुपकण्ठमन्तिकमगमत्प्राप्तः । समुत्सुकया समुत्पन्नकौतुकया । मरालस्य हंसस्य ग्रहण उपादाने । नियुक्तां प्रेरिताम् । सलीलं सकुतूहलम् । **सखीति** । महीवल्लभो राजा । मनोवल्लभया प्रियया सह । विहारवाञ्छया क्रीडायामभिलाषेण । कमलाकरं तडागम् । कोकनदानां रक्तोत्पलानां कदम्बसमीपे षण्डनिकटे । ‘ रक्तोत्पलं कोकनदम् ’ ‘अब्जादिकदम्बे षण्डमस्त्रियाम्’ इत्यमरः । विसगुणेन मृणालसूत्रेण। ‘मृणालं बिसम्’ इत्यमरः। निगडयित्वा बद्ध्वा । कान्ताया यज्ञवत्याः। मुखमाननम्। सानुरागं प्रेम्णा सह। मन्दस्मितेनेषद्धास्येन विकसितमेकं कपोलमण्डलं गण्डप्रदेशो यस्य तथाविधः सन् । इन्दुमुखि हे चन्द्रानने ! । शान्तः क्षमायुक्तः । मुनिनातुल्यं मुनिवत् । ‘ तेन तुल्यं–’ इति वतिः । स्वेच्छया यथाकामम् । महीपाल हे राजन् ! । अम्बुजखण्डे पद्मनिवहे । नैष्ठिकं ब्रह्मचर्ययुक्तम् । अकारणमनिमित्तम् । अवमानितवांस्तिरस्कृतवान् । पाप्मना पापेन । ‘ अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषे ’ इत्यमरः । रमणीविरहेण स्त्रीवियोगेन जन्यं सन्तापं दुःखम् । अनुभवोपभुङ्क्ष्व । विषण्णं खिन्नं वदनं यस्य सः । जीवितेश्वर्याः प्राणप्रियाया विरहमसहिष्णुः सोढुमशक्तः । प्रणम्य नमस्कृत्य । सविनयं प्रश्रयेण साकम् । **महाभागेति** । अज्ञानेनाविवेकेन । क्षमस्व मर्षय । शापफलस्याभावोऽनुपभोगः । अमो-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

न्तरं गताया अस्याः सरसिजाक्ष्या रसेन रमणो भूत्वा मुहूर्तद्वयं मच्चरणयुगलबन्धकारितया मासद्वयं शृङ्खलानिगडितचरणो रमणीवियोगविषादमनुभूय पश्चादनेककालं वल्लभया सह राज्यसुखं लभस्व ' इति । तदनु जातिस्मरत्वमपि तयोरन्वगृह्णात् । ' तस्मान्मरालबन्धनं न करणीयं त्वया ' इति । सापि भर्तृदारिका तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता ' नूनमयं मत्प्राणवल्लभः ' इति मनसि जानती रागपल्लवितमानसा समन्दहासमवोचत्—' सौम्य, पुरा शाम्बो यज्ञवतीसंदेशपरिपालनाय तथाविधं हंसबन्धनमकार्षीत् । तथा हि लोके पण्डिता अपि दाक्षिण्येनाकार्यं कुर्वन्ति ' इति । कन्याकुमारावेवमन्योन्यपुरातनजनननामधेये परिचिते परस्परज्ञानाय साभिज्ञमुक्त्वा मनोजरागपूर्णमानसौ बभूवतुः। [तस्मिन्नवसरे मालवेन्द्रमहिषी परिजनपरिवृता दुहितृकेलीविलोकनाय तं देशमवाप। बालचन्द्रिका तु तां दूरतो विलोक्य ससंभ्रमं रहस्यनिर्भेदभिया हस्तसंज्ञया पुष्पोद्भवसेव्यमानं राजवाहनं वृक्षवाटिकान्तरितगात्रमकरोत् । सा मानसारमहिषी सखीसमेताया दुहितुर्नानाविधां विहारलीलामनुभवन्ती क्षणं स्थित्वा दुहित्रा समेता निजागारगमनायोद्युक्ता बभूव ।] मातरमनुगच्छन्त्यवन्तिसुन्दरी ' राजहंसकुलतिलक, विहारवाञ्छया केलीवने मदन्तिकमागतं

घतया सत्यतया । ' मोघं निरर्थकम् ' इत्यमरः । रसेन प्रेम्णा । रमणो भर्ता । विषादं पीडाम् । लभस्व प्राप्नुहि । जातिस्मरत्वं जातिस्मरणशीलत्वम् । अन्वगृह्णादनुग्रहबुद्ध्या प्रददौ । ' ग्रह उपादाने ' । मरालबन्धनं हंसग्रहणम् । भर्तृदारिका राजकुमारी । तस्य राज्ञो वचनस्याकर्णनेन श्रवणेनाभिज्ञातो विदितो स्वपुरातनजननवृत्तान्तः निजजन्मान्तरवार्ता यया सा । जानती अवगच्छन्ती । रागेणानुरागेण । पल्लवितमानसा विकसितचित्ता । सौम्य हे सुभग ! । यज्ञवत्याः संदेशस्याज्ञायाः परिपालनाय संरक्षणार्थम् । दाक्षिण्येन वचनबद्धतया । परिचिते ज्ञाते अपि । साभिज्ञं प्रत्यभिज्ञया साकम् । मनोजरागेण कामाभिलाषेण पूर्णमानसौ संभृतान्तःकरणौ । बभूवतुः संजातौ ।

**तस्मिन्निति** । अवसरे समये । मालवेन्द्रस्य मानसारनाम्नो महिषी प्रधानपत्नी । ' कृताभिषेका महिषी ' इत्यमरः । दुहितुः कन्यायाः । केलीविलोकनाय क्रीडावेक्षणार्थम् । तं देशमुद्यानभूमिम् । अवापागता । दूरतो दूरादेव । ससंभ्रमं त्वरया । रहस्यस्य गुप्तभाषणस्य निर्भेदभिया ' प्रकाशो मा भूत् ' इति भयेन । हस्तसंज्ञया करसंकेतेन । वृक्षवाटिकया गृहोद्यानेन । ' वाटी वास्तौ गृहोद्यानकट्योः ' इति हैमः । अन्तारितमाच्छादितं गात्रं शरीरं यस्य तथाविधमकरोच्चकार । दुहितुः कन्यायाः । नानाविधामनेकप्रकारां विहारलीलां क्रीडासुखमनुभवन्ती निर्विशन्ती । निजागारगमनाय स्वकीयगृहं प्रति गन्तुम् । उद्युक्ता संनद्धा । बभूव जाता । अनुगच्छन्त्यनुसरन्ती । राजहंसानां हंसविशेषाणां राजहंसनाम्नो राज्ञो वा कुलस्य वंशस्य तिलक अलंकारभूत ! । विहारवाञ्छया क्रीडाभिलाषेण । केलीवने उद्याने ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

भवन्तमकाण्ड एव विसृज्य मया समुचितामिति जनन्यनुगमनं क्रियते, तदनेन भवन्मनोरागोऽन्यथा मा भूत्' इति मरालमिव कुमारमुद्दिश्य समुचितालापकलापं वदन्ती पुनः पुनः परिवृत्तदीननयना वदनं विलोकयन्ती निजमन्दिरमगात्। तत्र हृदयवल्लभकथाप्रसङ्गे बालचन्द्रिकाकथिततदन्वयनामधेया मन्मथबाणपतनव्याकुलमानसा विरहवेदनया दिनेदिने बहुलपक्षशशिकलेव क्षामक्षामाहारादिसकलं व्यापारं परिहृत्य रहस्यमन्दिरे मलयजरसक्षालितपल्लवकुसुमकल्पिततल्पतलावर्तितनुलता बभूव। तत्र तथाविधावस्थामनुभवन्तीं मन्मथानलसंतप्तां सुकुमारीं कुमारीं निरीक्ष्य खिन्नो वयस्यागणः काञ्चनकलशसंचितानि हरिचन्दनोशीरघनसारमिलितानि तदभिषेककल्पितानि सलिलानि विसतन्तु-

---

समान्तिकं समीपम्। आगतं प्राप्तम्। अकाण्डेऽनवसर एव। विसृज्य त्यक्त्वा। जनन्या मातुरनुगमनमनुयानं क्रियते विधीयते। तज्जनन्यनुगमनस्यात्यावश्यकत्वात्। अनेन मद्गमनेन। भवतो मनोरागः मानसिकोऽनुरागः। अन्यथा विपरीतः। मा भूत् मा भवतु। 'माङि लुङ्' इति लुङि 'न माङ्योगे' इत्यडभावः। इत्यनेन प्रकारेण। मरालमिव कुमारमुद्दिश्य हंसमिषेण राजवाहनमेवोद्दिश्य। समुचितं समयानुरूपमालापकलापं वाक्यजालम्। पुनः पुनरसकृत्। परिवृत्ते प्रत्यावर्तिते दीने नयने यस्या एतादृशी सती। वदनं राजवाहनस्य मुखम्। विलोकयन्ती सादरं प्रेक्षमाणा। निजमन्दिरं स्वागारम्। अगात् जगाम। **तत्रेति**। स्वगृहे। हृदयवल्लभस्य राजवाहनस्य कथाप्रसङ्गे उदन्तकथनावसरे। बालचन्द्रिकया कथिते तस्यान्वयनामधेये कुलनामनी यस्यैतादृशी। 'वंशोऽन्ववायः सन्तानः' 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः। मन्मथस्य बाणानां शराणां पतनेन वर्षणेन व्याकुलं व्यग्रं मानसं यस्याः सा। विरहवेदनया वियोगोत्थपीडया। दिनेदिने प्रतिदिवसम्। बहुलपक्षे कृष्णपक्षे। शशिनश्चन्द्रस्य कलेव षोडशभाग इव। क्षामक्षामाऽत्यन्तं कार्श्यमापन्ना। 'क्षै हर्षक्षये' इत्यतः क्तप्रत्यये तस्य 'क्षायो मः' इति मादेशः। भृशार्थे द्विरुक्तिः। परिहृत्य परित्यज्य। रहस्यमन्दिरे एकान्तगृहे। मलयजरसेन चन्दनरसेन क्षालितस्य धौतस्य, पल्लवैः किसलयैः पुष्पैः कुसुमैश्च कल्पितस्य रचितस्य तल्पस्य शय्यायास्तले उपरिभागे आवर्तिनी इतस्ततः परिभ्रमन्ती तनुर्लतेव स्थिता यस्यास्तथाविधा बभूव जाता। 'तल्पं शय्याट्टदारेषु' 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। तत्र शय्यायाम्। अवस्थां पीडाम्। मन्मथानलेन कामरूपाग्निना संतप्तां दग्धाम् सुकुमारीं कोमलाङ्गीम्। कुमारीमवन्तिसुन्दरीम्। निरीक्ष्य दृष्ट्वा। खिन्नः सन्तप्तहृदयः। वयस्यागणः सखीजनः। काञ्चनकलशैः सुवर्णघटैः संचितानि समानीतानि 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः। हरिचन्दनः मलयजः, उशीरो नलदः, घनसारः कर्पूरः एतैर्मिलितानि मिश्रितानि। 'उशीरमस्त्रियाम्। अभयं नलदं सेव्यम्' इत्यमरः। 'अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका' इति च। तस्या राजकन्याया अभिषेकाय स्नानाय कल्पितानि रचितानि। सलिलानि

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मयानि वासांसि च नलिनीदलमयानि तालवृन्तानि च संतापहरणानि बहूनि संपाद्य तस्याः शरीरमशिशिरयत् । तदपि शीतलोपचरणं सलिलमिव तप्ततैले तदङ्गे दहनमेव समन्तादाविश्चकार । किंकर्तव्यतामूढां विषण्णां बालचन्द्रिकामीषदुन्मीलितेन कटाक्षवीक्षितेन बाष्पकणाकुलेन विलोक्य विरहानलोष्णानिःश्वासग्लपिताधरया नताङ्ग्या शनैः शनैः सगद्गदं व्यलापि—'प्रियसखि, कामः कुसुमायुधः पञ्चबाण इति नूनमसत्यमुच्यते । इयमहमयोमयैरसंख्यैरिषुभिरनेन हन्ये । सखि, चन्द्रमसं वडवानलादतितापकरं मन्ये । यदस्मिन्नन्तः प्रविशति शुष्यति पारावारः, सति निर्गते तदैव वर्द्धते । दोषाकरस्य दुष्कर्म किं वर्ण्यते मया । यदनेन निजसोदर्याः पद्मालयाया गेहभूतमपि कमलं विहन्यते । विरहानलसंतप्तहृदयस्पर्शेन नूनमुष्णीकृतः स्वल्पीभवति मलयानिलः । नवपल्लव-

---

जलानि । 'सलिलं कमलं जलम्' इत्यमरः । बिसतन्तुमयानि मृणालसूत्रकल्पितानि । वासांसि परिधेयानि । नलिनीदलमयानि कमलपत्ररचितानि तालवृन्तानि व्यजनानि । 'व्यजनं तालमाख्रियाम्' इत्यमरः । सन्तापहरणानि विरहपीडानिवारकाणि । संपाद्य संगृह्य । अशिशिरयत् शीतलोपचारं चकार । 'सुषीमः शिशिरो जडः' इत्यमरः । शिशिरशब्दात् 'तत्करोति तदाचष्टे' इति णिचि लङ् । तप्ततैले क्वथिते स्नेहे । दहनं वह्निं तापञ्च । आविश्चकारोत्पादयांबभूव । किंकर्तव्यतायामितिकर्तव्यतायां मूढामसमर्थाम् । विषण्णां खिन्नाम् । ईषदुन्मीलितेन किञ्चिदुन्मेषितेन । बाष्पकणैरश्रुबिन्दुभिराकुलेन व्याप्तेन । विलोक्य वीक्ष्य । विरहानलेन वियोगाग्निना उष्णो यो निःश्वासस्तेन ग्लपितः ग्लानिं प्रापितः अधरो यस्यास्तया । नतान्यङ्गानि यस्याः सा तया संनतगात्र्याऽवन्तिसुन्दर्या । शनैः शनैर्मन्दंमन्दम् । सगद्गदं गद्गदस्वरेण साकम् । व्यलापि विलापः कृतः । **प्रियसखीति** । कुसुमानि पुष्पाण्यायुधानि प्रहरणानि यस्य सः । पञ्चैव बाणाः सायका यस्य सः । नूनमसत्यमुच्यते मन्मथमुद्दिश्य 'कुसुमेषुः पञ्चशरः' इति यल्लोककथनं तन्मृषैव । तेन मदीयशरीरे निपात्यमानानां बाणानामतिकठोरत्वादपरिमितत्वाच्च । एतदेवोत्तरवाक्येन प्रकटयति । अयोमयैर्लौहैरसंख्यैः परिमाणरहितैः । इषुभिर्बाणैः । अनेन कामेन । हन्ये पीडयमानाऽस्मि । 'हन हिंसागत्योः' इत्यतः कर्मणि लडुत्तमैकवचनम् । एवं मदनं विनिन्द्य तद्वदेव तापकरत्वान्मदनसाहाय्यकरत्वाच्चन्द्रमिदानीमुपालभते—**चन्द्रमसमिति** । वडवानलाद्वडवाग्नेरप्यपेक्षया । अतितापकरं बहुपीडाकरम् । मन्य तर्कये । अस्मिंश्चन्द्रमसि । अन्तः समुद्रमध्यं प्रविशति गच्छति सति । शुष्यति पारावारः समुद्रः शुष्को भवति । अतितापकरत्वाभावे वृद्धेरेव भाव्यत्वात् । तत्तु न दृश्यते किन्तु निर्गते एव बहिश्चन्द्रे सागरस्य वृद्धिदर्शनात् । दोषाकरस्य निशाकरस्य दोषाणामाकरः खनिस्तस्य च । निजसोदर्या आत्मनैव समं समुद्रादुत्पन्नायाः । पद्मालयायाः लक्ष्म्याः । 'लक्ष्मीः पद्मालया पद्मा' इत्यमरः । विहन्यते संकोच्यते । विरहानलेन विश्लेषाग्निना सन्तप्तं यन्मम हृदयं तस्य स्पर्शेन संपर्केण नूनमवश्यमुष्णीकृतस्तापितः सन् मलयानिलः स्वभावतः शीत-



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कल्पितं तल्पमिदमनङ्गाग्निशिखापटलमिव संतापं तनोस्तनोति । हरिचन्दनमपि पुरा निजयष्टिसंश्लेषवदुरगरदनालिप्तोल्बणगरलसंकलितमिव तापयति शरीरम् । तस्मादलमलमायासेन शीतलोपचारे । लावण्यजितमारो राजकुमार एवागदङ्कारो मन्मथज्वरापहरणे । सोऽपि लब्धुमशक्यो मया । किं करोमि ' इति । बालचन्द्रिका मनोजज्वरावस्थापरमकाष्ठां गतां कोमलाङ्गीं तां राजवाहनलावण्याधीनमानसामनन्यशरणामवेक्ष्यात्मन्यचिन्तयत्—'कुमारः सत्वरमानेतव्यो मया । नो चेदेनां स्मरणीयां गतिं नेष्यति मीनकेतनः । तत्रोद्याने कुमारयोरन्योन्यावलोकनवेलायामसमसायकः समं मुक्तसायकोऽभूत् । तस्मात्कुमारानयनं सुकरम् ' इति । ततोऽवन्तिसुन्दरीरक्षणाय समयोचितकरणीयचतुरं सखीगणं नियुज्य राजकुमारमन्दिरमवाप । पुष्पबाणबाणतूणीरायमाणमानसोऽनङ्गतप्तावयवसंपर्कपरिम्लानपल्लवशयनमधिष्ठितो राजवाहनः प्राणेश्वरीमुद्दिश्य सह पुष्पो-

---

त्कोऽपि मलयाचलवायुः स्वल्पीभवति प्रक्षीणो जायते । नवैर्नूतनैः पल्लवैः किसलयैः कल्पितम् । तल्पं शयनीयम् । अनङ्गाग्निशिखानां स्मराग्निज्वालानां पटलं चक्रमिव । तनोर्मच्छरीरस्य सन्तापं व्यथां तनोति विदधाति । पुरा मलयाचलस्थितिकाले । निजयष्टौ काष्ठे संश्लेषवन्तः संश्लिष्य स्थिता य उरगाः सर्पाः तेषां रदनेषु दन्तेषु लिप्तमुल्वणमसह्यं च यद्गरलं विषं तेन संकलितं मिश्रितमिव । ' उरगः पन्नगो भोगी ' ' रदना दशना दन्ताः ' ' क्ष्वेडस्तु गरलं विषम् ' इत्यमरः । तस्माच्छैत्योपचारस्याकिंचित्करत्वात् । शीतलोपचारे तस्मिन्विषये । आयासेन परिश्रमेणालमलं न किंचित्साध्यम् । लावण्येन सौकुमार्येण जितः पराभूतो मारो मन्मथो येन । अगदङ्कारः कृतहस्तो वैद्यः । ' रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ' इत्यमरः । ' कारे सत्यागदस्य ' इति मुम् । मन्मथज्वरस्य कामपीडारूपस्य ज्वरस्य । अपहरणे निवारणे । परमकाष्ठामुत्कटमर्यादाम् । अनन्यशरणां राजवाहनमन्तरा न विद्यतेऽन्यो रक्षको यस्यास्तादृशीम् । ' शरणं गृहरक्षित्रोः ' इत्यमरः । आत्मन्यप्रकाशं यथा तथा । अचिन्तयत् विचारयामास । सत्वरमाशु । ' सत्वरं चपलं तूर्णमविलम्बितमाशु च ' इत्यमरः । आनेतव्य आहूतव्यः । नोचेदेवमानयनेऽकृते । स्मरणीयां 'काचिदासीत् मम प्रियसख्यवन्तिसुन्दरी नाम ' इति भूतपूर्वां गतिमवस्थाम् । मीनकेतनो मन्मथः । 'मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः' इत्यमरः । कुमारयो राजवाहनावन्तिसुन्दर्योः । 'पुमान् स्त्रिया' इत्येकशेषः । अन्योन्यावलोकनवेलायां परस्परवीक्षणसमये । असमसायकः कामः । सममेकदैव । मुक्ता लक्ष्यमुद्दिश्य प्रहिता सायका बाणा येनैतादृशः । तस्मादवन्तिसुन्दरीमुद्दिश्य राजवाहनस्य कामेन विद्धत्वात् । सुकरं प्रयासं विनैव कर्तुं योग्यम् । **तत इति** । नियुज्य संस्थाप्य । पुष्पबाणस्य कामस्य बाणानां शराणां तूणीरो निषङ्गः स इवाचरन्मानसं हृदयं यस्य स कामशरपरिपूर्णचित्तः इति भावः । अनङ्गेन कामेन तप्तानां संतप्तानामवयवानामङ्गानां संपर्केण संसर्गेण परिम्लानं संग्लपितं पल्लवशयनं किसलयकल्पितां शय्यामधिष्ठित आश्रितः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

द्भवेन संलपन्नागतां प्रियवयस्यामालोक्य पादमूलमन्वेषणीया लतेव बालचन्द्रिकागतेति संतुष्टमना निटिलतटमण्डनीभवदम्बुजकोरकाकृतिलसदञ्जलिपुटाम् 'इतो निषीद' इति निर्दिष्टसमुचितासनासीनामवन्तिसुन्दरीप्रेषितं सकर्पूरं ताम्बूलं विनयेन ददतीं तां कान्तावृत्तान्तमपृच्छत्। तया सविनयमभाणि—'देव, क्रीडावने भवदवलोकनकालमारभ्य मन्मथमथ्यमाना पुष्पतल्पादिषु तापशमनमलभमाना वामनेनेवोन्नततरुफलमलभ्यं त्वदुरःस्थलालिङ्गनसौख्यं स्मरान्धतया लिप्सुः सा स्वयमेव पत्रिकामालिख्य 'वल्लभायैनामर्पय' इति मां नियुक्तवती'। राजकुमारः पत्रिकां तामादाय पपाठ—

'सुभग कुसुमसुकुमारं जगदनवद्यं विलोक्य ते रूपम्।
मम मानसमभिलषति त्वं चित्तं कुरु तथा मृदुलम्॥'

इति पठित्वा सादरमभाषत—'सखि, छायावन्मामनुवर्तमानस्य पुष्पोद्भवस्य वल्लभा त्वमेव तस्या मृगीदृशो बहिश्चराः प्राणा इव वर्तसे। त्वच्चातुर्यमस्यां क्रियालतायामालवालमभूत्। तदखिलं करिष्यामि। नताङ्ग्या मन्मनःकाठिन्यमाख्यातम्। यदा केलीवने कुरङ्गलोचना लोचनपथमवर्तत तदैवापहृतमदीयमानसा सा स्वमन्दिरमगात्। सा चेतसो माधुर्यकाठिन्ये स्वयमेव जानाति। दुष्करः कन्यान्तःपुरप्रवेशः। तदनुरूपमुपायमुपपाद्य श्वः परश्वो वा नताङ्गीं संगमि-

---

संलपन्मिथो भाषमाणः। प्रियवयस्यां प्रियसखीं बालचन्द्रिकाम्। अन्वेषणीया गवेषयितुं योग्या लतौषधिवल्ली विरहज्वरनिवारिका पादमूलमात्मनश्चरणतलमिव। सन्तुष्टमनाः प्रसन्नचित्तः। निजे निटिलतले स्वकीये भालदेशे मण्डनीभवन्नलंकारभूतः, अम्बुजकोरकाकृतिः कमलकलिकासरूपः, विलसंश्चाञ्जलिपुटः करद्वयसंपुटः यस्यास्तादृशीम्। आसनासीनां पीठोपविष्टाम्। कान्तायाः प्रियाया अवन्तिसुन्दर्याः वृत्तान्तं कुशलोदन्तमपृच्छदनुयुयोज। तापस्य हृदयसंतापस्य शमनं शान्तिम्। अलभमाना न प्राप्नुवन्ती। वामनेन ह्रस्वपुरुषेण। 'खर्वो ह्रस्वश्च वामनः' इत्यमरः। तवोरःस्थलस्य वक्षसः आलिङ्गनेनाश्लेषेण जन्यं सौख्यम्। स्मरान्धतया कामासक्ततया। लिप्सुः प्राप्तुमिच्छन्ती। 'सनि मीमाघुरभलभ-' इतीस्। स्वयमेव स्वहस्तकमलेनैव। पत्रिकां पत्रम्। पपाठ वाचयामास।

**सुभगेति।** हे सुन्दर! **कुसुमसुकुमारं** पुष्पवन्मृदुलं **जगदनवद्यं** जगति लोकेऽनवद्यं निर्दुष्टं च **ते** तव **रूप**माकृतिं **विलोक्य** समीक्ष्य **मम मानसं** चित्तम् **अभिलषति** त्वामेव प्राप्तुमिच्छति। **त्वं** भवांश्च **तथा** मत्कामनानुसारेण **चित्तं मृदुलं** मयि सदयं **कुरु** विधेहि॥

**छायावत्** प्रतिबिम्बमिव। मृगीदृशः कुरङ्गविलोचनायाः। वर्तसे प्राणेभ्योऽप्यतिप्रिया त्वं तस्या इति भावः। तव चातुर्यं कौशल्यमेव। अस्यां क्रियालतायामावयोः संयोजनकार्यरूपायां वल्ल्यामालवालमावापः। 'स्यादालवालमावापः' इत्यमरः। त्वच्चातुर्येणैवेदं संयोजनं जातमिति भावः। लोचनपथमवर्तत दृष्टिगोचरीभूता। अपहृतं मोषितं मदीयमानसं मच्चित्तं यया तादृशी। जानाति वेत्ति। तस्य अनुरूपमन्तःपुरप्रवेशयोग्यम्। उपायं युक्तिम्। उपपाद्य विचार्य।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

ष्यामि । मदुदन्तमेवमाख्याय शिरीषकुसुमसुकुमाराया यथा शरीरबाधा न जायेत तथाविधमुपायमाचर ' इति । बालचन्द्रिकापि तस्य प्रेमगर्भितं वचनमाकर्ण्य संतुष्टा कन्यापुरमगच्छत् । राजवाहनोऽपि यत्र हृदयवल्लभावलोकेनसुखमलभत तदुद्यानं विरहविनोदाय पुष्पोद्भवसमन्वितो जगाम । तत्र चकोरलोचनावचितपल्लवकुसुमनिकुरम्बं महीरुहसमूहं शरदिन्दुमुख्या मन्मथसमाराधनस्थानं च नताङ्गीपदपंक्तिचिह्नितं शीतलसैकततलं च सुदतीभुक्तमुक्तं माधवीलतामण्डपान्तरपल्लवतल्पं च विलोकयँल्ललनातिलकविलोकनवेलाजनितशेषाणि स्मारंस्मारं मन्दमारुतकम्पितानि नवचूतपल्लवानि मदनाग्निशिखा इव चकितो दर्शंदर्शं मनोजकर्णेजपानामिव कोकिलकीरमधुकराणां क्वणितानि श्रावं श्रावं मारविकारेण क्वचिदप्यवस्थातुमसहिष्णुः परिबभ्राम ।

तस्मिन्नवसरे धरणीसुर एकः सूक्ष्मचित्रनिवसनः स्फुरन्मणिकुण्डलमण्डितो मुण्डितमस्तकमानवसमेतश्चतुरवेषमनोरमो यदृच्छया समागतः समन्ततोऽभ्युल्लसत्तेजोमण्डलं राजवाहनमाशीर्वादपूर्वकं ददर्श । राजा सादरम् ' को भवान्, कस्यां विद्यायां निपुणः ' इति तं पप्रच्छ । स च ' विद्येश्वरनामधेयोऽहमैन्द्र-

---

नताङ्गीं सङ्गमिष्यामि तया सह सङ्गतो भविष्यामि । आख्याय कथयित्वा । बालेति । प्रेमगर्भितं स्नेहपरिपूर्णम् । 'प्रेमा ना प्रियता हार्दम्' इत्यमरः । आकर्ण्य श्रुत्वा । संतुष्टा प्रसन्ना सती । स्वकार्यस्य सिद्धप्रायत्वात् । विरहविनोदाय विरहखेदापनोदनार्थम् । तत्रोद्याने । चकोरलोचनया मृगाक्ष्याऽवचितं गृहीतं पल्लवानां किसलयानां कुसुमानां पुष्पाणां च निकुरम्बं संहतिर्यस्मात्तादृशम् । मन्मथसमाराधनस्थानं कामपूजाप्रदेशम् । सुदत्याऽऽदौ भुक्तमनुभूतं पश्चान्मुक्तं परिहृतं च । माधवीलतामण्डपस्यान्तरे मध्ये स्थितं पल्लवतल्पं किसलयशयनीयं च । विलोकयन्सादरं वीक्षमाणः । नवचूतपल्लवानि नूतनान्याम्रवृक्षस्य किसलयानि । ' आम्रश्चूतो रसालः स्यात् ' इत्यमरः । चकितो भीतः । दर्शंदर्शं पुनः पुनरवलोक्य । मनोजस्य कर्णेजपानां पिशुनानाम् 'कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः' इत्यमरः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । कोकिलाः पिकाः, कीराः शुकाः, मधुकरा भ्रमराः एतेषां क्वणितानि कलरुतानि । ' वनप्रियः परभृतः कोकिलः पिक इत्यपि ' 'कीरशुकौ समौ' ' मधुव्रतो मधुकरः ' इत्यमरः । मारस्य कामस्य विकारेण बाधया । परिबभ्राम इतस्ततो गच्छन्नेवातिष्ठत । 'भ्रमु अनवस्थाने' ।

**तस्मिन्निति** । अवसरे परिभ्रमणकाले । धरणीसुरो ब्राह्मणः । सूक्ष्मं श्लक्ष्णं, चित्रं नानावर्णै रञ्जितं च निवसनमाच्छादनं यस्य तादृशः । ' सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ' 'चित्रकिर्मीरकल्माषशबलैताश्च कर्बुरे ' ' चैलं वसनमंशुकम्' इत्यमरः । स्फुरद्भ्यां प्रकाशमानाभ्यां मणिकुण्डलाभ्यां रत्ननिर्मितकर्णकटकाभ्यां मण्डितो भूषितः । ' कुण्डलं कर्णवेष्टनम् ' इत्यमरः । मुण्डितमपनीतकेशकं मस्तकं शिरो यस्य सः तादृशेन मानवेन केनचित्पुरुषेण समेतः सहितः । 'उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः । चतुरेण पेशलेन वेषेणाकल्पेन मनोरमः सुन्दरः । यदृच्छया दैववशात् । आशीर्वादः पूर्वं यस्मिंस्तथा । निपुणः समर्थः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

जालिकविद्याकोविदो विविधदेशेषु राजमनोरञ्जनाय भ्रमन्नुज्जयिनीमद्यागतोऽस्मि ' इति शशंस । पुनरपि राजवाहनं सम्यगालोक्य ' अस्यां लीलावनौ पाण्डुरतानिमित्तं किम् ' इति साभिप्रायं विहस्यापृच्छत । पुष्पोद्भवश्च निजकार्यकारणं तर्कयन्नेनमादरेण बभाषे—' ननु सतां सख्यस्याभाषणतया चिरं रुचिरभाषणो भवानस्माकं प्रियवयस्यो जातः । सुहृदामकथ्यं च किमस्ति ? केलीवनेऽस्मिन्वसन्तमहोत्सवायागताया मालवेन्द्रसुताया राजनन्दनस्यास्य चाकस्मिकदर्शनेऽन्योन्यानुरागातिरेकः समजायत । सततसंभोगसिद्ध्युपायाभावेनासावीदृशीमवस्थामनुभवति ' इति । विद्येश्वरो लज्जाभिरामं राजकुमारमुखमभिवीक्ष्य विरचितमन्दहासो व्याजहार—' देव, भवदनुचरे मयि तिष्ठति तव कार्यमसाध्यं किमस्ति । अहमिन्द्रजालविद्यया मालवेन्द्रं मोहयन्पौरजनसमक्षमेव तत्तनयापरिणयं रचयित्वा कन्यान्तःपुरप्रवेशं कारयिष्यामीति वृत्तान्त एष राजकन्यकायै सखीमुखेन पूर्वमेव कथयितव्यः ' इति । सन्तुष्टमना महीपतिरनिमित्तं मित्रं प्रकटीकृतकृत्रिमक्रियापाटवं विप्रलम्भकृत्रिमप्रेमसहजसौहार्दवेदिनं तं विद्येश्वरं सबहुमानं विससर्ज ।

---

कोविदः पण्डितः । 'विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः' इत्यमरः । राज्ञां मनसो रञ्जनाय विनोदनाय । शशंस कथयामास 'शंसु स्तुतौ' । लीलावनौ विहारदेशे । विलासास्पदे तव मुखे च पाण्डुरताया धूसरितत्वस्य वैवर्ण्यस्य च साभिप्रायं सव्याजमुभयानुयोगात् । विहस्य मन्दहासं विधाय । निजकार्यस्यावन्तिसुन्दर्यन्तःपुरप्रवेशरूपस्य करणं साधकतमम् । तर्कयन्पर्यालोचयन् । सतां सत्पुरुषाणां सख्यस्य मैत्र्याः आभाषणं पूर्वं यस्य तादृशतया किञ्चित्कालाभाषणेनैव सतां मैत्र्या जायमानत्वादिति भावः । अत्र च कालिदासः—'सम्बन्धमाभाषणपूर्वमाहुः' इति । चिरं बहुकालपर्यंतं रुचिरं मञ्जुलं भाषणं कृतं येन तादृशः । अकथ्यं गोपनीयम् । अकस्माद्भवमाकस्मिकं यदृच्छाजातं, तादृग्दर्शने जाते सति । अन्योन्यं मिथः रागातिशयोऽनुरागोद्रेकः । समुदपद्यत समुत्पन्नोऽभूत् । सततं निरन्तरं तया सह यः संभोगस्तस्य सिद्धेरुपायाभावेन युक्त्यनुपलम्भेन । ईदृशी विवर्णाननत्वादिरूपामवस्थां दशामनुभवति भुङ्क्ते । लज्जयाऽभिरामं मनोहरम् । व्याजहार बभाष । भवतोऽनुचरे सहाये, मालवदेशानामिन्द्रं राजानं मानसारम् । मोहयन्भ्रममुत्पादयन् । पौरजनानां नगरवासिजनानां समक्षं प्रत्यक्षमेव । तत्तनयाया राजकुमार्याः परिणयं पाणिग्रहणं रचयित्वा संसाध्य । कारयिष्यामि भवन्तमिति शेषः । कथयितव्यो निवेदनीयः । महीपती राजा राजवाहनः । अनिमित्तं मित्रं किंचित्प्रत्युपकारमनपेक्ष्यैव निबद्धस्नेहं सखायम् । प्रकटीकृतमाविष्कृतं कृत्रिमक्रियायामैन्द्रजालिकविद्याप्रयोगे पाटवं निपुणता येन तथाविधम् । विप्रलम्भं परकृतां प्रतारणां, कृतया निर्वृत्तं कृत्रिमं प्रेमाणं स्नेहं, सहजं स्वाभाविकं सौहार्दं सख्यं वेत्ति विविच्यावगच्छतीत्येतादृशम् । ' डुकृञ् करणे' इत्यतः ' ड्वितः क्त्रिः ' ' क्त्रेर्मम्नित्यम् ' इति सूत्राभ्यामुत्पन्नः कृत्रिमशब्दः । विससर्ज अमुञ्चत् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

अथ राजवाहनो विद्येश्वरस्य क्रियापाटवेन फलितमिव मनोरथं मन्यमानः पुष्पोद्भवेन सह स्वमन्दिरमुपेत्य सादरं बालचन्द्रिकामुखेन निजवल्लभायै महीसुरक्रियमाणं संगमोपायं वेदयित्वा कौतुकाकृष्टहृदयः 'कथमिमां क्षपां क्षपयामि' इत्यातिष्ठत्। परेद्युः प्रभाते विद्येश्वरो रसभावरीतिगतिचतुरस्तादृशेन महता निजपरिजनेन सह राजभवनद्वारान्तिकमुपेत्य दौवारिकनिवेदितनिजवृत्तान्तः सहसोपगम्य सप्रणामम् 'ऐन्द्रजालिकः समागतः' इति द्वाःस्थैर्विज्ञापितेन तद्दर्शनकुतूहलाविष्टेन समुत्सुकावरोधसहितेन मालवेन्द्रेण समाहूयमानो विद्येश्वरः कक्षान्तरं प्रविश्य सविनयमाशिषं दत्त्वा तदनुज्ञातः परिजनताड्यमानेषु वाद्येषु नदत्सु, गायकीषु मदकलकोकिलामञ्जुलध्वनिषु, समधिकरागरञ्जितसामाजिकमनोवृत्तिषु पिच्छिकाभ्रमणेषु, स परिवारं परिवृत्तं भ्रामयन्मुकुलितनयनः क्षणमतिष्ठत्। तदनु विषमं विषमुल्बणं वमतः फणालंकरणा रत्नराजिनीराजितराजमन्दिराभोगा भोगिनो भयं जनयन्तो निश्चेरुः गृध्राश्च बहवस्तुण्डैरहिपती-

---

**अथेति**। विद्येश्वरस्यैतन्नाम्न ऐन्द्रजालिकस्य। क्रियापाटवेन कर्मणि कौशल्येन। फलितं सिद्धमिव। महीसुरेण विप्रेण क्रियमाणं विधीयमानम्। सङ्गमोपायं संमेलनाय निर्धारितां युक्तिम्। वेदयित्वाऽवगमय्य। क्षपां रात्रिम्। 'त्रियामा क्षणदा क्षपा' इत्यमरः। क्षपयामि यापयामि अतिदैर्घ्यप्रतीतेः। अतिष्ठन्निद्रां विहायैव स्थितः, न तु निद्रामुपलेभे। परेद्युः परस्मिन्दिने। प्रभाते कल्ये। 'रसाः शृङ्गारादयः, भावाः रत्यादिस्थायिभावाः, रीतिरैन्द्रजालिकविद्यायाः पद्धतिः पूर्वैराचारिता, गतिः समयानुकूला प्रवृत्तिः एतासु चतुरो दक्षः। तादृशेन आत्मना तुल्येन। दौवारिकायां द्वाःस्थाय निवेदितो कथितः निजवृत्तान्तो येन तादृशः। सहसोपगम्य सत्वरमन्तिकं प्राप्य सप्रणामं नमस्कारपुरःसरम्। इन्द्रजालेन दीव्यतीत्यैन्द्रजालिकः। 'तेन दीव्यति खनति जयति जितम्' इति ठक्। समुत्सुकैरवरोधैरन्तःपुरजनैः सहितेन। समाहूयमान आकार्यमाणः। कक्षान्तरमन्तर्गृहम्। परिजनैः ताड्यमानेष्वाहन्यमानेषु वाद्येषु मुरजादिषु। नदत्सु शब्दायमानेषु सत्सु। गायकीषु गीतकारिणीवनितासु मदेन कला अव्यक्तमधुरस्वना याः कोकिलाः पिकाङ्गनास्तासामिव मञ्जुलः श्राव्यो ध्वनिः शब्दो यासां तासु। समधिकरागैर्नानावर्णविशेषै रञ्जिता वशीकृता सामाजिकानां प्रेक्षकाणां सभ्यानां मनोवृत्तिर्यैस्तथाविधेषु। 'सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते' इत्यमरः। पिच्छिकाया मयूरबर्हसमुदायानां भ्रमणेषु इतस्ततः संचालनेषु। स विद्येश्वरः। परिवारं परिजनवर्गम्। परिवृत्तमभितः। भ्रामयन्घूर्णयन्। मुकुलिते निमीलिते नयने येन तथाविधः। अतिष्ठत् स्थितः। **तदन्विति**। ततोऽनन्तरम्। विषमुल्बणं विषं गरलं वमन्त उद्गिरन्तः। फणालंकरणा विस्तारितस्फटाः। 'स्फटायां तु फणा द्वयोः' इत्यमरः। रत्नराजिभिः शिरोरत्नश्रेणिभिर्नीराजितोऽत्यन्तं प्रकाशितो राजमन्दिराभोगो राजगृहोद्देशो यैस्तथाविधाः। भोगिनः सर्पाः। 'उरगः पन्नगो भोगी' इत्यमरः। भयं भीतिं जनयन्त उत्पादयन्तो निश्चेरुर्निश्चक्रमुः। गृध्रा दाक्षाय्याश्च।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

नादाय दिवि समचरन् । ततोऽग्रजन्मा नरसिंहस्य हिरण्यकशिपोर्दैत्येश्वरस्य विदारणमभिनीय महाऽऽश्चर्यान्वितं राजानमभाषत—'राजन्, अवसानसमये भवता शुभसूचकं द्रष्टुमुचितम् । ततः कल्याणपरम्परावाप्तये भवदात्मजाकारायास्तरुण्या निखिललक्षणोपेतस्य राजनन्दनस्य विवाहः कार्यः ' इति । तदवलोकनकुतूहलेन महीपालेनानुज्ञातः स संकल्पितार्थसिद्धिसंभावनासंफुल्लवदनः सकलमोहजनकमञ्जनं लोचनयोर्निक्षिप्य परितो व्यलोकयत् । सर्वेषु 'तदैन्द्रजालिकमेव कर्म ' इति साद्भुतं पश्यत्सु रागपल्लवितहृदयेन राजवाहनेन पूर्वसंकेतसमागतामनेकभूषणभूषिताङ्गीमवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येनाग्निं साक्षीकृत्य संयोजयामास । क्रियावसाने सति 'इन्द्रजालपुरुषाः, सर्वे गच्छन्तु भवन्तः' इति द्विजन्मनोच्चैरुच्यमाने सर्वे मायामानवा यथायथमन्तर्भावं गताः । राजवाहनोऽपि पूर्वसंकल्पितेन गूढोपायचातुर्येणैन्द्रजालिकपुरुषवत्कन्यान्तःपुरं विवेश । मालवेन्द्रोऽपि तदद्भुतं मन्यमानस्तस्मै वाडवाय प्रचुरतरं धनं दत्त्वा विद्येश्वरम् ' इदानीं साधय ' इति विसृज्य स्वयमन्तर्मन्दिरं जगाम । ततोऽवन्तिसुन्दरी प्रियसहचरीवरपरिवारा वल्लभोपेता सुन्दरं मन्दिरं ययौ । एवं दैव-

---

' दाक्षाय्यगृध्रौ ' इत्यमरः । बहवोऽनेके । तुण्डैरास्यैः । ' वक्त्रास्ये वदनं तुण्डम् ' इत्यमरः । अहिपतीन्भुजङ्गेन्द्रान् । ' भुजङ्गोऽहिर्भुजङ्गमः ' इत्यमरः । दिव्यम्बरे । समचरन्नुड्डीयन्ते स्म । अग्रजन्मा ब्राह्मणः । विदारणं मारणमभिनीयाभिनयपुरःसरं प्रकाश्य । महताऽऽश्चर्येण विस्मयेनान्वितं युक्तम् । 'आन्महतः समानाधिकरणजातीययोः ' इत्यात्वम् । अवसानसमये इन्द्रजालसमाप्तिकाले । शुभसूचकं मङ्गलकारि किंचित् कलाकौशल्यम् । भवदात्मजाया भवत्कन्याया आकार इवाकारः स्वरूपं यस्यास्तादृश्यास्तरुण्या युवत्याः । अनुज्ञातः कृतानुमतिः । संकल्पितार्थस्याभीष्टकार्यस्य सिद्धिसंभावनया फलोत्पत्त्या संफुल्लवदनो विकसिताननः । सकलानां जनानां मोहजनकं भ्रमोत्पादकमञ्जनं कज्जलम् । निक्षिप्य विलिप्य । तत् राजकुमरयोर्विवाहरूपं कर्मापि । ऐन्द्रजालिकं माया निर्मितमेव । पश्यत्सु प्रेक्षमाणेषु । रागेणानुरक्त्या पल्लवितं विकासितं हृदयं यस्यैतादृशेन । पूर्वमेव बालचन्द्रिकाद्वारा कृतेन संकेतेन रहस्यसूचनेन समागतामुपागताम् । वैवाहिकेषु विवाहयोग्येषु मन्त्रेषु तन्त्रेषु च नैपुण्येन प्रावीण्येन । संयोजयामास संयोगं कारयामास । क्रियायाः इन्द्रजालविद्याप्रयोगरूपाया अवसाने विरामे । उच्चैरुन्नतस्वरेण । मायया निष्पन्ना मानवाः पुरुषाः । अन्तर्भावं गताः तिरोधानं संप्राप्ताः । पूर्वं पुरैव संकल्पितेन मनसैवंकरणीयमिति निर्धारितेन । गूढे गुप्ते उपाये चातुर्येण चतुरतया । विवेश प्रविष्टवान् । ' विश प्रवेशने ' । तदैन्द्रजालिकं कर्म । वाडवाय विप्राय । ' द्विजात्यग्रजन्मभूदेववाडवाः ' इत्यमरः । प्रचुरतरमतिबहुलम् । विसृज्य गन्तुमनुज्ञाप्य । वल्लभेन पत्या राजवाहनेनोपेता युक्ता । मनोरथस्याभिलाषस्य साफल्यं सिद्धिमुपेतः संप्राप्तः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मानुषबलेन मनोरथसाफल्यमुपेतो राजवाहनः सरसमधुरचेष्टाभिः शनैः शनैर्हरिणलोचनाया लज्जामपनयन्सुरतरागमुपनयन् रहो विश्रम्भमुपजनयन्संलापे तदनुलापपीयूषपानलोलश्चित्रचित्रं चित्तहारिणं चतुर्दशभुवनवृत्तान्तं श्रावयामास ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽवन्तिसुन्दरीपरिणयो नाम पञ्चम उच्छ्वासः ।

## समाप्तेयं दशकुमारचरितपूर्वपीठिका ।

---

हरिणलोचनायाः कुरङ्गाक्ष्या अवन्तिसुन्दर्या लज्जामपत्रपामपनयन्दूरीकुर्वन् । सुरते संभोगे रागमासक्तिमुपनयन्नुत्पादयन् । रह एकान्ते विस्रम्भं विश्वासं चोपजनयन्संप्रापयन् । 'समौ विस्रम्भविश्वासौ' इत्यमरः । संलापेऽन्योन्यभाषणे तस्या अनुलापो मुहुराभाषणं स एव पीयूषममृतं तस्य पान आस्वादने लोलश्चञ्चलः । 'संलापो भाषणं मिथः' 'अनुलापो मुहुर्भाषा' 'पीयूषममृतं सुधा' इत्यमरः सर्वत्र । चित्रचित्रमत्यद्भुतम् । चित्तहारिणं मनसो रञ्जकम् । चतुर्दशानामपि भुवनानां लोकानां वृत्तान्तं प्रवृत्तिं श्रावयामास बोधयामास । 'श्रु श्रवणे' णिजन्ताल्लिट् ॥

इति दशकुमारचरितव्याख्यायां मनोरमाख्यायां पञ्चम उच्छ्वासः समाप्तः ॥ ५ ॥

समाप्ता चेयं पूर्वपीठिका ।



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

श्रीः ।

# दशकुमारचरितम् ।



## उत्तरपीठिकायाः प्रथमोच्छ्वासः ।

श्रुत्वा तु भुवनवृत्तान्तमुत्तमाङ्गना विस्मयविकासिताक्षी सस्मितमिदमभाषत— 'दयित, त्वत्प्रसादादद्य मे चरितार्था श्रोत्रवृत्तिः । अद्य मे मनसि तमोऽपहस्त्वया दत्तो ज्ञानप्रदीपः । पक्वमिदानीं त्वत्पादपद्मपरिचर्याफलम् । अस्य च त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम् । अभवदीयं हि नैव किंचिन्मत्संबद्धम् । अथवास्त्येवास्यापि जनस्य क्वचित्प्रभुत्वम् । अशक्यं हि मदिच्छया विना सरस्वतीमुखग्रहणोच्छेषणीकृतो दशनच्छद एष चुम्बयितुम् । अम्बुजास-

---

उत्तरपीठिकायाः प्रथम उछ्वासः ॥ १ ॥

**श्रुत्वेति** । भुवनानां चतुर्दशानामपि जगतां वृत्तान्तमुदन्तं श्रुत्वा समाकर्ण्य । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः । उत्तमा लोकातिशायिन्यङ्गना वनिताऽवन्तिसुन्दरी । अंगशब्दात् 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इति नप्रत्ययः । 'विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना' इत्यमरः । विस्मयेनाश्चर्येण विकासिते अक्षिणी यस्यास्तादृशी सती 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । षित्वान्ङीष् च । सस्मितं मन्दहासयुक्तं यथातथा । 'स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम्' इत्यमरः । अभाषतावोचत् । 'भाष व्यक्तायां वाचि' । दयित हे वल्लभ ! । 'दयितं वल्लभं प्रियम्' इत्यमरः । तव प्रसादाद्वृत्तान्तकथनरूपादनुग्रहात् । अद्य अस्मिन्दिने । चरितार्था सफला जाता । श्रोत्रवृत्तिः कर्णव्यापारः । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । तमोऽज्ञानरूपमन्धकारमपहन्ति निवारयतीति तमोऽपहः । ज्ञानप्रदीपो विवेकरूपो दीपः । 'अपे क्लेशतमसोः' इति डप्रत्ययः । दत्तः समुद्दीपितः । पक्वं सिद्धम् । 'पचो वः' इति क्तप्रत्ययतकारस्य वकारः । परिचर्यायाः उपासानायाः फलम् । 'वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासना' इत्यमरः । उपकृत्योपकारं विधाय । भवत इदं भवदीयम् । 'भवतष्ठक्छसौ' इति छस्प्रत्ययः । तन्न भवतीत्यभवदीयम् । मत्संबद्धं ममाधीनम् । राजवाहनेऽतिविस्रब्धत्वात्सहेलमाह—**अथवेति** । क्वचित् केषुचित्कार्येषु । प्रभुत्वं स्वामित्वम् । मदिच्छया विना ममानुमतिमन्तरेण । पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' इति तृतीया 'पृथग्विनाऽन्तरेणर्ते हिरुङ्नाना च वर्जने' इत्यमरः । सरस्वत्या वाण्या मुखग्रहणेन वदनचुम्बनेनोच्छेषणीकृत उच्छिष्टः दशनच्छद एव भवदीयोऽयमधरः । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः । चुम्बयितुमास्वादयितुम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

नास्तनतटोपभुक्तमुरःस्थलं चेदमालिङ्गयितुम् ' इति प्रियोरसि प्रावृडिव नभस्युपास्तीर्णगुरुपयोधरमण्डला प्रौढकन्दलीकुड्मलमिव रूढरागरूषितं चक्षुरुल्लासयन्ती वार्हिबर्हावलीं विडम्बयता कुसुमचन्द्रकशारेण मधुकरकुलव्याकुलेन केशकलापेन स्फुरदरुणकिरणकेसरकरालं कदम्बमुकुलमिव कान्तस्याधरमणिमधीरमाचुचुम्ब । तदारम्भस्फुरितया च रागवृत्त्या भूयोऽप्यावर्ततातिमात्रचित्रोपचारशीफरो रतिप्रबन्धः । सुरतखेदसुप्तयोस्तु तयोः स्वप्ने बिसगुणनिगडितपादो जरठः कश्चिज्जालपादोऽदृश्यत । प्रत्यबुध्येतां चोभौ । अथ तस्य राजकुमारस्य कमलमूढशशिकिरणरज्जुदामनिगृहीतमिव रजतशृङ्खलोपगूढं चरणयुगलमासीत् ।

---

' चुबि वक्त्रसंयोगे ' णिजन्तात्तुमुन् । अम्बुजासनायाः पद्मालयायाः स्तनतटेन कुचाभोगेनोपभुक्तमालिङ्गितम् । उरःस्थलं भवदीयं वक्षःप्रदेशं च । आलिङ्गयितुमाश्लेषयितुम् । ' लिगि संगमे' णिजन्तात्तुमुनत्रापि । इति अनेन प्रकारेणालपन्ती । प्रियस्य हृदयवल्लभस्य राजवाहनस्य उरसि वक्षसि । 'उरो वक्षं च वक्षश्च ' इत्यमरः । विशेषणद्वयेन विष्णुरूपतया वर्णनाद्भाविसार्वभौमत्वं द्योतितम् । प्रावृड्वर्षा इव । नभस्याकाशे । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । उपास्तीर्णं विस्तारितं, गुरु पीनं च, पयोधरयोः स्तनयोः, पयोधराणां मेघानां च मण्डलमाभोगः समूहश्च यया तादृशी सती । ' स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । प्रौढा या कन्दली कदलीविशेषः तस्याः कुड्मलं मुकुलमिव । 'कुड्मलं मुकुलोऽस्त्रियाम् ' रूढेन प्रवृद्धेन रागेणानुरागेण रक्तिम्ना च रूषितं व्याप्तम् । चक्षुर्नयनम् । उल्लासयन्ती विकासयन्ती । कुसुमानि पुष्पाणि चन्द्रका बर्हनेत्राणीव कुसुमचन्द्रकाः । ' समौ चन्द्रकमेचकौ ' इत्यमरः । तैः शारेण शबलेन । ' शबले मारुते शारः ' इति विश्वः । अत एव बार्हिणां मयूराणां बर्हावलीं पिच्छश्रेणीं विडम्बयता अनुकुर्वता । ' मयूरो बर्हिणो बर्ही ' ' पिच्छबर्हे नपुंसके ' इत्यमरः । मधुकरकुलैः पुष्पसौगन्ध्यादागतैः भ्रमरनिचयैर्व्याकुलेन वेष्टितेन केशकलापेन कचसमुदायेन । स्फुरन्तो बहिर्निःसरन्तोऽरुणा रक्ताश्च ये किरणा अधरमयूखप्रसरास्ते केसराः किञ्जल्का इव तैः करालं रूषितम् । ' किञ्जल्कः केसरोऽस्त्रियाम् ' इत्यमरः । कदम्बस्य नीपवृक्षस्य मुकुलं कुड्मलमिव । ' कदम्बनीपप्रियककदम्बास्तु हारिप्रियः ' इत्यमरः । अधीरं धाष्टर्यं विना । आचुचुम्ब आस्वादितवती । **तदारम्भेति** । तदारम्भेणाधरचुम्बनस्य प्रारम्भेण स्फुरितया समुद्दीप्तया रागवृत्त्याऽनुरागप्रसरेण । भूयः पुनरपि । अतिमात्रेणापरिमितेन चित्रोपचारेण वीटिकाप्रदानादिनानाप्रकारेणोपचारेण शीफरो रमणीयः । ' शीफरः स्फीतरम्ययोः ' इत्यजयः । रतिप्रबन्धः सुरतोत्सवः । सुरतखेदेन संभोगपरिश्रमेण सुप्तयोर्निद्रांगतयोः । स्वप्ने निद्राकाले । बिसगुणैर्मृणालतन्तुभिर्निगडितौ बद्धौ पादौ यस्यैतादृशः । जरठो वृद्धः । जालपादो हंसः । ' अथ शृंखले । अन्दुको निगडोऽस्त्री स्यात् ' ' तदस्य संजातं तारकादिभ्य इतच् ' इतीतच् प्रत्ययः । 'जालपादः श्वेतगरुच्चक्राङ्गो मानसप्रियः ' इति वैजयन्ती । अदृश्यत विलोकितः । प्रत्यबुध्येतामजागरिष्टाम् । प्रतिपूर्वात् ' ' बुध अवगमने ' इत्यतो लङ् । कमलमूढः कमल-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

उपलभ्यैव च 'किमेतत्' इत्यतिपरित्रासविह्वला मुक्तकण्ठमाचक्रन्द राजकन्या । यत्र च तत्सकलमेव कन्यान्तःपुरमग्निपरीतमिव पिशाचोपहतमिव वेपमानमनिरूप्यमाणतदात्वायतिविभागमगण्यमानरहस्यरक्षासमयमवनितलविप्रविध्यमानगात्रमाक्रन्दविदीर्यमाणकण्ठमश्रुस्रोतोऽवगुण्ठितकपोलतलमाकुलीबभूव । तुमुले चास्मिन्समयेऽनियान्त्रितप्रवेशाः 'किं किम्' इति सहसोपसृत्य विविशुरन्तर्वंशिकपुरुषाः । ददृशुश्च तदवस्थं राजकुमारम् । तदनुभावनिरुद्धनिग्रहेच्छास्तु सद्य एव ते तमर्थं चण्डवर्मणे निवेदयांचक्रुः । सोऽपि कोपादागत्य निर्दहन्निव दहनगर्भया दृशा निशाम्योत्पन्नप्रत्यभिज्ञः 'कथं स एवैष मदनुजमरणनिमित्तभूतायाः पापाया बालचन्द्रिकायाः पत्युरत्यभिनिविष्टवित्तदर्पस्य वैदेशिकवणि-

---

त्वेन संदेहमापन्नो यः शशी चन्द्रमास्तस्य किरणैर्मयूखैरेव रज्जुदामाभिः संदानैर्निगृहीतं निबद्धमिव । 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' 'न पुंसि दाम संदानम्' इत्यमरः । रजतशृंखलया रूप्यनिगडेनोपगूढमावृतम् । 'दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि' इत्यमरः । उपलभ्य विदित्वा । अतिपरित्रासेनोद्वेगेन विह्वला विवशा । मुक्तः कण्ठः यस्मिन्कर्मणि तद्यथा तथा । आचक्रन्द आक्रोशति स्म । 'क्रदि आह्वाने रोदने च' । येन यादृशेन रोदनेन । अग्निपरीतमनलावृतम् । वेपमानं कम्पमानम् । तदात्वं तत्कालः, आयतिरुत्तरकालः, अनयोर्विभागोऽनिरूप्यमाणो न निर्धार्यमाणो येन तथाविधम् । 'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः' इत्यमरः । अगण्यमानो न चिन्त्यमानः केनाप्यन्तःपुरजनेन रहस्यरक्षायाः राजवाहनावन्तिसुन्दरीसंगमरूपरहस्यगुप्तेः समयः येन तथाभूतम् । अवनितले भूदेशे विप्रविध्यमानं विशेषेणाहन्यमानं गात्रं वपुर्येन तादृशम् । अश्रुस्रोतसा बाष्पजलप्रवाहेण । 'रोदनं चास्रमश्रु च' 'स्रोतोऽम्बुसरणं स्वतः' इत्यमरः । अवगुण्ठितं व्यापृतं कपोलतलं गण्डदेशो यस्य तादृशम् । आकुलीबभूव व्याकुलमभूत् । अनाकुलमाकुलं भवति इत्यर्थे 'कृभ्वस्तियोगे संपद्यकर्तरिच्विः' इति च्विप्रत्यये 'अस्य च्वौ' इतीदादेशः । तुमुले संकुले । अनियन्त्रितः न निवारितः प्रवेशो येषां तथाविधाः । **किंकिमितीति** । पृच्छन्त इति शेषः । विविशुः कन्यान्तःपुरमध्यं प्रविष्टाः । अन्तर्वंशिकपुरुषा अवरोधाधिकारिणः । 'अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः' इत्यमरः । तदवस्थं निगडितचरणयुगलम् । तस्य राजवाहनस्यानुभावेन सामर्थ्येन निरुद्धा कुण्ठिता निग्रहे नियमने इच्छा येषां तथाविधास्सन्तः । सद्यस्तस्मिन्नेव क्षणे । 'सद्यः सपदि तत्क्षणे' इत्यमरः । निवेदयांचक्रुर्विज्ञापयामासुः । सोऽपि चण्डवर्माऽपि । निर्दहन्भस्मीकुर्वन्निव । दहनोऽग्निर्गर्भेऽन्तर्यस्यास्तादृश्या । निशाम्य दृष्ट्वा । 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इत्यमन्तलक्षणतया प्राप्तमपि मित्त्वं 'शमोऽदर्शने' इति नियमनान्न भवति । उत्पन्ना प्रत्यभिज्ञा 'सोऽयम्' इत्याकारको दृष्टपूर्वत्वावगाही ज्ञानविशेषः यस्य तादृशः सन् । ममानुजस्य कनिष्ठभ्रातुर्दारुवर्मणो मरणस्य निधनस्य निमित्तभूतायाः । 'मरणं निधनोऽस्त्रियाम्' इत्यमरः । पापमस्यामस्तीति पापा 'अर्शआदिभ्योऽच्' इत्यच् । तस्याः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

क्पुत्रस्य पुष्पोद्भवस्य मित्रं रूपमत्तः कलाभिमानी नैकविधविप्रलम्भोपायपाटवावर्जितमूढपौरजनमिथ्यारोपितावितथदेवतानुभावः कपटधर्मकञ्चुको निगूढपापशीलश्चपलो ब्राह्मणब्रुवः। कथमिवैनमनुरक्ता मादृशेष्वपि पुरुषसिंहेषु सावमाना पापेयमवन्तिसुन्दरी। पश्यतु पतिमद्यैव शूलावतंसितामियमनार्यशीला कुलपांसनी' इति निर्भर्त्सयन्भीषणभ्रुकुटिदूषितललाटः काल इव काललोहदण्डकर्कशेन बाहुदण्डेनावलम्ब्य हस्ताम्बुजे रेखाम्बुजरथाङ्गलाञ्छने राजपुत्रं सरभसमाचकर्ष। स तु स्वभावधीरः सर्वपौरुषातिभूमिः सहिष्णुतैकप्रतिक्रियां दैवीमेव तामापदमवधार्य 'स्मर तस्या हंसगामिनि, हंसकथायाः। सहस्व वासु, मासद्वयम्' इति प्राणपरित्यागरागिणीं प्राणसमां समाश्वास्यारिवश्यतामयासीत्।

अथ विदितवार्तावार्तौ महादेवीमालवेन्द्रौ जामातरमाकारपक्षपातिनावात्म-

---

धूर्तायाः। 'पापो धूर्तस्तु वञ्चकः' इत्यमरः। पत्युर्धवस्य। 'धवः प्रियः पतिर्भर्ता' इत्यमरः। अत्यभिनिविष्टो नितरामुत्पन्नः वित्तदर्पो द्रव्यमदो यस्य तादृशस्य। विदेशे भवो वैदेशिकः। 'बह्वचोऽन्तोदात्ताट्ठञ्' इति ठञ्। तादृशस्य वणिक्पुत्रस्य वैश्यकुमारस्य। मित्रं सुहृत्। नैकविधेषु नानाप्रकारेषु विप्रलम्भोपायेषु वञ्चनयुक्तिषु पाटवेन नैपुण्येनावर्जिता वशीकृता ये मूढा बुद्धिहीनाः पौरजना नगरवासिनस्तैः मिथ्या मुधैवारोपितः वितथोऽकिञ्चित्करो देवतानुभावो दैवमाहात्म्यं यस्मिन्नेतादृशः। कपटधर्म एव कञ्चुकं यस्य तैरावृत इत्यर्थः। निगूढं गुप्तं यथातथा पापशीलः पापनिरतः। चपलः स्त्रीषु लोलः। कुत्सितो ब्राह्मणो ब्राह्मणब्रुवः। कथमिव केन वा प्रकारेण। पुरुषाः सिंहा इव पुरुषसिंहास्तेषु। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्युपमितसमासः। सावमानाऽवज्ञाकारिणी। पश्यत्विति। अद्य सपद्येव। शूलावतंसितं लोहदण्डारोपितम्। अनार्यशीला दुःस्वभावा। कुलपांसनी कुलदूषिणी। 'पांसनः कुलदूषकः' इति वैजयन्ती। निर्भर्त्सयंस्तर्जयन्। भीषणाभ्यां भयानकाभ्यां भ्रुकुटिभ्यां दूषितं ललाटमलिकं यस्यैतादृशः। कालोऽन्तक इव। 'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः' इत्यमरः। काललोहदण्डः कालायसयष्टिरिव कर्कशः कठिनस्तेन। अवलम्ब्य गृहीत्वा। रेखारूपे अम्बुजं कमलं, रथाङ्गं चक्रं, ते लाञ्छने ययोस्ते। 'चक्रं रथाङ्गम्' इत्यमरः। सरभसं सवेगम्। आचकर्षाकृष्टवान्। स्वभावधीरः सहजगाम्भीर्ययुक्तः। सर्वस्य पौरुषस्य पराक्रमस्यातिभूमिरधिष्ठानम्। सहिष्णुता सहनमेवैका मुख्या प्रतिक्रिया प्रतीकारो यस्यास्तादृशीम्। दैवीं भाग्यवशाज्जाताम्। आपदं विपत्तिमवधार्य निश्चित्य। स्मर चिन्तय। हंस इव गच्छतीति हंसगामिनी तत्संबुद्धिः। 'अधीगर्थदयेशां कर्मणि' इति कथाशब्दात्षष्ठी। वासु हे बाले!। 'अथ बाला स्याद्वासूः' इत्यमरः। प्राणपरित्यागेऽसुविसर्गे रागिणीं कृतनिश्चयाम्। समाश्वास्य सान्त्वयित्वा। अरेः शत्रोश्चण्डवर्मणो वश्यतामधीनत्वमयासीद्गतः। 'या प्रापणे' इत्यतो लुङ्।

**अथेति**। विदितवार्तौ विज्ञातसमाचारौ। आर्तौ दुःखितौ। जामातरं स्वकन्यावल्लभम्। 'जमाता दुहितुः पतिः' इत्यमरः। आकारे राजवाहनस्य सौन्दर्ये पक्षपातिनौ पक्षपातका-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

परित्यागोपन्यासेनारिणा जिघांस्यमानं ररक्षतुः । न शेकतुस्तु तमप्रभुत्वादुत्तारयितुमापदः । स किल चण्डशीलश्चण्डवर्मा सर्वमिदमुदन्तजातं राजराजगिरौ तपस्यते दर्पसाराय संदिश्य सर्वमेव पुष्पोद्भवकुटुम्बकं सर्वस्वहरणपूर्वकं सद्य एव बन्धने क्षिप्त्वा कृत्वा च राजवाहनं राजकेसरिकिशोरकमिव दारुपञ्जरनिबद्धं मूर्धजजालविलीनचूडामणिप्रभावविक्षिप्तक्षुत्पिपासादिखेदं च तमवधूतदुहितृप्रार्थनस्याङ्गराजस्योद्धरणायाङ्गानभियास्यन्ननन्याविश्वासान्निनाय । रुरोध च बलभरदत्तकम्पश्चम्पाम् । चम्पेश्वरोऽपि सिंहवर्मा सिंह इवासह्यविक्रमः प्राकारं भेदयित्वा महता बलसमुदायेन निर्गत्य स्वप्रहितदूतव्राताहूतानां साहाय्यदानायातिसत्वरमापततां धरापतीनामचिरकालभाविन्यपि संनिधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मानक्षमापरीतः प्रतिबलं प्रतिजग्राह । जगृहे च महति संपराये

---

रिणौ । आत्मपरित्यागोपन्यासेन 'यदि त्वमेनं शूलमारोप्य घातयिष्यसि तदा वयं न जीवितं धारयिष्यामः' इत्यादिकथनेन । अरिणा शत्रुणा । जिघांस्यमानं हन्तुमिष्यमाणम् । 'हन हिंसागत्योः' इत्यतः सनि 'अज्झनगमां सनि' इति दीर्घे च कर्मणि रूपम् । ररक्षतुः गोपयामासतुः । अप्रभुत्वाद्राज्यस्य चण्डवर्माधीनतया स्वास्मिन्सामर्थ्याभावात् । उत्तारयितुमापदः विपदः सकाशादुद्धर्तुम् । चण्डशीलः क्रूरस्वभावः । उदन्तजातमिदमत्रत्यं वृत्तान्तमखिलम् । राजराजस्य कुबेरस्य गिरौ पर्वते कैलासे । 'राजराजो धनाधिपः' इत्यमरः । तपस्यते तपः कुर्वते । 'तपसः परस्मैपदं च' इति क्यङ् परस्मैपदं च । संदिश्य दूतादिमुखेन विज्ञाप्य । सर्वस्वहरणपूर्वकं सर्वमप्यर्थजातमपहृत्य । बन्धने कारागृहे । 'कारा स्याद्बन्धनालयः' इत्यमरः । क्षिप्त्वा प्रवेश्य । राजकेसरिकिशोरं श्रेष्ठं सिंहबालकमिव । 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः । दारुणा काष्ठेन कृतायःपञ्जरं पशुपक्ष्यादिबन्धनगृहं तस्मिन्निबद्धम् । मूर्धजजाले केशकलापे विलीनस्य गुप्ततया स्थापितस्य चूडामणेः शिरोधार्यरत्नस्य मातङ्गपत्न्या कालिन्द्या दत्तस्य प्रभावेण महिम्ना विक्षिप्तो दूरीकृतः क्षुद्बुभुक्षा, पिपासा तृष्णा, एतदादीनां खेदः पीडा यस्य तथाभूतम् । अङ्गराजस्योद्धरणाय तदुन्मूलनाय । अनन्यविश्वासात् अन्येषु मालवेन्द्रतन्महिष्यादिषु विस्रम्भाभावात् । **रुरोधेति** । अभियुक्तवान् । बलभरेण सैन्यबाहुल्येन दत्तः समुत्पादितः कम्पः येन तादृशः सन् । चम्पामङ्गदेशस्य प्रधानराजधानीम् । असह्यो वैरिभिः क्षन्तुमशक्यः विक्रमः पौरुषं यस्य सः । प्राकारं नगरावरणभूतां भित्तिम् । 'प्राकारो वरणः सालः' इत्यमरः । भेदयित्वा विदार्य । निर्गत्य नगराद्बहिरागत्य । स्वप्रहितरात्मना प्रेषितैः दूतव्रातैः प्रेष्यवर्गैराहूतानामाकारितानाम् । साहाय्यदानाय युद्धे साहाय्यं कर्तुम् । आपततामागच्छताम् । धरापतीनां राज्ञाम् । अचिरकालभाविनि शीघ्रमेव जनिष्यमाणेऽपि सन्निधौ सामीप्ये । अदत्तापेक्षः स्वभुजदर्पात् प्रतीक्षामकुर्वाणः । अवलेपो गर्वः । अक्षमापरीतः क्रोधाविष्टः । प्रतिबलं चण्डवर्मणः शत्रोः सैन्यम् । प्रतिजग्राह निरोद्धुमुद्युक्तवान् 'ग्रह उपादाने' इत्यस्माल्लिट् । **जगृह इति** । महति तुमुलं यथा

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

क्षीणसकलसैन्यमण्डलः प्रचण्डप्रहरणशतभिन्नमर्मा सिंहवर्मा करिणः करिणमव-प्लुत्यातिमानुषप्राणबलेन चण्डवर्मणा । स च तद्दुहितर्यम्बालिकायामबलारत्न-समाख्यातायामतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत् । अपि त्वनीनयदपनी-ताशेषशल्यमकल्यसंधो बन्धनम् । अजीगणच्च गणकसंघैः 'अद्यैव क्षपावसाने विवाहनीया राजदुहिता' इति । कृतकौतुकमङ्गले च तस्मिन्नेकपिङ्गाचलात्प्र-तिनिवृत्त्यैणजङ्घो नाम जङ्घाकरिकः प्रभवतो दर्पसारस्य प्रतिसंदेशमावेदयत्—'अयि मूढ, किमस्ति कन्यान्तःपुरदूषकेऽपि कश्चित्कृपावसरः । स्थविरः स राजा जराविलुप्तमानावमानचित्तो दुश्चरितदुहितृपक्षपाती यदेव किंचित्प्रलपति त्वयापि किं तदनुमत्या स्थातव्यम् । अविलम्बितमेव तस्य कामोन्मत्तस्य चित्र-वधवार्ताप्रेषणेन श्रवणोत्सवोऽस्माकं विधेयः । सा च दुष्टकन्या सहानुजेन

---

तथा प्रवर्तमाने । संपराये संग्रामे । क्षीणं विनष्टं सकलं सैन्यमण्डलं सैनिकचक्रवालं यस्यैतादृशः। प्रचण्डैः क्रूरैः प्रहरणशतैरसंख्यैरायुधैर्भिन्नं विदीरितं मर्म सन्धिस्थानं यस्य तथाविधः । 'आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ' इत्यमरः । अवप्लुत्य उत्पत्य । अबलासु वनितासु रत्नत्वेन समाख्यातायां प्रसिद्धायाम् । अतिमात्रो गाढोऽभिलाषो यस्य तादृशः । प्राणैरेनं न व्ययूयुजत् सिंहवर्माणं प्राणहीनं नाकरोत् किन्तु केवलं बन्धने स्थापयामास । विपूर्वात् 'युजिर् योगे' इत्यतो णिजन्ताल्लुङ् । अनीनयन्नाययति स्म । 'णीञ् प्रापणे' णिजन्ताल्लुङ्' अपनीतानि दूरीकृतान्यशेषाणि शल्यानि बाणाग्राणि यस्मात्तादृशम् । अकल्यसन्धः सत्यप्रतिज्ञः। 'संधा प्रतिज्ञा मर्यादा' इत्यमरः । बन्धनं कारागारम् । अजीगणच्च गणितशास्त्रं विचार्य मुहूर्तं स्थापयामास । 'गण संख्याने' । 'ई च गणः' इतीत्वम् । गणकसंघैर्ज्योतिर्विद्वृन्दैः। 'सांव-त्सरो ज्योतिषिको दैवज्ञगणकावपि' इत्यमरः । क्षपाया रात्र्या अवसानेऽन्त्यभागे श्वः प्रभात इति यावत् । विवाहनीया परिणेतुमर्हा । राजदुहिता राजकन्या । कृतं विहितं कौतुकाय विवाहमहोत्सवाय मङ्गलं कङ्कणबन्धनादि येन तथाविधे सति । तस्मिंश्चण्डवर्मणि । एकपिङ्गस्य यक्षस्य कुबेरस्याचलात्कैलासात् । 'यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः' इत्यमरः । प्रतिनि-वृत्त्य प्रत्यागत्य । जंघाकरिकोऽतिशीघ्रगामी । 'जंघालोऽतिजवस्तुल्यो जंघाकरिकजांघिकौ' इत्यमरः । प्रभवतो राज्याधिकारिणः । प्रतिसंदेशं प्रत्युत्तरम् । आवेदयत्सूचयामास । अयि संबोधने । कन्यान्तःपुरस्य अवरोधस्थकन्याजनस्य दूषके कलङ्कयितरि । कृपाया दयाया अव-सरः । अस्ति किं ? नास्तीत्यर्थः । स्थविरो वृद्धः स मानसाराख्यः । जरया वार्द्धक्येन विलुप्तौ विनाशं गमितौ मानावमानौ यस्य तादृशं चित्तं यस्य तथाविधः । दुश्चरिता दुराचारा । तादृ-श्यामपि दुहितरि कन्यायां पक्षपाती आग्रहयुक्तः । यदेव किंचित्प्रलपति यत्किंचित्प्रलापमनर्थकं कृतवांश्चेत् । 'प्रलापोऽनर्थकं वचः' इत्यमरः । अविलम्बितं शीघ्रमेव । 'सत्वरं चपलं तूर्ण-मविलम्बितमाशु च' इत्यमरः । तस्य राजवाहनस्य । चित्ररूपेण नानाप्रकारेण यो वधो मारणं तस्य वार्ताप्रेषणेन समाचारनिवेदनेन । श्रवणयोः कर्णयोरुत्सवः सन्तोषः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कीर्तिसारेण निगडितचरणा चारके निरोद्धव्या ' इति । तच्चाकर्ण्य ' प्रातरेव राजभवनद्वारे स च दुरात्मा कन्यान्तःपुरदूषकः संनिधापयितव्यः । चण्डपोतश्च मातङ्गपतिरुपचितकल्पनोपपन्नस्तत्रैव समुपस्थापनीयः । कृतविवाहकृत्यश्चोत्थायाहमेव तमनार्यशीलं तस्य हस्तिनः कृत्वा क्रीडनकं तदधिरूढ एव गत्वा शत्रुसाहाय्यकाय प्रत्यासीदतो राजन्यकस्य सकोशवाहनस्यावग्रहणं करिष्यामि' इति पार्श्वचरानवेक्षांचक्रे। निन्ये चासावहन्यन्यस्मिन्नुन्मिषत्येवोषोरागे राजपुत्रो राजाङ्गणं रक्षिभिः । उपतस्थे च क्षरितगण्डश्चण्डपोतः । क्षणे च तस्मिन्मुमुचे तदङ्घ्रियुगलं रजतशृङ्खलया । सा चैनं चन्द्रलेखाच्छविः काचिदप्सरा भूत्वा प्रदक्षिणीकृत्य प्राञ्जलिर्व्यजिज्ञपत्—' देव, दीयतामनुग्रहार्द्रं चित्तम् । अहमस्मि सोमरश्मिसंभवा सुरतमञ्जरी नाम सुरसुन्दरी । तस्या म नभसि नलिनलुब्ध-

---

विधेयः उत्पाद्यः । निगडितौ शृंखलाबद्धौ चरणौ पादौ यस्याः सा चारके बन्धनालये । ' चारको बन्धनालयः ' इति वैजयन्ती । निरोद्धव्या निग्रहीतव्या । **तच्चेति** । दर्पसारस्य सन्देशवचनम् । आकर्ण्य श्रुत्वा । राजभवनस्य राजगृहस्य द्वारे प्रतीहारे । ' स्त्री द्वार्द्वारं प्रतीहारः ' इत्यमरः । स च दुरात्मा दुष्टो राजवाहनः । संनिधापनीयः उपस्थाप्यः । मातङ्गपतिर्गजश्रेष्ठः । 'मातङ्गवारणमहामृग–' इति हैमः । उपचिताभिः सम्पूर्णाभिः कल्पनाभिर्गजसज्जीकरणैरुपपन्नो युक्तः । 'कल्पना सज्जना समे' इत्यमरः। तत्रैव राजगृहद्वार्येव । कृतविवाहकृत्यः समाप्तपरिणयमङ्गलकार्यः । अनार्यशीलं दुःस्वभावं तं राजवाहनम् । हस्तिनः गजस्य । 'दन्ती दन्तावलो हस्ती' इत्यमरः । क्रीडनकं क्रीडासाधनभूतं वस्त्विव । शत्रोः सिंहवर्मणः साहाय्यकाय सहायतां विधातुम् । प्रत्यासीदतः समीपमागच्छतः । राजन्यकस्य राजवृन्दस्य । 'अथ राजकम् । राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ' इत्यमरः । राजन्यशब्दात् ' गोत्रोक्षोष्ट्रोरभ्रराजराजन्यवत्समनुष्याजाद्वुञ्' इति वुञ् । कोशेन धनसंचयेन वाहनेन रथादिना च सहितस्य । अवग्रहणं बन्धनं करिष्यामि विधास्यामि । पार्श्वचराननुचरान् । अवेक्षांचक्रे सहेलमभिवीक्षांचक्रे । **निन्य इति** । उपनीतः । असौ राजवाहनः । ' णीञ् प्रापणे' इत्यस्य ' दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् । कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्' इत्युक्त्या द्विकर्मकत्वात् ' गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ' इति वचनानुरोधेन प्रधानकर्मणो राजपुत्रस्यात्राभिहितत्वात्प्रथमा । उषोरागे प्राभातिके प्रकाशे उन्मिषति समुत्पद्यमान एव । राजाङ्गणं राजगृहस्य चत्वरम् । 'अङ्गणं चत्वराजिरे ' इत्यमरः । रक्षिभिर्बन्धनालयाधिकारिभिः । **उपतस्थ इति** । समुपस्थित इत्यर्थः ' उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् ' इत्यात्मनेपदम् । क्षरितो मदजलस्रावी गण्डः कटो यस्य तादृशः । मुमुचे निर्मुक्तमभूत् । 'मुच्लृ मोक्षणे' इत्यतः कर्मणि लिट् । तस्य राजवाहनस्याङ्घ्रियुगलं पादयुग्मम् । चन्द्रलेखाया इन्दुकलाया इव छविः कान्तिः यस्याः सा । ' स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ' इत्यमरः । व्यजिज्ञपत्कथयामास । विपूर्वात् ' ज्ञप मिच' इति ' चौरादिकण्यन्ताल्लुङ् । देव हे राजन् ! सोमरश्मेरेतन्नाम्नो गन्धर्वात्संभवो जननं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मुग्धकलहंसानुबद्धवक्त्रायास्तन्निवारणक्षोभविच्छिन्नविगलिता हारयष्टिर्यदृच्छया जातु हैमवते मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितमपतत्। पातितश्च कोपितेन कोऽपि तेन मयि शापः—'पापे, भजस्व लोहजातिमजातचैतन्या सती' इति। स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं संदानतामेत्य निस्तरणीयामिमामापदमपरिक्षीणशक्तित्वं चेन्द्रियाणामकल्पयत्। अनल्पेन च पाप्मना रजतशृङ्खलीभूतां मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः, पुत्रो मानसवेगस्य, वीरशेखरो नाम विद्याधरः शंकरगिरौ समभ्यगमत्। आत्मसात्कृता च तेनाहमासम्। अथासौ पितृप्रयुक्तवैरे प्रवर्तमाने विद्याधरचक्रवर्तिनि वत्सराजवंशवर्धने नरवाहनदत्ते विरसाशयस्तदपकारक्षमोऽयमिति तपस्यता दर्पसारेण सह समसृज्यत। प्रतिश्रुतं च तेन तस्मै स्वसुरवन्तिसुन्दर्याः प्रदानम्। अन्यदा तु वियति व्यवदायमानचन्द्रिके

---

यस्यास्तादृशी। नभस्याकाशे। 'नभोऽन्तरिक्षं गगनम्' इत्यमरः। नलिने कमले तद्भक्षण इति यावल्लुब्धो लोलुपः मुग्धः मूढो मदीयमेव मुखं यतः कमलं विचारितवान् एतादृशश्च यः कलहंसस्तेनानुबद्धं गृहीतं वक्त्रं मुखं यस्यास्तादृश्याः। 'मुग्धः सुन्दरमूढयोः' इत्यमरः। तस्य कलहंसस्य निवारणे दूरीकरणे क्षोभेणायासेन विच्छिन्ना त्रुटिताऽतएव विगलिता प्रच्युता च हारयष्टिरेकावली। जातु कदाचित्। हिमवति भवं हैमवतं तस्मिन्हैमवते। मन्दोदके स्वल्पजलयुते स्वल्पसरसि। पूर्वं मग्नः पश्चादुन्मग्नो बहिर्निष्क्रान्तो मग्नोन्मग्नः एतादृशस्य। मस्तके मूर्ध्नि। मणिकिरणै रत्नमयूखैः द्विगुणितं वर्धितं पलितं जरसा शौक्ल्यं यथा तथा। अपतत्पतिता। 'पत्लृ पतने' इत्यतो लङ्। कोपः सञ्जातोऽस्येति कोपितः तेन। 'तदस्य संजातं तारकादिभ्य इतच्' इतीतच्प्रत्ययः। तेन मार्कण्डेयेन। पापे हे दुराचारे!। भजस्व प्राप्नुहि। 'भज सेवायाम्'। प्रसाद्यमानः प्रणामादिना संतोष्यमाणः। सन्दानतां पादबन्धनत्वम्। 'सन्दानं पादबन्धनम्' इत्यमरः। एत्य प्राप्य। निस्तरणीयां निवारणीयाम्। इमामापदं शृंखलारूपप्रापकं शापम्। अपरिक्षीणाऽविनष्टा शक्तिः येषां तादृशत्वं पूर्वकथाज्ञातृत्वमिति यावत्। अनल्पेन बहुलेन पाप्मना पापेन। 'अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषे' इत्यमरः। इक्ष्वाकोरपत्यं पुमानैक्ष्वाकः। 'तस्यापत्यम्' इत्यर्थे 'जनपदशब्दात्क्षत्रियादञ्' इत्यञि 'दाण्डिनायनहास्तिनायन–' इत्यादिना निपातनादुलोपः। शंकरगिरौ कैलासपर्वते। समभ्यगमत् संप्राप्तवान्। 'गम्लृ गतौ' इत्यतो लुङि 'पुषादि' इत्यङ्। आत्मसात्कृता स्वायत्तीकृता। 'तदधीनवचने' इति सातिप्रत्ययः। अथेति। अनन्तरम्। असौ वीरशेखरः। पित्रा मानसवेगेन प्रयुक्तमुत्पादितं वैरं शत्रुता यस्यैतादृशे। विरसः कारुण्यरहित आशयोऽभिप्रायो यस्य सः। तस्य नरवाहनदत्तस्यापकारे वैरनिर्यातने क्षमः समर्थः। तपः करोति तपस्यति। 'तपसः परस्मैपदं च' इति क्यच्। तादृशेन। समसृज्यत संगतोऽभूत्। प्रतिश्रुतं प्रतिज्ञातम्। स्वसुर्भगिन्याः। 'भगिनी स्वसा' इत्यमरः।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मनोरथप्रियतमामवन्तिसुन्दरीं दिदृक्षुरवशेन्द्रियस्तदिन्द्रमन्दिरद्युति कुमारीपुरमुपासरत् । अन्तारितश्च तिरस्करिण्या विद्यया । स च तां तदा त्वदङ्कापाश्रयां सुरतखेदसुप्तगात्रीं त्रिभुवनसर्गयात्रासंहारसंबद्धाभिः कथाभिरमृतस्यन्दिनीभिः प्रत्यानीयमानरागपूरां न्यरूपयत् । स तु प्रकुपितोऽपि त्वदनुभावप्रतिबद्धनिग्रहान्तराध्यवसायः समालिङ्ग्येतरेतरमत्यन्तसुखसुप्तयोर्युवयोर्दैवदत्तोत्साहः पाण्डुलोहशृङ्खलात्मना मया पादपद्मयोर्युगलं तव निगडयित्वा सरोषरभसमपासरत् । अवसितश्च ममाद्य शापः । तच्च मासद्वयं तव पारतन्त्र्यम् । प्रसीदेदानीम् । किं तव करणीयम्' इति प्रणिपतन्तीं 'वार्तयानया मत्प्राणसमां समाश्वासय' इति व्यादिश्य विससर्ज ।

तस्मिन्नेव क्षणान्तरे 'हतो हतश्चण्डवर्मा सिंहवर्मदुहितुरम्बालिकायाः पाणिस्पर्शरागप्रसारिते बाहुदण्ड एव बलवदलम्ब्य सरभसमाकृष्य केनापि दुष्करकर्मणा तस्करेण नखप्रहारेण राजमन्दिरोद्देशं च शवशतमयमापादयन्नचकित-

---

वियति गगने । व्यवदायमाना निर्मलतया प्रकाशमाना चन्द्रिका कौमुदी यस्मिंस्तादृशे । 'दैप् शोधने' इत्यतोऽव्यवपूर्वाच्छानच् । 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः । द्रष्टुमिच्छुर्दिदृक्षुः । दृशेः सन्नन्तादुः । अवशानि न निगृहीतानि इन्द्रियाणि चक्षुरादीनि येनैतादृशः विषयासक्तः इत्यर्थः । इन्द्रमन्दिरस्येव द्युतिः शोभा यस्य तत् । कुमारीपुरमवन्तिसुन्दर्या अन्तःपुरम् । उपासरत्प्रविवेश । अन्तरितः प्रच्छन्नकायः । स वीरशेखरः । तामवन्तिसुन्दरीम् । तव अङ्के उत्संगे अपाश्रयः शिरोभागो यस्यास्तादृशीम् । 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः । 'अपाश्रयः शिरोभागः' इति वैजयन्ती च । त्रिभुवनस्य लोकत्रयस्य सर्गः सृष्टिः, यात्रा स्थितिः, संहारो लयः, तत्संबद्धाभिरेतद्विषयाभिः । अमृतस्यन्दिनीभिः सुधास्राविणीभिस्तद्वदतिमधुराभिरिति यावत् । प्रत्यानीयमानः पुनरप्युत्पाद्यमानो रागपूरोऽनुरागप्रवाहो यस्यास्तादृशीम् । न्यरूपयदवलोकयामास । स तु वीरशेखरः । प्रकुपितो रुष्टोऽपि । तवानुभावेन । प्राबल्येन प्रतिबद्धो निवारितः निग्रहे तव मारणादौ आन्तरो मानसिकोऽध्यवसाय उत्साहो यस्यैतादृशः सन् । समालिङ्ग्य समाश्लिष्य । दैवेन दत्तोत्साहप्रेरितः सन् । पाण्डुलोहशृंखला रजतसन्दानं तदात्मना तद्रूपया । निगडयित्वा निबध्य । सरोषरभसं अमर्षेण वेगेन च समम् । अपासरन्निर्गतवान् । अवसितः समाप्तः । 'षोऽन्तकर्मणि' 'द्यतिस्यतिमा-' इतीत्वेक्तप्रत्यये । च रूपम् । पारतन्त्र्यं पराधीनता । प्रणिपतन्तीं नमस्यन्तीम् । मत्प्राणसमामवन्तिसुन्दरीमिति शेषः । व्यादिश्य नियोज्य । विससर्ज मुमोच ।

**तस्मिन्निति** । तादृशे एव प्रसङ्गे । हतो हत इत्यत्र 'संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः' इति वार्तिकेन द्विरुक्तिः । पाणिस्पर्शार्थे हस्तग्रहणाय रागेणानुरागेण साकं यथा तथा प्रसारिते । बलवदवलम्ब्य हठाद्गृहीत्वा । सरभसं वेगेन । दुष्करकर्मणा प्रचण्डकर्मकारिणा । तस्करेण चोरेण । 'चोरैकागारिकस्तेनदस्युतस्करमोषकाः' इत्यमरः । शवशत-


CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

गतिरसौ विहरति ' इति वाचः समभवन् । श्रुत्वा चैतत्तमेव मत्तहस्तिनमुदस्ताधोरणो राजपुत्रोऽधिरुह्य रंहसोत्तमेन राजभवनमभ्यवर्तत । स्तम्बेरमरयावधूतपदातिदत्तवर्त्मा च प्रविश्य वेश्याभ्यन्तरमदभ्राभ्रनिर्घोषगम्भीरेण स्वरेणाभ्यधात्–' कः स महापुरुषो येनैतन्मानुषमात्रदुष्करं महत्कर्मानुष्ठितम् । आगच्छतु । मया सहेमं मत्तहस्तिनमारोहतु । अभयं मदुपकण्ठवर्तिनो देवदानवैरपि विगृह्णानस्य ' इति । निशम्यैवं स पुमानुपोढहर्षो निर्गत्य कृताञ्जलिराक्रम्य संज्ञासंकुचितं कुञ्जरगात्रमसक्तमध्यरुक्षत् । आरोहन्तमेवैनं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः 'अये, प्रियसखोऽयमपहारवर्मैव ' इति पश्चान्निषीदतोऽस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितमग्रेऽवलम्ब्य स्वमङ्गमालिङ्गयामास । स्वयं च पृष्ठतो वलिताभ्यां भुजाभ्यां पर्यवेष्टयत् । तत्क्षणोपसंहृतालिङ्गनव्यतिकरश्चाप-

---

मयं बहुमृतकायप्रचुरम् । ' तत्प्रकृतवचने मयट् ' इति मयट् । आपादयन्प्रकुर्वन् । अचकिताऽविकुण्ठिता गतिरितस्ततः संचारो यस्यैतादृशः । समभवन्समुत्थिताः । तमेव चण्डपोतनामानम् । मत्तहस्तिनं मत्तगजम् । उदस्तो नीचैः पातित आधोरणो हस्तिपको येन तादृशः । ' आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ' इत्यमरः । राजपुत्रो राजवाहनः । अधिरुह्याधिष्ठाय । रंहसा वेगेन । ' रंहस्तरसी तु रयः स्यदः । जवः ' इत्यमरः । अभ्यवर्तत अभिमुखमागतः । स्तम्बेरमो हस्ती । ' इभः स्तम्बेरमः पद्मी ' इत्यमरः । ' स्तम्बकर्णयो रमिजपोः ' इति अच्प्रत्ययः । ' तत्पुरुषे कृति बहुलम् ' इति सप्तम्या वैभाषिकोऽलुक् । तस्य रयेण वेगेनावधूतैर्निवारितैः पदातिभिः पादातिकैर्जनैः दत्तं वितीर्णं वर्त्म मार्गो यस्मै तादृशः सन् । ' पदातिपत्तिपदगपादातिकपदाजयः ' इत्यमरः । ' अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ' इति च । वेश्माभ्यन्तरं राजभवनाभ्यन्तरम् । अदभ्रो बहुलो योऽभ्रनिर्घोषः मेघध्वनिस्तद्वद्गम्भीरेण धीरतरेण । ' अदभ्रं बहुलं बहु ' ' अभ्रं मेघो वारिवाहः ' इत्यमरः । अभ्यधादभिहितवान् । अभिपूर्वात् 'डुधाञ् धारणपोषणयोः ' इत्यतो लुङि 'गातिस्था-' इति सिचो लुक् । मानुषमात्रदुष्करं केनापि मनुजेन कर्तुमसाध्यम् । अनुष्ठितं विहितम् । ममोपकण्ठवर्तिनः समीपनिवासितः । विगृह्णानस्य विग्रहं कुर्वतः । **निशम्येति** । श्रुत्वा । उपोढहर्षः प्रवृद्धानन्दः । संज्ञाभिः संकेतैः संकुचितं संकोचं प्रापितम् । कुञ्जरस्य हस्तिनो गात्रं शरीरम् । असक्तं निराबाधम् । अध्यरुक्षत आरूढवान् । ' रुह बीजजन्मनि प्रादुर्भावे च ' इत्यतः ' शल इगुपधादनिटः क्सः ' इति क्सः । निर्वर्ण्य सम्यग्दृष्ट्वा । ' निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् ' इत्यमरः । हर्षेण स्वमित्रसमागमजनितेनानन्देनोत्फुल्लदृष्टिः विकसितनयनः । प्रियश्चासौ सखा च प्रियसखः । 'राजाहःसखिभ्यष्टच् ' इति टच् । पश्चात्पृष्ठभागे निषीदत उपविशतः । उभयभुजयोः द्वयोर्बाह्वोः मूले तद्द्वारा प्रवेशितं विस्तारितमग्रे पुरोभागेऽवलम्ब्य गृहीत्वा । वलिताभ्यां तिर्यक्कृताभ्याम् । पर्यवेष्टयदालिङ्गितवान् । **तदिति** । तस्मिन्नेव क्षणेऽवसरे उपसंहृतः समापितः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

हारवर्मा चापचक्रकणपकर्पणप्रासपट्टिशमुसलतोमरादिप्रहरणजातमुपयुञ्जानान् बलावलिप्तान्प्रतिबलवीरान्बहुप्रकारायोधिनः परिक्षिपतः क्षितौ विचिक्षेप । क्षणेन चाद्राक्षीत्तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता बलनिकायेन परिक्षिप्तम् ।

अनन्तरं च कश्चित्कर्णिकारगौरः कुरुविन्दसवर्णकुन्तलः कमलकोमलपाणिपादः कर्णचुम्बिदुग्धधवलस्निग्धनीललोचनः कटितटनिविष्टरत्ननखः पट्टनिवसनः कृशाकृशोदरोरःस्थलः कृतहस्ततया रिपुकुलमिषुवर्षेणाभिवर्षन्पादांगुष्ठनिष्ठुरावघृष्टकर्णमूलेन प्रजविना गजेन संनिकृष्य पूर्वोपदेशप्रत्ययात् 'अयमेव स देवो राजवाहनः' इति प्राञ्जलिः प्रणम्यापहारवर्मणि निविष्टदृष्टिराचष्ट— 'त्वदादिष्टेन मार्गेण संनिपातितमेतदङ्गराजसाहाय्यदानायोपस्थितं राजकम् ।

---

आलिङ्गनव्यतिकरः समाश्लेषणव्यापारो येन सः । चापो धनुः । 'धनुश्चापो धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः । चक्रमायुधविशेषः । 'चक्रं रथाङ्गे सेनायां छद्मन्यस्त्रान्तरेऽपि च' इति भागुरिः । कणप आयसस्तम्भः । 'लोहस्तम्भस्तु कणपः' इति वैजयन्ती । कर्पणो बाणविशेषः । 'कुटिलाग्रस्तु कर्पणः' इति च वैजयन्ती । प्रासः कुन्तः । पट्टिशोऽस्त्रभेदः । मुसलो धान्यकुण्डनायुधम् । तोमरः शर्वला । इत्यादि प्रहरणजातमस्त्रवृन्दम् । उपयुञ्जानान् प्रयुञ्जतः । बलेन शक्त्युद्रेकेण अवलिप्तान् गर्वितान् । बहुप्रकारं नानाविधं यथा तथा आयोधिनो युद्धं कुर्वतः । क्षितौ भूम्याम् । विचिक्षेप पातयामास । समन्ततः परितः । अभिधावताऽऽगच्छता । बलनिकायेन सैन्यसमूहेन । परिक्षिप्तं विद्रावितम् ।

**अनन्तरमिति** । कर्णिकारो द्रुमोत्पलः । 'अथ द्रुमोत्पलः । कर्णिकारः परिव्याधः' इत्यमरः । तद्वद्गौरोऽवदातः । 'अवदातः सितो गौरः' इत्यमरः । कुरुविन्देन नीलरत्नेन सवर्णाः सदृक्षाः कुन्तलाश्चिकुरा यस्य तादृशः । 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः । कमलमिव कोमलं सुकुमारं पाणिपादं यस्य सः । पाणी च पादौ च तेषां समाहार इति पाणिपादम् । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति प्राण्यङ्गत्वादेकवद्भावः । कर्णचुम्बिनी आकर्णमायते दुग्धधवले क्षीरवच्छुभ्रे स्निग्धे मसृणे नीले मध्यदेशे कृष्णे च लोचने नयने यस्यैतादृशः । कटितटे श्रोण्युद्देशे निविष्टा स्थापिता इति यावत् । रत्नवत् स्थिता नखाः कररुहा यस्य । कृशमातिसूक्ष्ममुदरमकृशमातिपीनमुरःस्थलं वक्षश्च यस्य सः । कृतहस्ततया धनुर्विद्यायां निष्णाततया । 'कृतहस्तः सुप्रयोगविशिखः कृतपुंखवत्' इत्यमरः । रिपुकुलं शत्रुवर्गम् । इषुवर्षेण शरवृष्ट्या । पादांगुष्ठाभ्यां निष्ठुरं कठिनं यथातथाऽवघृष्टं निपीडितं कर्णयोर्मूलं यस्य तेन । प्रजविनाऽतिवेगवता । गजेन मातङ्गेन । सन्निकृष्य समीपमागत्य । पूर्वमेवापहारवर्मणा कृतो य उपदेशो राजवाहनस्वरूपचिह्नादीनां प्रत्ययात्स्मरणात् । प्राञ्जलिरञ्जलिबन्धयुतः । प्रणम्य नमस्कारं विधाय । निविष्टा तदभिमुखं स्थापिता दृष्टिर्येन तादृशः । आचष्ट अभिहितवान् । 'चक्षिङ् व्यक्तायां वाचि' इत्यतो लङ् । सन्निपातितं समीपमानीतम् । अङ्गराजस्य सिंहवर्मणः साहाय्यदानाय युद्धे सहायतां विधातुम् । उपस्थितं तत्तद्देशादागतम् । राजकं राज्ञां समूहः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

अरिबलं च विहितविध्वस्तं स्त्रीबालहार्यशस्त्रं वर्तते । किमन्यत्कृत्यम्' इति । हृष्टस्तु व्याजहारापहारवर्मा–' देव, दृष्टिदानेनानुगृह्यतामयमाज्ञाकारः । सोऽयमेव ह्यमुना रूपेण धनमित्राख्यया चान्तरितो मन्तव्यः स एवायं निर्गमय्य बन्धनादङ्गराजमपवार्जितं च कोशवाहनमेकीकृत्यास्मद्गृह्येणामुना सह राजन्यकेनैकान्ते सुखोपविष्टमिह देवमुपतिष्ठतु यदि न दोषः' इति । देवोऽपि 'यथा ते रोचते' इति तमाभाष्य गत्वा च तन्निर्दिष्टेन मार्गेण नगराद्बहिरतिमहतो रोहिणद्रुमस्य कस्यचित्क्षौमावदातसैकते गङ्गातरङ्गपवनपातशीतले तले द्विरदादवततार । प्रथमसमवतीर्णेनापहारवर्मणा च स्वहस्तसत्वरसमीकृते मातङ्ग इव भागीरथीपुलिनमण्डले सुखं निषसाद । तथा निषण्णं च तमुपहारवर्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुतैर्मैथिलेन च प्रहारवर्मणा, काशीभर्त्रा च कामपालेन चम्पेश्वरेण सिंहवर्मणा सहोपागत्य धनमित्रः प्रणिपपात । देवोऽपि हर्षाविद्धमभ्युत्थितः ' कथं समस्त एष मित्रगणः समागतः को नामायमभ्युदयः' इति कृतयथोचितोपचारान्निर्भरतरं परिरेभे । काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान्पितृवदपश्यत् । तैश्च हर्षकम्पितपलितं सरभसोपगूढः परमभिननन्द । ततः प्रवृ-

---

' गोत्रोक्षोष्ट्र–' इति वुञ् । अरेश्चण्डवर्मणो बलं सैन्यम् । स्त्रीभिरबलाभिः बालैः शिशुभिरपि हार्यमाक्रष्टुमर्हं शस्त्रं प्रहरणं यस्यैतादृशम् । हृष्टः प्रसन्नः स्वकार्यानुकूल्यसंपादनात् । व्याजहार ब्रवीति स्म । **देवेति** । आज्ञाकरः किङ्करः । अयमेव पुरो वर्तमान एव । अमुना रूपेण मद्रूपेण धनमित्राख्यया तन्नाम्ना च अन्तरितो द्विधा भिन्नः मन्तव्यो ज्ञेयः। अस्य मम च केवलं शरीरत एव भेदः, प्राणास्तु एकीभूता इत्यर्थः । निर्गमय्य मोचयित्वा । बन्धनात्कारागृहात् । इतस्ततो विक्षिप्तम् । कोशं धनसंचयं वाहनं रथादि सैन्यं च । एकीकृत्य संगृह्य । अस्माकं गृह्येण पक्षपातिना । 'गृह्यः पक्षस्थ उच्यते' इति वैजयन्ती । राजन्यानां क्षत्रियाणां समूहो राजन्यकम् । 'अथ राजकम् । राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्' इत्यमरः । ' गोत्रोक्षोष्ट्र–' इत्यादिना वुञ् । तम् । देवमुपतिष्ठतु भवन्तं सेवितुमागच्छतु । ते तुभ्यम् 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानता । तन्निर्दिष्टेनापहारवर्मप्रदर्शितेन । रोहिणद्रुमस्य वटवृक्षस्य । 'न्यग्रोधो रोहिणो वटः' इति वैजयन्ती । क्षौमवद्दुकूलवदवदातो धवलः सैकतः वालुकामयप्रदेशो यस्मिंस्तादृशे । 'सिकताशर्कराभ्यां च' इत्यण् । गङ्गातरङ्गाणाममरधुनीवीचीनां पवनस्य वायोः पातेन शीतले तले वृक्षाधोदेशे । द्विरदाद्धस्तिनः । ' दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः' इत्यमरः । अवततारावरोहति स्म । स्वहस्ताभ्यामपहस्ताभ्यां सत्वरमाशु समीकृते समतां प्रापिते । मातङ्ग इव गजवदुन्नत इत्यर्थः । भागीरथ्या गङ्गायाः पुलिनमण्डले तोयोत्थितपुञ्जे । निषसादोपविवेश । **तथेति** । निषण्णमुपविष्टम् । तं राजवाहनम् । मैथिलेन मिथिलाधिपतिना । धनमित्रो मित्रमपहारवर्मणः । प्रणिपपात नमश्चकार । अभ्युत्थितोऽभिमुखमुन्नतः । अभ्युदयः भाग्यपरम्परा । निर्भरतरं गाढम् । परिरेभे आलिङ्गितवान् । सरभसोपगूढः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

त्तासु प्रीतिसंकथासु प्रियवयस्यगणानुयुक्तः स्वस्य च सोमदत्तपुष्पोद्भवयाश्चरितमनुवर्ण्य सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावस्तांश्च तदुक्तावन्वयुंक्त । तेषु प्रथमं प्राह स्म किलापहारवर्मा—

इति श्रीदण्डिनः कृतौ दशकुमारचरिते राजवाहनचरितं नाम प्रथम उच्छ्वासः ।

## द्वितीयोच्छ्वासः ॥ २ ॥

'देव, त्वयि तदावतीर्णे द्विजोपकारायासुरविवरं त्वदन्वेषणप्रसृते च मित्रगणे अहमपि महीमटन्नङ्गेषु गङ्गातटे बहिश्चम्पायाः 'कश्चिदस्ति तपःप्रभावोत्पन्नदिव्यचक्षुर्मरीचिर्नाम महर्षिः' इति कुतश्चित्संलपतो जनसमाजादुपलभ्यामुतो बुभुत्सुस्त्वद्गतिं तमुद्देशमगमम् । न्यशामयं च तस्मिन्नाश्रमे कस्यचिच्चूतपोतकस्य छायायां कमप्युद्विग्नवर्णं तापसम् । अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः 'क्वासौ भगवान्मरीचिः, तस्मादहमुपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदो

---

सानन्दमाश्लिष्टः । परमभिननन्द सन्तोषस्य परां काष्ठामाप । **तत इति** । प्रवृत्तासु प्रसङ्गात्कृतासु । प्रीतिसंकथासु प्रियालापगोष्ठीषु । अनुयुक्तः पृष्टः । अनुवर्ण्य कथयित्वा । वृत्तान्तं वार्ताम् । तदुक्तौ स्वस्वचरिताख्याने । अनुयुंक्त प्रेरितवान् । प्राह स्मावदत् । 'ब्रूञ् व्यक्तायां वाचि' इत्यतो लटि 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति णल् आहादेशश्च । 'लट् स्मे' इति स्मयोगे भूतेऽपि लट् ॥

इति दशकुमारचरितव्याख्यायां मनोरमाख्यायामुत्तरपीठिकायां प्रथम उच्छ्वासः समाप्तः ॥ १ ॥

### अथोत्तरपीठिकायां द्वितीय उच्छ्वासः ॥ २ ॥

**देवेति** । हे राजन् । त्वयि भवति राजवाहने । तदा तस्यां निशायाम् । अवतीर्णे कृतप्रवेशे । द्विजोपकाराय मातङ्गनाम्नो विप्रस्योपकृतये । असुरविवरं पाताललोकम् । तवान्वेषणाय मार्गणाय प्रसृते विभज्य नानादेशं प्रविष्टे । मित्रगणे सुहृद्वर्गे । अहमपहारवर्माऽपि । महीं भुवमटन्परिभ्रमन् । चम्पाया अङ्गदेशप्रधानराजधान्याः । तपःप्रभावेण तपोमहिम्ना उत्पन्नं दिव्यचक्षुर्ज्ञाननेत्रं यस्यैतादृशः । संलपतो मिथो भाषमाणात् । जनसमाजाल्लोकनिवहात् । उपलभ्य ज्ञात्वा । अमुतो मरीचिमहर्षेः । अदश्शब्दात् 'पञ्चम्यास्तसिल्' इति तसिल् । बुभुत्सुरवगन्तुकामः । 'बुध अवगमने' सन्नन्तादुः । तव गतिं मार्गम् । उद्देशं स्थानम् । अगमं गतवान् । 'गम्लृ गतौ' लुङ् । लृदित्त्वादङ् । न्यशामयं दृष्टवांश्च । निपूर्वात् 'शम लक्ष आलोचने' इत्यतो णिचि लङि रूपम् । 'शमोऽदर्शने' इति दर्शने पर्युदस्तत्वान्न मित्त्वम् । चूतपोतकस्य बालाम्रवृक्षस्य । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । छायायामनातपे देशे । उद्विग्नवर्णं विगतमुखशोभम् । तापसं मुनिम् । उपचरितः सत्कृतः । क्षणं किंचित्कालपर्यन्तम् । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । उपलिप्सुरुपलब्धुं ज्ञातुमिच्छुः । प्रसङ्गेन कारणवशेन प्रोषितस्य प्रवासं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

गतिम्, आश्चर्यज्ञानविभवो हि स महर्षिर्मह्यां विश्रुतः' इत्यवादिषम्। अथासावुष्णमायतं च निःश्वस्याशंसत—'आसीत्तादृशो मुनिरस्मिन्नाश्रमे। तमेकदा काममञ्जरी नामाङ्गपुरीवतंसस्थानीया वारयुवतिरश्रुबिन्दुताराकितपयोधरा सनिर्वेदमभ्येत्य कीर्णशिखण्डास्तीर्णभूमिरभ्यवन्दिष्ट। तस्मिन्नेव च क्षणे मातृप्रमुखस्तदाप्तवर्गः सानुक्रोशमनुप्रधावितस्तत्रैवाविच्छिन्नपातमपतत्। स किल कृपालुस्तं जनमार्द्रया गिराश्वास्यार्तिकारणं तां गणिकामपृच्छत्। सा तु सव्रीडेव साविषादेव सगौरवेव चाब्रवीत्। 'भगवन्! ऐहिकस्य सुखस्याभाजनं जनोऽयमामुष्मिकाय श्वोवसीयायार्ताभ्युपपत्तिवित्तयोर्भगवत्पादयोर्मूलं शरणमभिप्रपन्नः' इति। तस्यास्तु जनन्युदञ्जलिः पलितशारशिखण्डबन्धस्पृष्टमुक्तभूमिरभाषत—'भगवन्, अस्या मे दोषमेषा वो दासी विज्ञापयति। दोषश्च मम स्वाधिकारानुष्ठापनम्। एष हि गणिकामातुरधिकारो यद्दुहितुर्जन्मनः प्रभृत्येवाङ्गक्रिया, तेजोबलवर्णमेधासंवर्धनेन दोषाग्निधातुसाम्यकृता मितेनाहारेण शरीरपोषणम्,

---

गतस्य। आश्चर्यकारको ज्ञानस्य विभवो महिमा यस्यैतादृशः। स मरीचिः। विश्रुतः प्रख्यातः। अवादिषमुक्तवान्। **अथेति**। असौ चूतवृक्षाधोवर्ती तापसः। आयतं दीर्घं यथा तथा। अशंसत कथयति स्म। तादृशस्त्वदुक्तप्रकारेण दिव्यचक्षुः। एकदा कदाचित्। अङ्गपुर्याश्चम्पानगर्या अवतंसस्थानीयाऽलंकारायमाणा। वारयुवतिर्गणिका। 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः। अश्रुबिन्दुभिर्नेत्रजलपृषद्भिः 'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्' इत्यमरः। तैस्ताराकितौ व्याप्तौ पयोधरौ कुचौ यस्याः सा। तारकाः सञ्जाता अनयोरिति तारकितौ 'तदस्य संजातं तारकादिभ्य इतच्' इतीतच्। 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः। सनिर्वेदं विरक्त्या साकम्। अभ्येत्य तस्य मरीचेः समीपमागत्य। कीर्णेन विक्षिप्तेन शिखण्डेन केशकलापेनास्तीर्णा पिहिता भूमिर्ययैतादृशी सती। अभ्यवन्दिष्ट प्राणंसीत्। **तस्मिन्नेवेति**। मातृप्रमुखो जनन्यादिः। तस्याः काममञ्जर्या आप्तवर्गो बन्धुजनः। सानुक्रोशं सदयम्। 'कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽपि' इत्यमरः। अनुप्रधावितः पश्चात्त्वरितमागतः। आर्द्रया सकृपया। गिरा वाण्या। आश्वास्य सान्त्वयित्वा। आर्तिकारणं दुःखनिमित्तम्। अपृच्छत् पृष्टवान्। 'प्रच्छ ज्ञीप्सायाम्' इत्यस्य 'ग्रहिज्या-' इति संप्रसारणम्। सव्रीडा सलज्जा। सविषादा खिन्ना। इह भूलोके भवमैहिकम्। अभाजनं न पात्रीभूतः। अमुष्मिन्स्वर्गलोके भवमामुष्मिकं तस्मै श्वोवसीयाय कल्याणाय। 'श्वःश्रेयसं स्यात्कल्याणं श्वोवसीयं शिवं शुभम्' इति हलायुधः। आर्तानां पीडितानामभ्युपपत्त्या परिपालनेन वित्तयोः ख्यातयोः। शरणमभिप्रपन्नः रक्षकत्वेनाश्रितवान्। जननी माता। उदञ्जलिरूर्ध्वीकृतकरयुगला। पलितेन वार्धक्यधवलतया शारः कर्बुरो यः शिखण्डबन्धः केशसंहतिस्तेनादौ स्पृष्टा पश्चान्मुक्ता भूमिर्यया तादृशी सती। 'पूर्वकालैकसर्व-' इति समासः। **वो दासीति**। काममञ्जर्या इदानीं भवदाश्रयत्वादिति भावः। स्वस्य वेश्याजनस्य योऽधिकार उपरि वक्ष्यमाणः तस्यानुष्ठापनं प्रवर्तनम्। दुहितुः कन्यायाः। अङ्गक्रिया अवयवानां सुष्ठुतया स्थापनम्। दोषा वातादयस्त्रयः, अग्नि-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

आपञ्चमाद्वर्षात्पितुरप्यनतिदर्शनम्, जन्मादिने पुण्यदिने चोत्सवोत्तरो मङ्गलविधिः, अध्यापनमनङ्गविद्यानां साङ्गानाम्, नृत्यगीतवाद्यनाट्यचित्रास्वाद्यगन्धपुष्पकलासु लिपिज्ञानवचनकौशलादिषु च सम्यग्विनयनम्, शब्दहेतुसमयविद्यासु वार्तामात्रावबोधनम्, आजीवज्ञाने क्रीडाकौशले सजीवनिर्जीवासु च द्यूतकलास्वभ्यन्तरीकरणम्, अभ्यन्तरकलासु वैश्वासिकजनात्प्रयत्नेन प्रयोगग्रहणम्, यात्रोत्सवादिष्वादरप्रसाधितायाः स्फीतपरिबर्हायाः प्रकाशनम्, प्रसङ्गवत्यां संगीतादिप्रियायां पूर्वसंगृहीतैर्ग्राह्यवाग्भिः सिद्धिलम्भनम्, दिङ्मुखेषु तत्तच्छिल्पवित्तकैर्यशःप्रख्यापनम्, कार्तान्तिकादिभिः कल्याणलक्षणोद्घोषणम्, पीठमर्दविटविदूषकैर्भिक्षुक्यादिभिश्च नागरिकपुरुषसमवायेषु रूपशीलशिल्पसौन्दर्यमाधुर्यप्रस्तावना, युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन शुल्केनावस्था-

---

रादारिकः, धातवः सप्तनाडयः एतेषां साम्यमन्यूनानतिरिक्तत्वं करोतीति तथाविधेन । मितेन नातिवहुना । आपञ्चमात्पञ्चमाद्वयसः प्रभृति । उत्सवोत्तर उत्सवप्रधानः । 'मह उद्धव उत्सवः' इत्यमरः । अध्यापनं पाठनम् । अनङ्गविद्यानां कामशास्त्राणाम् । आस्वाद्यकला मोदकादिभक्ष्यपाकः । पुष्पकला माल्यादीनां विचित्रतया ग्रथनम् । विनयनं शिक्षणम् । शब्दविद्या व्याकरणम् । हेतुविद्या तर्कशास्त्रम् । समयविद्या ज्योतिषशास्त्रम् । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । वार्तामात्रावबोधनं संग्रहेण सारांशमात्रशिक्षणम् । आजीवज्ञाने जीवनोपायचातुर्ये । 'आजीवो जीविका वार्ता' इत्यमरः । क्रीडाकौशले नर्मकेलिनैपुण्ये । 'द्रवकेलिपरीहासाः क्रीडा खेला च कूर्दनम्' इत्यमरः । सजीवाः कुक्कुटादयः, निर्जीवाः पाशकादयः तद्रूपासु । अभ्यन्तरीकरणं मर्मज्ञत्वेन विनयनम् । अभ्यन्तरकलासु रतिक्रीडाकाले अवयवस्पर्शनादिषु । 'साऽभ्यन्तरकला यत्तु स्पृश्याङ्गस्पर्शनं रतौ' इति वात्स्यायनः । वैश्वासिकः आप्तजनः । प्रयोगग्रहणमितिकर्तव्यताज्ञापनम् । प्रसाधितायाः भूषितायाः । 'प्रसाधताऽलंकृतश्च भूषितश्च परिष्कृतः' इत्यमरः । स्फीतः प्रचुरः परिबर्हो राजार्हच्छत्रचामरादिवस्तुनिवहो यस्यास्तथाभूतायाः । 'परिबर्हो नृपार्हेऽर्थे' इत्यमरः । प्रसङ्गवत्यां प्रसङ्गाज्जातायाम् । पूर्वमेव संगृहीतैर्धनदानादिना वशीकृतैः । ग्राह्याऽऽप्तत्वबुद्ध्याऽऽदरणीया वाक् येषां तैः । सिद्धेः स्वकार्यसिद्धेः लम्भनं प्रापणम् । तत्तच्छिल्पवित्तकैर्नानाविधकलासु विख्यातैः । 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः' इत्यमरः । कार्तान्तिको हस्तरेखादिलक्षणज्ञानवान् । 'कार्तान्तिको लक्षणज्ञः' इत्यमरः । कल्याणानि शुभकराणि अस्या लक्षणानि इत्युद्घोषणं प्रख्यापनम् । पीठमर्दो मानिनीनां प्रसाधकः । 'पीठमर्दोऽतिधृष्टे स्यान्नाट्योक्त्यां नायकप्रिये' इति विश्वः । विटष्षिद्गः ।'षिद्गः पाल्लविको विटः' इत्यमरः । विदूषको हास्यरसोत्पादकः । 'विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः' इति रसरत्नहारः । भिक्षुकी तापसी । 'श्रमणा भिक्षुकी मुण्डा' इति हैमः । 'भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी' इत्यमरश्च । समवायेषु समूहेषु । 'समवायश्चयो गणः' इत्यमरः । लक्ष्यभू-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पनम्, स्वतो रागान्धाय तद्भावदर्शनोन्मादिताय वा जातिरूपवयोऽर्थशक्तिशौचत्यागदाक्ष्यदाक्षिण्यशिल्पशीलमाधुर्योपपन्नाय स्वतन्त्राय प्रदानम्, अधिकगुणायास्वतन्त्राय प्राज्ञतमायाल्पेनापि बहुव्यपदेशेनार्पणम्, अस्वतन्त्रेण वा गान्धर्वसमागमेन तद्गुरुभ्यः शुल्कापहरणम्, अलाभेऽर्थस्य कामस्वीकृते स्वामिन्याधिकरणे च साधनम्, रक्तस्य दुहित्रैकचारिणीव्रतानुष्ठापनम्, नित्यनैमित्तिकप्रीतिदायकतया हृतशिष्टानां गम्यधनानां चित्रैरुपायैरपहरणम्, अददता लुब्धप्रायेण च विगृह्यासनम्, प्रतिहस्तिप्रोत्साहनेन लुब्धस्य रागिणस्त्यागशक्तिसंधुक्षणम्, असारस्य वाक्संतक्षणैर्लोकोपक्रोशनैर्दुहितृनिरोधनैर्व्रीडोत्पादनैरन्याभियोगैरवमानैश्चापवाहनम्, अर्थदैरनर्थप्रतिघातिभिश्चानिन्द्यैरिभ्यैरनुबद्धार्थानर्थसंशयान्विचार्य भूयोभूयः संयोजनमिति। गणिकायाश्च गम्यं प्रति सज्जतैव न सङ्गः। सत्यामपि प्रीतौ न मातुर्मातृकाया वा शासनातिवृत्तिः। एवं स्थितेऽनया प्रजापतिविहितं स्वधर्ममुल्लङ्घ्य क्वचिदागन्तुके रूपमात्र-

---

ताया विषयीभूतायाः। प्रभूततमेनातिभूयसा। शुल्केन देयद्रव्येण। उन्मादिताय जातचित्तविक्षेपाय। दाक्षिण्यमुदारता 'दक्षिणे सरलोदारौ' इत्यमरः। माधुर्यं मृदुभाषिता। अस्वतन्त्रः पित्राद्यधीनश्चेत्तस्मै अल्पेनापि स्वल्पमेव धनं गृहीत्वा समर्प्यापि बहुव्यपदेशेन तदन्यनिकटे अस्मात्पुरुषादधिकमेतावत्परिमितं गृहीतमस्माभिः इति ख्यापनपूर्वकं समर्पणम्। तद्गुरुभ्यः युवजनपित्रादेः सकाशात्। शुल्कापहरणं भर्त्सनादिपुरःसरं द्रव्यग्रहणम्। स्वीकृते वशीकृते। अधिकरणे न्यायालयादौ। साधनं व्यवहारकरणम्। एकचारिणीव्रतं पातिव्रत्यम्। गम्या विटाः 'गम्यो विटः पाल्लविको भुजङ्गः' इति भागुरिः। चित्रैर्नानाप्रकारैरुपायैर्युक्तिभिः। अददता न प्रयच्छता। विगृह्य विरोधं कृत्वा। 'प्रातिहस्ती प्रातिवेश्यः'। इति वैजयन्ती। लुब्धस्य कृपणस्य। त्यागशक्तेरौदार्यस्य संधुक्षणमुद्दीपीकरणम्। असारस्य दरिद्रस्य। वाक्संतक्षणैः परुषैर्वचोभिः। लोकानां जनानामुपक्रोशनैर्निन्दाभिः। 'उपक्रोशस्तु गर्हणम्' इति वैजयन्ती। 'उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे' इत्यमरः। दुहितुः कन्याया निरोधनैः शयनगृहगमनप्रतिबन्धनैः। व्रीडा लज्जा। अन्याभियोगैः इतरजनप्रेरणाभिः। अपवाहनं गृहाद्बहिर्यापनम्। अर्थदैर्धनप्रदानशीलैः। अनर्थप्रतिघातकैः संकटनिवारकैः। इभ्यैर्धनिकैः। 'इभ्य आढ्यो धनी स्वामी' इत्यमरः। अनुबद्धाः तादृशधनिकसंबन्धिनो ये अर्थानर्थान्प्रयोजनाप्रयोजनानि। विचार्य सम्यङ् निर्णीय। भूयोभूयो वारंवारम्। गम्यं विटपुरुषं प्रति। 'गम्यो विटः पाल्लविको भुजङ्गः' इति भागुरिः। सज्जतैव सन्नाहमात्रम्। मातृका मातामही। 'मातुर्माता तु मातृका' इति वैजयन्ती। शासनातिवृत्तिराज्ञोल्लंघनम्। **एवमिति**। अनया काममञ्जरीनाम्न्या मद्दुहित्रा। प्रजापतिविहितं विधिबोधितम्। स्वधर्मं गणिकाधर्मम्। उल्लंघ्य दूरीकृत्य। रूपमेव रूपमात्रम् 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

धने विप्रयूनि स्वेनैव धनव्ययेन रममाणया मासमात्रमत्यवाहि । गम्यजनश्च भूयानर्थयोग्यः प्रत्याचक्षाणयानया प्रकोपितः । स्वकुटुम्बकं चावसादितम् 'एषा कुमतिर्न कल्याणी' इति निवारयन्त्यां मयि वनवासाय कोपात् प्रस्थिता । सा चेदियमहार्यनिश्चया सर्व एष जनोऽत्रैवानन्यगतिरनशनेन संस्थास्यते' इत्यरोदीत् । अथ सा वारयुवतिस्तेन तापसेन 'भद्रे ! ननु दुःखाकरोऽयं वनवासः। तस्य फलमपवर्गः स्वर्गो वा । प्रथमस्तु तयोः प्रकृष्टज्ञानसाध्यः प्रायो दुस्संपाद एव, द्वितीयस्तु सर्वस्यैव सुलभः कुलधर्मानुष्ठायिनः । तदशक्यारम्भादुपरम्य मातुर्मते वर्तस्व' इति सानुकम्पमभिहिता 'यदीह भगवत्पादमूलमशरणम्, शरणमस्तु मम कृपणाया हिरण्यरेता देव एव इत्युदमनायत । स तु मुनिरनुविमृश्य गणिकामातरमवदत्—'संप्रति गच्छ गृहान् । प्रतीक्षस्व कानिचिद्दिनानि यावदियं सुकुमारा सुखोपभोगसमुचिता सत्यरण्यवासव्यसनेनोद्वेजिता भूयोभूयश्चास्माभिर्विबोध्यमाना प्रकृतावेव स्थास्यति' इति । 'तथा'

---

नतु रूपातिरिक्तं किञ्चिद्धनमस्ति यस्य तादृशे । विप्रयूना ब्राह्मणतरुणेन । धनव्ययेन द्रव्यविनियोगेन । अत्यवाहि अतिवाहितम् । 'वह प्रापणे' लुङि कर्मणि रूपम् । प्रत्याचक्षाणया प्रत्याख्यायंत्या । प्रकोपितः नितरां क्रोधयुक्तः कृतः । कुटुम्बकं गृहजनः । अवसादितं द्रव्योपार्जनोपायं परित्यज्य पुर्वार्जितं च मासेनैकेन विनाश्य संकटे स्थापितम् । कुमतिर्विपरीता बुद्धिः । न कल्याणी न श्रेयस्करी । **साचेति** । अहार्यनिश्चया दृढमतिः । अत्रैव भवदाश्रम एव । संस्थास्यते मरणं प्राप्स्यति । 'संस्थानं मरणं मतम्' इति वैजयन्ती । 'ष्ठा गतिनिवृत्तौ' इत्यस्य संपूर्वकत्वे 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । अरोदीत् अश्रुविसर्जनं कृतवती । 'रुदिर् अश्रुविमोचने' । **अथेति** । सा काममंजरी । तेन तापसेन मरीचिनाम्ना ( मयेति यावत् ) । भद्रे हे कल्याणि ! । दुःखाकरः अनिष्टोत्पादकः 'दुःखात्प्रातिलोम्ये' इति डाच् । अपवर्गो मोक्षः । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् । मोक्षोऽपवर्गः' इत्यमरः । प्रथमो मोक्षः । प्रायः बाहुल्येन । दुःसंपादो दुर्लभ एव । द्वितीयः स्वर्गः । अशक्यः कष्टदायितया दुःसाध्यो य आरम्भो वनवासोद्योगस्तस्मात् । उपरम्य विवृत्ता भूत्वा । सानुकम्पं दयया सह । 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः । अभिहिता प्रोक्ता । अशरणं रक्षकं न स्यात् । 'शरणं गृहरक्षित्रोः' इत्यमरः । कृपणायाः आर्तायाः । हिरण्यरेता अग्निः । 'हिरण्यरेता हुतभुग्दहनो हव्यवाहनः' इत्यमरः । यदि भवताऽहं परित्यक्ता भविष्यामि ततोऽग्नौ प्रविश्यासूंस्त्यक्ष्ये इति तात्पर्यम् । इति 'ब्रुवन्ती' इति शेषः । उदमनायत दुःखितचित्ता संजाता । 'कर्तुः क्यङ् सलोपश्च' । इति क्यङ् सलोपौ । अनुविमृश्य किंचित्कालं पर्यालोच्य । संप्रत्यधुना । गृहान् निजमन्दिरम् । 'गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः' इत्यमरः । प्रतीक्षस्व प्रतिपालय । सुकुमारा मृद्वंगी सुखोपभोगायानन्दानुभवाय समुचिता योग्या । सतीत्यस्य उद्वेजितेत्यनेन सहान्वयः । प्रकृतौ

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

इति तस्याः प्रतियाते स्वजने सा गणिका तमृषिमलघुभक्तिर्धौतोद्गमनीयवासिनी नात्यादृतशरीरसंस्कारा वनतरुपोतालवालपूरणैर्देवतार्चनकुसुमोच्चयावचयप्रयासैर्नैकविकल्पोपहारकर्मभिः कामशासनार्थे च गन्धमाल्यधूपदीपनृत्यगीतवाद्यादिभिः क्रियाभिरेकान्ते च त्रिवर्गसंबन्धिनीभिः कथाभिरध्यात्मवादैश्चानुरूपैरल्पीयसैव कालेनान्वरञ्जयत् । एकदा च रहसि रक्तं तमुपलक्ष्य 'मूढः खलु लोको यत्सह धर्मेणार्थकामावपि गणयति' इति किंचिदस्मयत । 'कथय वासु, केनांशेनार्थकामातिशायी धर्मस्तवाभिप्रेतः' इति प्रेरिता मरीचिना लज्जामन्थरमारभताभिधातुम्—'इतः किल जनाद्भगवतस्त्रिवर्गबलाबलज्ञानम् । अथवैतदपि प्रकारान्तरं दासजनानुग्रहस्य । भवतु, श्रूयताम् । ननु धर्मादृतेऽर्थकामयोरनुत्पत्तिरेव । तदनपेक्ष एव धर्मो निवृत्तिसुखप्रसूतिहेतुरात्मसमाधानमात्रसाध्यश्च ।

---

स्वधर्मे । प्रतियाते परावृत्य गते । स्वजने मात्रादिबन्धुवर्गे । अलघुरतिदृढा भक्तिर्यस्यास्तादृशी । धौते प्रक्षालिते उद्गमनीये वस्त्रे वस्ते परिधत्ते इति धौतोद्गमनीयवासिनी 'वस आच्छादने' 'तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्' इत्यमरकोशेन धौतशब्दमन्तराऽप्युक्तार्थसिद्धौ पुनर्धौतशब्दः करिकलभन्यायेन केवलवस्त्रपरम् । यथाच—'कलभः करि शावकः' इति कलभशब्दस्य करिजन्यशिशौ शक्तिसत्त्वेऽपि उभयप्रयोगे करिजन्यत्वरूपविशेषणपरित्यागेन केवलबालत्वरूपविशेष्यपरत्वम् । 'विशिष्टवाचकानां पदानां सति विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वम्' । तरुपोतो बालवृक्षः 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । आलवाले जलाधारे पूरणैः जलसेचनैः । कुसुमोच्चयस्य पुष्पपुञ्जस्यावचयो लवनम् । नैकविकल्पैः नानाप्रकारैः उपहारकर्मभिः बलिकर्मभिः । कामशासनार्थे श्रीमहादेवार्थम् । एकान्ते रहसि । त्रिवर्गो धर्मार्थकामाः 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः । अध्यात्मवादैर्वेदान्तविचारैः । अन्वरञ्जयत् स्वस्मिन्ननुरागं तस्य मरीचेर्जनयामासेत्यर्थः । **एकदेति** । कस्मिंश्चिदहनि । रक्तमनुरागयुक्तम् । तं मरीचिम् । उपलक्ष्य ज्ञात्वा । मूढोऽज्ञानावृतः । खलु निश्चयेन । सह धर्मेण पुरुषार्थत्वरूपसाधर्म्येण धर्मसमानश्रेण्याम् । गणयति विचारयति । अस्मयत स्मितं कृतवती । 'ष्मिङ् ईषद्धसने' । वासु हे बाले । 'अथ बाला स्याद्वासूः' इत्यमरः । केनांशेन कीदृशोत्कृष्टगुणांशेन । अर्थकामातिशायी तदपेक्षयोत्कृष्टः । प्रेरिताऽनुयुक्ता । आरभतोपक्रान्तवती । अभिधातुमर्थकामापेक्षया धर्मस्योत्कर्षमुपन्यस्तुम् । इतो जनात् मादृशाल्लोकात् । त्रिवर्गस्य धर्मार्थकामानां बलाबलज्ञानमुत्कर्षापकर्षावगतिः । एतदपि अज्ञवन्नियोजनमपि । दासजनेषु योऽनुग्रहः कृपा तस्य प्रकारान्तरं रीत्यन्तरम् । धर्मादृते धर्ममन्तरेण । 'पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने' इत्यमरः । 'अन्यारादितरर्ते—' इति पञ्चमी । अनुत्पत्तिरेव नैव तौ अर्थकामौ स्वयं धर्मं विनोत्पन्नौ भवत इति भावः । निवृत्तिसुखस्य मोक्षज्ञानस्य प्रसूतावुत्पत्तौ हेतुः कारणीभूतः । आत्मनो मनसो यत्समाधानं निग्रह ऐकाग्र्यमिति यावत् । तन्मात्रेण साध्यः संपादनीयः । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च'

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

सोऽर्थकामवद्बाह्यसाधनेषु नात्यायतते । तत्त्वदर्शनोपबृंहितश्च यथाकथंचिदप्य-नुष्ठीयमानाभ्यां नार्थकामाभ्यां बाध्यते । बाधितोऽपि चाल्पायासप्रतिसमाहित-स्तमपि दोषं निर्हृत्य श्रेयसेऽनल्पाय कल्पते । तथाहि पितामहस्य तिलोत्तमाभि-लापः, भवानीपतेर्मुनिपत्नीसहस्रसंदूषणम्, पद्मनाभस्य षोडशसहस्रान्तःपुर-विहारः, प्रजापतेः स्वदुहितर्यपि प्रणयप्रवृत्तिः, शचीपतेरहल्याजारता, शशा-ङ्कस्य गुरुतल्पगमनम्, अंशुमालिनो वडवालङ्घनम्, अनिलस्य केसरिकलत्रसमा-गमः, बृहस्पतेरुतथ्यभार्याभिसरणम्, पराशरस्य दाशकन्यादूषणम्, पाराशर्यस्य भ्रातृदारसंगतिः, अत्रेर्मृगीसमागम इति । अमराणां च तेषु तेषु कार्येष्वासुर-विप्रलम्भनानि ज्ञानबलान्न धर्मपीडामावहन्ति । धर्मपूते च मनसि नभसीव न जातु रजोऽनुषज्यते । तन्मन्ये नार्थकामौ धर्मस्य शततमीमपि कलां स्पृशतः' इति । श्रुत्वैतद्दपिरुदीर्णरागवृत्तिरभ्यधात्—'अयि विलासिनि, साधु पश्यसि न

---

इत्यमरः । बाह्यसाधनेषु लौकिकसामग्रीषु । नात्यायतते अत्यन्तं कष्टं नोत्पादयतीति भावः । 'यती प्रयत्ने' तत्त्वदर्शनेन वास्तविकतत्त्वविचारेण । उपबृंहितो वृद्धिं गमितः । 'वृह बृहि वृद्धौ' । न बाध्यते प्रतिहतो न भवति । प्रतिसमाहितः विघ्नशान्तिं गमितः। निर्हृत्य दूरीकृत्य । श्रेयसेऽनल्पाय अत्युत्कृष्टनिश्रेयसपदप्राप्तिरूपकल्याणाय । कल्पते समर्थो भवति । 'कृपू सामर्थ्ये' । 'क्लृपि संपद्यमाने च' इति चतुर्थी । **तथा हीति** । येषां पितामहादीनां धर्मोऽ-र्थकामाभ्यां प्रतिहतोऽपि पुनरल्पायासेन पूर्वप्रकृतिं गमितः सन् निरतिशयसुखप्राप्तिहेतुरभूत्ते उदाहरिष्यन्ते इति भावः । भवानीपतेर्महादेवस्य । संदूषणं गमनम् । पद्मनाभस्य श्रीकृष्णा-वतारस्य विष्णोः । स्वदुहितरि निजकन्यायामेव । प्रणयेनानुरागेण प्रवृत्तिगमनायोयोगः । शचीपत्तेः सहस्राक्षस्य । अहल्याजारता गौतमधर्मपत्नीदूषकत्वम् । 'जारस्तूपपतिः समौ' इत्यमरः । गुरोः बृहस्पतेः । तल्पं स्त्री । 'तल्पं शय्याट्टदारेषु' इत्यपि । अंशुमालिनः सूर्यस्य । वडवाऽश्वयोषा । अनिलस्य वायोः केसरिकलत्रेण तन्नामवानरनार्याऽञ्जनाभिधया साकं समागमः । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । उतथ्यस्य तन्नाम्नो निजज्येष्ठभ्रातुः । दाशकन्या धीवर-दुहिता योजनगन्धाभिधा तस्या दूषणम् । 'कैवर्ते दाशधीवरौ' इत्यमरः । पाराशर्यस्य पराशरपुत्रस्य व्यासस्य । 'व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः' इत्यमरः । पराशर-स्यापत्यं पाराशर्यः' गर्गादिभ्यो यञ्' इति यञ् । भ्रातुर्विचित्रवीर्यनाम्नो दारैः पत्नीभिरम्बिका-दिभिः । अमराणां च देवानामपि । आसुरविप्रलम्भनानि अकृत्याचरणानि । 'अकृत्याचरणं यत्तदासुरं विप्रलम्भनम्' इत्यजयः । ज्ञानस्य बलादाधिक्यात् । धर्मस्य पीडामुपघातम् । आवहन्त्युत्पादयन्ति । पूते परिशुद्धे । 'पवित्रः प्रयतः पूतः' इत्यमरः । नभस्याकाशे । रजो रजोगुणः पांसुगणश्च । जातु कदापि नानुषज्यते संसृष्टं न भवति । 'षञ्ज संगे' । तन्मन्ये तस्मात्कारणादहं साधारणया मदीयबुद्ध्या विचारयामि । **कलां न स्पृशत इति** । अर्थकामौ शतांशेनापि धर्मसादृश्यं नैव प्राप्नुत इति भावः । उदीर्णरागवृत्तिः संजातकामा-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

धर्मस्तत्त्वदर्शिनां विषयोपभोगेनोपरुध्यत इति । किंतु जन्मनः प्रभृत्यर्थकामवार्तानभिज्ञा वयम् । ज्ञेयौ चेमौ किंरूपौ किंपरिवारौ किंफलौ च' इति । सा त्ववादीत्—'अर्थस्तावदर्जनवर्धनरक्षणात्मकः, कृषिपाशुपाल्यवाणिज्यसंधिविग्रहादिपरिवारः, तीर्थप्रतिपादनफलश्च। कामस्तु विषयातिप्रसक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः । परिवारस्त्वस्य यावदिह रम्यमुज्ज्वलं च । फलं पुनः परमाह्लादनम्, परस्परविमर्दजन्म, स्मर्यमाणमधुरम्, उदीरिताभिमानमनुत्तमम्, सुखमपरोक्षं स्वसंवेद्यमेव । तस्यैव कृते विशिष्टस्थानवर्तिनः कष्टानि तपांसि, महान्ति दानानि, दारुणानि युद्धानि, भीमानि समुद्रलङ्घनादीनि च नराः समाचरन्ति' इति । निशम्यैतन्नियतिबलान्नु तत्पाटवान्नु स्वबुद्धिमान्द्यान्नु स्वनियममनादृत्य तस्यामसौ प्रासजत् । सा सुदूरं मूढात्मानं च तं प्रवहणेन नीत्वा पुरमुदारशोभया राजवीथ्या स्वभवनमनैषीत् । अभूच्च घोषणा 'श्वः कामोत्सवः' इति । उत्तरेद्युः स्नातानुलिप्तमारचितमञ्जुमालमारब्धकामिजनवृत्तं

---

भिलाषः । अयीत्यामन्त्रणे । साधु पश्यसि तत्त्वांशं सम्यग् जानासीत्यर्थः । तत्त्वदर्शिनां तत्त्वज्ञानवताम् । विषयोपभोगेन स्रक्चन्दाद्यनुभवेन । उपरुध्यते बाधितो भवति । अर्थकामयोर्वार्त्तायां वृत्तान्तविषये अनभिज्ञा अपरिचिताः । ज्ञेयौ ज्ञातुमुचितौ । किंपरिवारौ कीदृशसामग्रीसाध्यौ । सा काममंजरी । कृषिः सस्याद्युत्पादनम् । तीर्थेषु सत्पात्रेषु प्रतिपादनं दानम् । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः । विषयेषु स्रगादिषु अतिसक्तचेतसोर्लोलुपचित्तयोः । स्त्रीपुंसयोः नरनार्योः । 'अचतुरविचतुर–' इत्यादिनाऽदन्तत्वं निपातितम् । स्पर्शविशेषः आलिङ्गनादिरूपः । यावद्रम्यं मनोहरवस्तुजातमात्रमित्यर्थः । 'यावत्तावच्च साकल्ये' इत्यमरः । परस्परविमर्दनजन्मेतरेतरालिङ्गनचुम्बुनादिजन्यम् । स्मर्यमाणं सन्मधुरं स्मृतावपि माधुर्यं यत्र तस्य साक्षादनुभवे मधुरता किमिति वक्तव्येति भावः। अनुत्तमं श्रेष्ठतमम् । स्वसंवेद्यं स्वयमेव ज्ञातव्यं नतु कस्यचिद्वचसेति भावः। **तस्यैवेति** । कृते तादृशकामार्थमेव । 'अर्थे कृतेऽव्ययं तावत्तादर्थ्ये वर्तते द्वयम्' इत्यजयः । विशिष्टस्थानवर्तिनो गंगातीरादिपुण्यक्षेत्रनिवासिनः । कष्टानि कृच्छ्रसाध्यानि । दारुणानि भयानकानि । भीमानि भीतिकराणि । 'दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्' इत्यमरः । समाचरन्ति कुर्वन्ति । **निशम्येति** । आकर्ण्य । नियतिबलाद्दैवप्राबल्यात् । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । तस्याः काममंजर्याः पाटवाद्वाक्चातुर्यात् । स्वस्य बुद्धिमान्द्याद्बुद्धिभ्रंशाद्वा । नु वितर्के सर्वत्र । स्वनियमं तपश्चरणादिकं नित्यविधिम् । अनादृत्य परित्यज्य । असौ मरीचिः । प्रासजदनुरक्तो जातः । प्रवहणेन नरवाह्यवाहनविशेषेण । भाषायां तु 'पालकी' इति प्रसिद्धिः । उदाराऽतिमहती शोभा यस्य तादृशेन । स्वभवनं निजगृहमनैषीत्प्रापयामास । घोषणा वाद्यविशेषवादनेन जनानेकीकृत्य वक्तव्यसूचनम् । उत्तरेद्युः परस्मिन्दिवसे । 'सद्यःपरुत्प–' इति निपातनात् साधुता । पूर्वं स्नातं पश्चादनुलिप्तं स्नातानुलिप्तम् । 'पूर्वकालैकसर्व–' इत्यादिना समासः । आ समन्तात्कण्ठा-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

निवृत्तस्ववृत्ताभिलाषं क्षणमात्रे गतेऽपि तया विना दूयमानं तमृद्धिमता राजमार्गेणोत्सवसमाजं नीत्वा क्वचिदुपवनोद्देशे युवतिजनशतपरिवृतस्य राज्ञः संनिधौ स्मितमुखेन तेन 'भद्रे, भगवता सह निषीद' इत्यादिष्टा सविभ्रमं कृतप्रणामा सस्मितं न्यषीदत् । तत्र काचिदुत्थाय बद्धाञ्जलिरुत्तमाङ्गना 'देव, जितानयाहम् । अस्यै दास्यमद्यप्रभृत्यभ्युपेतं मया' इति प्रभुं प्राणंसीत् । विस्मयहर्षमूलश्च कोलाहलो लोकस्योदजिहीत । हृष्टेन च राज्ञा महार्हैं रत्नालंकारैर्महता च परिबर्हेणानुगृह्य विसृष्टा वारमुख्याभिः पौरमुख्यैश्च गणशः प्रशस्यमाना स्वभवनमगत्वैव तमृषिमभाषत—'भगवन्, अयमञ्जलिः, चिरमनुगृहीतोऽयं दासजनः, स्वार्थ इदानीमनुष्ठेयः' इति । स तु रागादशनिहत इवोद्भ्राम्याब्रवीत्—'प्रिये, किमेतत् । कुत इदमौदासीन्यम् । क्व गतस्तव मय्यसाधारणोऽनुरागः' इति । अथ सा सस्मितमवादीत्—'भगवन्, ययाद्य राजकुले मत्तः पराजयोऽभ्युपेतस्तस्याश्च मम च कस्मिंश्चित्संघर्षे 'मरीचिमावर्जितवतीव श्लाघसे' इति तयास्म्यहमधिक्षिप्ता । दास्यपणबन्धेन चास्मिन्नर्थे प्रावर्तिषि । सिद्धार्था चास्मि त्वत्प्रसादात्' इति । स तया तथावधूतो दुर्मतिः कृतानुशयः शून्यवन्न्यवर्तिष्ट । यस्तयैवं कृतस्तपस्वी तमेव मां महाभाग, मन्यस्व । स्वशक्तिनिषिक्तं रागमुद्धृत्य

---

दिषु रचिता धृता मञ्जुर्मनोहरा माला येन तथाविधम् । निवृत्तोऽवसन्नः स्ववृत्ते तपोनुष्ठानरूपे अभिलाषः आसक्तिर्यस्य तथाभूतम् । दूयमानं विषादं प्राप्नुवन्तम् । ऋद्धिमता तोरणाद्यलंकारसंपन्नेन । उत्सवसमाजं कामकेलिमण्डपम् । 'पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम्' इत्यमरः । युवतिजनशतपरिवृतस्य तरुणगणिकाजनपरिवेष्टितस्य । राज्ञः सिंहवर्मनाम्नः । आदिष्टा दत्तानुमतिः । न्यषीददुपविशति स्म । जिता पराभूतास्मि । अभ्युपेतमङ्गीकृतम् । 'अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः' इत्यमरः । कोलाहलः कलकलरवः । उदजिहीत उत्थितः । 'ओहाङ् गतौ' । हृष्टेन संतुष्टेन । महार्हैरधिकमूल्यैः । परिबर्हेण राजार्हवस्तुजातेन । विसृष्टा गृहगमनायानुमता । गणशः राजवीथिषु संघश एकीभूय । प्रशस्यमानाऽभिनन्द्यमाना । स्वभवनमगत्वैवं मध्येमार्गमेव । अञ्जलिर्नमस्कारः । स्वस्य भवतोऽर्थः कृत्यं वनगमनरूपम् । अशनिहत इव वज्राभिहतवत् । उद्भ्राम्य भ्रान्तचित्तः सन् । असाधारणो नितरां रूढमूलः । संघर्षे विवादे । श्लाघसे आत्मस्तुतिं करोषि । अधिक्षिप्ता निन्दिता । दास्यपणबन्धेन 'यदि मरीचिर्मया वशीक्रियते तर्हि त्वया मद्दास्यं करणीयं नोचेत्तवाहं दासी भविष्यामि' इति प्रतिज्ञापूर्ववचनेन । अस्मिन्नर्थे भवद्वशीकरणात्मके प्रावर्तिषि प्रवृत्ताऽभूवम् । सिद्धार्था जातप्रयोजना । तव प्रसादादनुग्रहात् । **स इति** । मरीचिः । तया काममंजर्या । तथा पूर्वोक्तप्रकारेणावधूतः मध्येमार्गमेव परित्यक्तः । न्यवर्तिष्ट स्वतपोवनं प्रति निवृत्यागतः । एवमुक्तरूपेण तपस्वी कृतः शोच्यत्वेन विहितः । 'तपस्वी चानुकम्पार्हः' इत्यमरः । मन्यस्वावगच्छ । 'मनु

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तयैव बन्धक्या महद्वैराग्यमर्पितम्। अचिरादेव शक्य आत्मा त्वदर्थसाधनक्षमः कर्तुम्। अस्यामेव तावदङ्गपुर्यां चम्पायाम्' इति।

अथ तन्मनश्च्युततमःस्पर्शभियेवास्तं रविरगात्। ऋषिमुक्तश्च रागः संध्यात्वेनास्फुरत्। तत्कथादत्तवैराग्याणीव कमलवनानि समकुचन्। अनुमतमुनिशासनस्त्वहममुनैव सहोपास्य संध्यामनुरूपाभिः कथाभिस्तमनुशय्य नीतरात्रिः प्रत्युन्मिषत्युदयप्रस्थदावकल्पे कल्पद्रुमकिसलयावधीरिण्यरुणार्चिषि तं नमस्कृत्य नगरायोदचलम्। अदर्शं च मार्गाभ्याशवर्तिनः कस्यापि क्षपणकविहारस्य बहिर्विविक्ते रक्ताशोकषण्डे निषण्णमस्पृष्टसमाधिमाधिक्षीणमग्रगण्यमनभि-

---

अवबोधने'। निषिक्तमुत्पादितम्। उद्धृत्यापनीय। बन्धक्या कुलटया। 'पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरा' इत्यमरः। त्वदर्थसाधनक्षमः तवापहारवर्मणः योऽर्थः मित्रा (राजवाहनाद्य) न्वेषणरूपः तत्र क्षमः समर्थः। वस निवासं कुरु।

**अथेति**। मरीचिवृत्तान्तकथानन्तरम्। तन्मनसश्च्युतं गलितं यत्तमोऽनुरूपं रजश्च तस्य स्पर्शः मण्डले संक्रमणं तस्माद्भिया भयेनेव। इवशब्दोऽत्रोत्प्रेक्षायाम्। रजस्स्पर्शभीतिश्चास्तगमनहेतुतयोत्प्रेक्ष्यते। रविः सूर्यः। 'तपनः सविता रविः' इत्यमरः। अगात्प्राप्नोति स्म। 'इण् गतौ' इत्यस्माल्लुङि रूपम्। 'इणो गा लुङि' इति गादेशः। रागोऽनुरागो रक्तिमा च। अस्फुरत्प्रकाशते स्म। दत्तवैराग्याणि जनितनिर्वेदानि। समकुचन् निमीलितान्यभूवन्। अमुना मरीचिना सह साकम्। 'सहयुक्तेऽप्रधाने' इति तृतीया। कथाभिः भाषणैः। तं मरीचिमुनिमुद्दिश्य अनुशय्य पश्चात्तापं कृत्वा। 'अथानुशयो दीर्घद्वेषानुतापयोः' इत्यमरः। यदात्वनोः मरीचिना सहान्वयं कृत्वा 'पश्चाद् शयनं कृत्वा' इत्यर्थकरणं, तदनुरोधाच्च 'अनुर्लक्षणे' इति कर्मप्रवचनीयतायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया तामित्यत्रेति व्याख्यानं तदाऽनोर्गतित्वाद्यभावात् ल्यप् दुर्लभः। प्रत्युन्मिषति उदयं प्राप्नुवति। उदयः पूर्वाचलः। 'उदयः पूर्वपर्वतः' इत्यमरः। तस्य प्रस्थे सानुनि 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः। यो दावो वनाग्निः 'दवदावौ वनानलौ' इत्यमरः। तत्कल्पे तत्समाने। कल्पद्रुमस्य देवदारुविशेषस्य किसलयानि नवीनपल्लवान्यवधीरयति तिरस्करोतीति तादृशे। अरुणस्य सूर्यस्यार्चिषि कान्तौ। नमस्कृत्य प्रणामं कृत्वा। नगराय नगरं गन्तुम्। 'क्रियार्थोऽपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी। उदचलं प्रस्थितवान्। **अदर्शं चेति**। दृष्टवानित्यर्थः। 'दृशिर् प्रेक्षणे' अस्माल्लुङि 'इरितो वा' इत्यङि 'ऋदृशोऽङि गुणः' इति गुणे रूपम्। मार्गाभ्याशेऽध्वनिकटे वर्तिनो विद्यमानस्य। 'सदेशाभ्याशसविधसंनिकृष्टसनीडवत्' इत्यमरः। क्षपणकविहारस्य सौगतालयस्य। विविक्ते विजने पवित्रे वा। 'विविक्तौ पूतविजनौ' इत्यमरः। रक्तानामरुणवर्णानामशोकानां षण्डे कदम्बे। 'कदम्बे षण्डमस्त्रियाम्' इत्यमरः। निषण्णमासीनम्। अस्पृष्टसमाधिं ध्यानशून्यम्। 'समाधिर्नियमे ध्याने' इति विश्वकोशः। आधिना मानसिकदुःखातिरेकेण क्षीणं कृशगात्रम्। 'पुंस्याधि-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

रूपाणां कृपणवर्णं कमपि क्षपणकम् । उरसि चास्य शिथिलितमलनिचयान्मुखान्निपततोऽश्रुबिन्दूनलक्षयम् । अप्राक्षं चान्तिकोपविष्टः—'क्व तपः, क्व च रुदितम् । न चेद्रहस्यमिच्छामि श्रोतुं शोकहेतुम्' इति । सोऽब्रूत—'सौम्य, श्रूयताम् । अहमस्यामेव चम्पायां निधिपालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम । वैरूप्यान्मम निरूपक इति प्रसिद्धिरासीत् । अन्यश्चात्र सुन्दरक इति यथार्थनामा कलागुणैः समृद्धो वसुना नातिपुष्टोऽभवत् । तस्य च मम च वपुर्वसुनी निमित्तीकृत्य वैरं वैरोपजीविभिः पौरधूर्तैरुदपाद्यत । त एव कदाचिदावयोरुत्सवसमाजे स्वयमुत्पादितमन्योन्यावमानमूलमधिक्षेपवचनव्यतिकरमुपशमय्य 'न वपुर्वसु वा पुंस्त्वमूलम्, अपि तु प्रकृष्टगणिकाप्रार्थ्ययौवनो हि यः स पुमान् । अतो युवतिललामभूता काममञ्जरी यं वा कामयते स हरतु सुभगपताकाम्' इति व्यवास्थापयन् । अभ्युपेत्यावां प्राहिणुव तस्यै दूतान् । अहमेव किलामुष्याः स्मरोन्मादहेतुरासम् । आसीनयोश्चावयोर्मामेवोपगम्य सा नीलोत्पलमयमिवापाङ्गदामाङ्गे मम मुञ्चन्ती तं जनमपत्रपयाधोमुखं व्यधत्त । सुभगंमन्येन च

---

मानसी व्यथा' इत्यमरः । अग्रगण्यं प्रथमतो गणनीयमनभिरूपाणां विरूपाणाम् । कृपणवर्णं मुखशोभारहितम् । क्षपणकं बौद्धम् । उरसि वक्षःस्थले । शिथिलितोऽश्रुधारापातेन विस्रंसितो मलनिचयः पङ्कराशिर्यैस्तादृशान् । अश्रुबिन्दून् रोदनपयःकणान् । 'रोदनं चास्रमश्रु च' इत्यमरः । अन्तिके समीपे उपविष्टो निषण्णः । **क्वेति** । क्वेति द्विरुपादानं तपोऽनुष्ठानरोदनयोः परस्परविरुद्धत्वं दर्शयति । श्रेष्ठिनः व्यापारिवर्यस्य । ज्येष्ठसूनुः ज्यायान्पुत्रः । वैरूप्यात् कुत्सितरूपवत्तया । प्रसिद्धिः प्रख्यातिः । अत्र चम्पायाम् । यथार्थनामा वस्तुतः सुन्दर एवेत्यर्थः । नातिपुष्टः साधारणः । वपुर्वसुनी आकृतिद्रव्ये । वैरोपजीविभिरुदासीनयोः द्वयोः परस्परं द्वेषमुत्पाद्यास्मात्तस्माच्च द्रव्यं गृहीत्वा ये जीवन्ति तैः । धूर्तैः वञ्चकैः । उदपाद्यत उत्पादितम् । अधिक्षेपवचनानां तिरस्कृतिवाक्यानां व्यतिकरं प्रसरम् । उपशमय्य शान्तं कृत्वा । प्रकृष्टगणिकयोत्कृष्टवाराङ्गनयाऽपि प्रार्थ्यमभिलषणीयं यौवनं तारुण्यं यस्य तादृशः । युवतिषु तरुणीषु मध्ये ललामभूता शिरोऽलंकारायमाणा । कामयतेऽभिलषति । 'कमु कान्तौ' 'कमेर्णिङ्' इति णिङ् । हरतु प्राप्नोतु । व्यवास्थापयन् व्यवस्थां कृतवन्तः । अभ्युपेत्य तत्कृतव्यवस्थामनुमन्य । प्राहिणुव प्रेरितवन्तौ । 'हि गतौ वृद्धौ च' । 'हिनुमीना' इति णत्वम् । तस्यै तां काममंजरीमानेतुमित्यर्थः । 'क्रियार्थोपपदस्य—' इति चतुर्थी । **अहमेवेति** । अर्थग्रहणे यस्मान्नानर्थकपरिग्रहः । 'सुरूपधानिनोर्वेश्या गृह्णाति धनिनं ततः' ॥ इति न्यायेन मम धनिकतया रूपवन्तमपि तं परित्यज्य मामेव स्वीकृतवतीति भावः । स्मरोन्मादे कामपारवश्ये हेतुर्निमित्तभूतः । उपगम्य पतित्वेन स्वीकृत्य । 'वा ल्यपि' इति अनुनासिकलोपाभावपक्षे । अपाङ्गदाम कटाक्षवीक्षणश्रेणीम् । मुञ्चन्ती प्रसारयन्ती । तं जनं सुन्दरकम् । अपत्रपया लज्जया । 'लज्जा साऽपत्रपान्यतः' इत्यमरः । सुभगमात्मानं मन्यते इति सुभगंमन्यः तेन । 'आत्ममाने

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मया स्वधनस्य स्वगृहस्य स्वगणस्य स्वदेहस्य स्वजीवितस्य च सैवेश्वरीकृता । कृतश्चाहमनया मलमल्लकशेषः हृतसर्वस्वतया चापवाहितः प्रपद्य लोकोपहासलक्ष्यतामक्षमश्च सोढुं धिक्कृतानि पौरवृद्धानामिह जैनायतने मुनिनैकेनोपदिष्टमोक्षवर्त्मा सुकर एष वेषो वेशनिर्गतानामित्युदीर्णवैराग्यस्तदपि कौपीनमजहाम् । अथ पुनः प्रकीर्णमलपङ्कः प्रबलकेशलुञ्चनव्यथः प्रकृष्टतमक्षुत्पिपासादिदुःखः स्थानासनशयनभोजनेष्वपि द्विप इव नवग्रहो बलवतीभिर्यन्त्रणाभिरुद्वेजितः प्रत्यवामृशम् । 'अहमस्मि द्विजातिः । अस्वधर्मो ममैष पाखण्डिपथावतारः । श्रुतिस्मृतिविहितेनैव वर्त्मना मम पूर्वजाः प्रावर्तन्त । मम तु मन्दभाग्यस्य निन्द्यवेषममन्ददुःखायतनं हरिहरहिरण्यगर्भादिदेवतापवादश्रवणनैरन्तर्यात्प्रेत्यापि निरयफलम् अफलं विप्रलम्भप्रायमीदृशमिदमधर्मवर्त्म धर्मवत्समाचरणीयमासीत्' इति प्रत्याकलितस्वदुर्नयः पिण्डीषण्डं विविक्तमेतदासाद्य

---

खश्च' इति खश्प्रत्यये शित्त्वात् श्यनि खित्त्वात् 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि रूपम् । ईश्वरीकृता स्वामिनीकृता । मलमल्लकं कौपीनमेव शेषोऽवाशिष्टं यस्य तथाविधः । 'आच्छादनं संपिधानं कौपीनं मल्लमल्लकम्' इति वैजयन्ती । अपवाहितः परित्यक्तः । उपहासलक्ष्यतां निन्दापात्रताम् । धिक्कृतानि निन्दावाक्यानि । जैनायतने क्षपणकदेवालये । उपदिष्टं मोक्षवर्त्म मुक्तिमार्गो यस्मै तथाभूतः । सुकरः सुखसाध्यः । वेशनिर्गतानां वेश्यागृहाद्बहिरागतानाम् । उदीर्णं समुत्थितं वैराग्यमासक्त्यभावो यस्य तादृशः सन् । अजहां परित्यक्तवानस्मि । 'ओहाक् त्यागे' लङ् । केशलुञ्चनं शिरोरुहसमुत्पाटनम् । द्विपो गजः । नवग्रहः नूतनतया गृहीतः । यन्त्रणाभिः निर्बन्धैः । उद्वेजितः खेदं प्रापितः । प्रत्यवामृशं विचारं कृतवान् । द्विजातिः वैश्यकुलजातः । अस्वधर्मः स्वधर्मविरुद्धः । पाखण्डिनां बौद्धानां पन्थाः पाखण्डिपथः । 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तोऽप्रत्ययः । तस्मिन्नवतारः प्रवेशः । वर्त्मना मार्गेण । पूर्वजाः पितृपितामहाद्याः । प्रावर्तन्त चरन्ति स्म । मन्दभाग्यस्य भागधेयविहीनस्य।'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । निन्द्यो वेषो यस्मिन्नेतादृशम् । 'आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्' इत्यमरः । अमन्दानां बहुलानां दुःखानामुपद्रवाणामायतनं स्थानभूतम्। हिरण्यगर्भो ब्रह्मा। 'हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः' इति ब्रह्मपर्यायेऽमरः । देवतानामपवादस्य दूषणस्य श्रवणमाकर्णनं तस्य नैरन्तर्यान्निरन्तरं जायमानत्वात् । प्रेत्यापि जन्मान्तरेऽपि । 'प्रेत्यामुत्र भवान्तरे' इत्यमरः । निरयो नरक एव न तु स्वर्गः फलं यस्यैतादृशम् 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । अफलं विशिष्टफलशून्यम् । विप्रलम्भप्रायं वञ्चनात्मकम् । 'विप्रलम्भो विसंवादो विरहो वञ्चना तथा' इति विश्वकोशः । धर्मवत् धर्मेण तुल्यतया । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः । समाचरणीयमासीदनुष्ठानार्हमभूत् । प्रत्याकलितः पुनः पुनः परामृष्टः स्वस्यात्मनो दुर्नयः दुष्टव्यवहारः येन तथाविधः सन् । पिण्डीखण्डं रक्ताशोकनिकुरम्बम् । 'अशोकः पिण्डिका पिण्डी' इति वैजयन्ती । 'कदम्बे षण्डमस्त्रियाम्' इत्यमरः । विविक्तं जनबाधारहितम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पर्याप्तमश्रु मुञ्चामि' इति । श्रुत्वा चैतदनुकम्पमानोऽब्रवम्—'भद्र, क्षमस्व। कंचित्कालमत्रैव निवस। निजेन द्युम्नेनासावेव वेश्या यथा त्वां योजयिष्यति तथा यतिष्ये। सन्त्युपायास्तादृशाः' इत्याश्वास्य तमनूत्थितोऽहम्। नगरमाविशन्नेव चोपलभ्य लोकवादाल्लुब्धसमृद्धपूर्णं पुरमित्यर्थानां नश्वरत्वं च प्रदर्श्य प्रकृतिस्थानमूनिवधास्यन्कर्णीसुतप्रहिते पथि मतिमकरवम्। अनुप्रविश्य च द्यूतसभामक्षधूर्तैः समगंसि। तेषां च पञ्चविंशतिप्रकारासु सर्वासु द्यूताश्रयासु कलासु कौशलमक्षभूमिहस्तादिषु चात्यन्तदुरुपलक्ष्याणि कूटकर्माणि तन्मूलानि

---

'विविक्तौ पूतविजनौ' इति विश्वः 'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः' इत्यमरः। आसाद्य प्राप्य। 'षद्लृ विशरणगत्यवसादनेषु' इत्यतो ल्यप्। पर्याप्तं यथेच्छम्। अश्रु रोदनोदकम्। 'रोदनं चास्रमश्रु च' इत्यमरः। मुञ्चामि विसृजामि। 'मुच्लृ मोक्षणे' इत्यतो लटि 'शे मुचादीनाम्' इति नुम्। **श्रुत्वेति**। आकर्ण्य। अनुकम्पमानः तदुपरि दयां कुर्वन्। 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः। कञ्चित्कालं कतिपयदिवसपर्यन्तम्। 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। अत्रैवास्मिन्नेव जैनायतने। निवस निवासं कुरु। 'वस निवासे'। निजेन स्वकीयेन द्युम्नेन धनेन। 'हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि' इत्यमरः। असावेव काममञ्जर्येव। वेश्या वाराङ्गना। 'वारस्त्री गणिका वेश्या' इत्यमरः। योजयिष्यति निजधनं त्वद्धस्तगतं करिष्यति। यतिष्ये प्रयत्नं करिष्यामि। 'यती प्रयत्ने'। उपायाः साधनानि। तादृशाः त्वद्गृहीतधनप्रत्यर्पणे समर्थाः। तं वसुपालितं विरूपक इति प्रसिद्धम्। आश्वास्य सान्त्वयित्वा। अनु सान्त्वनानन्तरम्। उत्थितः चम्पां गन्तुमुदातिष्ठम्। नगरं चम्पापुरीमाविशन्नेव प्रविशन्नेव मार्गमध्ये इत्यर्थः। उपलभ्य विदित्वा। लोकवादात् जनव्यवहारात्। लुब्धाः अतिकृपणाः समृद्धाः श्रीमन्तश्च ये जनास्तैः पूर्णं युक्तम्। तत्रत्यजनानां धनसंपन्नत्वेऽपि कार्पण्यं श्रुत्वेत्यर्थः। अर्थानां धनानाम्। 'अर्थरैविभवा अपि' इत्यमरः। नश्वरत्वं विनाशशालित्वमेकत्र स्थिरतयाऽविद्यमानत्वमिति यावत्। 'आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधिकारे 'इण्णशाजिसार्तिभ्यः क्वरप्' इति क्वरप् प्रत्ययः। प्रदर्श्य चम्पानगरनिवासिजनान् अवगमय्य। प्रकृतिस्थान्स्वधर्माचरणतत्परान्। विधास्यन्करिष्यन्। कर्णीसुतेन चौर्यशास्त्रनिर्मात्रा 'कर्णीसुतः करटकः स्तेयशास्त्रस्य कारकः' इति वैजयन्ती। प्रहिते प्रदर्शिते पथि चौर्यवर्त्मनीति भावः। मतिं बुद्धिम्। अकरवं कृतवान्। **अनुप्रविश्येति**। द्यूतसभामक्षक्रीडामण्डपम्। अक्षधूर्तैः पाशक्रीडायां निपुणैः। 'धूर्तौ निपुणवञ्चकौ' इति वैजयन्ती। 'सप्तमी शौण्डैः' इति समासः। समगंसि तैः सह मिलितोऽभूवम्। 'गम्लृ गतौ' इत्यतो लुङि 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदे रूपम्। तेषामक्षिकाणाम्। द्यूताश्रयासु द्यूतसंबन्धिनीषु। अक्षाः शाराः। 'अक्षो ज्ञानार्थशकटव्यवहारेषु पाशके। रुद्राक्षेन्द्राक्षयोः सर्पे विभीतकतरावपि। चक्रे कर्षे पुमान्' इति मेदिनी। भूमिः तत्पातनस्थानम्। हस्तः करः एतत्प्रभृतिषु। अत्यन्तं नितरां दुरुपलक्ष्याणि दुःखेनापि ज्ञातुमशक्यानि। कूटकर्माणि कपटाचरणानि। तन्मूलानि कपटकर्मनिमित्तकानि।



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

सावलेपान्यधिक्षेपवचनानि जीवितानिरपेक्षाणि संरम्भविचेष्टितानि सभिकप्रत्ययव्यवहारान्न्यायबलप्रतापप्रायानङ्गीकृतार्थसाधनक्षमान्बलिपु सान्त्वनानि दुर्बलेषु भर्त्सितानि पक्षरचनानैपुणमुच्चावचानि प्रलोभनानि ग्लहप्रभेदवर्णनानि द्रव्यसंविभागौदार्यमन्तरान्तराश्लीलप्रायान्कलकलानित्येतानि चान्यानि चानुभवन्न तृप्तिमध्यगच्छम्। अहसं च किंचित्प्रमाददत्तशारे क्वचित्कितवे। प्रतिकितवस्तु निर्दहन्निव क्रोधताम्रया दृशा मामभिवीक्ष्य 'शिक्षयसि रे द्यूतवर्त्म हासव्याजेन। आस्तामयमशिक्षितो वराकः। त्वयैव तावद्विचक्षणेन देविष्यामि' इति द्यूताध्यक्षानुमत्या व्यत्यषजत्। मया जितश्चासौ षोडशसहस्राणि

---

अवलेपो दर्पस्तद्युक्तानि। 'वोपसर्जनस्य' इति सहस्य सादेशः। 'दर्पोऽवलेपोऽवष्टंभः' इत्यमरः। अधिक्षेपवचनानि तिरस्कृतिवाक्यानि। जीविते प्राणधारणेऽपि निरपेक्षाण्यासक्तिरहितानि। संरम्भेण कोपेन सहितानि विचेष्टितानि कर्माणि। 'संरंभः संभ्रमे कोपे' इत्यमरः। अङ्गीकृतः पणत्वेनानुमतः योऽर्थः धनं तस्य साधने स्वायत्तीकरणे क्षमानुपयुक्तान्। न्यायबलप्रतापप्रायान् तदुपबृंहितान्। सभिको द्यूताध्यक्षः 'सभिको द्यूतकारकः' इत्यमरः। तस्य प्रत्ययव्यवहारान् विश्वासजनकानि शपथपूर्वकाणि च भाषणानि। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। सान्त्वनानि समाधानपुरःसरवाक्यानि। भर्त्सितानि भीत्युत्पादवाक्यानि। पक्षरचनायां जयवत आत्मपक्षीयत्वेन कथने नैपुणं चतुरताम्। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इत्यत्र ब्राह्मणादिगणे पाठात् ष्यञ् तत्र 'पृथ्वादिभ्य इमनिज्वा' इत्यतो 'वापदानुवृत्त्याऽणादिसमावेशोऽपि' इत्युक्त्याऽत्र निपुणशब्दाद्भावेऽण्। उच्चावचानि नानाप्रकाराणि। 'उच्चावचं नैकभेदम्' इत्यमरः। प्रलोभनानि प्रतारणानि। ग्लहस्य पणस्य। 'पणोऽक्षेषु ग्लहो मतः' इत्यमरः। तस्य प्रभेदाः 'त्वत्तोऽप्यधिकं मया स्थाप्यते' इत्यादिरूपास्तेषां वर्णनानि निरूपणानि। द्रव्यस्य संविभागे विनियोगे औदार्यं दातृत्वप्रकटनम्। अन्तरान्तरा मध्येमध्ये। अश्लीलप्रायानसभार्हवचनमयान्। 'अश्लीलं ग्राम्यभाषणम्' इति वैजयन्ती। कलकलान् कोलाहलान्। 'कोलाहलः कलकलः' इत्यमरः। अनुभवन्पश्यञ्छृण्वंश्च। न तृप्तिमध्यगच्छं सभाप्रवेशं विना केवलदर्शनादिना न मे तृप्तिर्जातेति भावः। अहसमिति। प्रमादेनासमवधानतया दत्तो निक्षिप्तः शारः पाशः येन तादृशे। 'शारः शारिश्च खेलनी' इति महीपः। क्वचित्कस्मिंश्चित्। कितवे अक्षधूर्ते। 'धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः।' इत्यमरः। प्रतिकितवः प्रतिपक्षीयधूर्तः। निर्दहन्भस्मीकुर्वन्निव। क्रोधेनाक्रोशेण ताम्रया रक्तवर्णया। दृशा दृष्ट्या। 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी' इत्यमरः। हासव्याजेन हास्यापदेशेन। अशिक्षितो न पण्डितः। आस्तां तूष्णीं तिष्ठतु। वराकः शोच्यः। 'वराकः साधुशोच्ययोः' इति वैजयन्ती। विचक्षणेन कृतहस्तेन। देविष्यामि द्यूतं करिष्यामि। द्यूताध्यक्षस्य सभिकस्यानुमत्या संमतिपुरःसरम्। व्यत्यषजत् द्यूताय संलग्नोऽभूत्। 'षञ्ज सङ्गे' इत्यतो लङि 'दंशसञ्जस्वञ्जां शपि' इति नलोपे 'प्राक् सितादड्व्यवायेऽपि'

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

दीनाराणाम् । तदर्धं सभिकाय सभ्येभ्यश्च दत्त्वार्धं स्वीकृत्योदतिष्ठम् । उदतिष्ठंश्च तत्रगतानां हर्षगर्भाः प्रशंसालापाः । प्रार्थयमानसभिकानुरोधाच्च तदगारेऽत्युदारमभ्यवहारविधिमकरवम्। यन्मूलश्च मे दुरोदरावतारः स मे विमर्दको नाम विश्वास्यतरं द्वितीयं हृदयमासीत् । तन्मुखेन च सारतः कर्मतः शीलतश्च सकलमेव नगरमवधार्य धूर्जटिकण्ठकल्माषकालतमे तमसि नीलनिवसनार्धोरुकपरिहितो बद्धतीक्ष्णकौक्षेयकः फणिमुखकाकलीसंदंशकपुरुषशीर्षकयोगचूर्णयोगवर्तिकामानसूत्रकर्कटकरज्जुदीपभाजनभ्रमरकरण्डकप्रभृत्यनेकोपकरणयुक्तो गत्वा कस्यचिल्लुब्धेश्वरस्य गृहे संधिं छित्त्वा पटभाससूक्ष्माच्छिद्रालक्षितान्तर्गृह-

---

इति क्तवम् । मयेति । जितः पराभूतः। दीनाराणां सुवर्णमुद्राविशेषाणाम् । अत्र 'दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थमुषाम् । कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ' इति जयतेः द्विकर्मकतायाम् 'अप्रधाने दुहादीनां प्रधाने नीहृकृष्वहाम् ' इत्यप्रधानकर्माभिधायिनीयं निष्ठा । हर्षगर्भाः आनन्दभरिताः । प्रशंसालापाः श्लाघावचनानि । प्रार्थयमानस्य प्रार्थनां कुर्वतः । सभिकस्य द्यूताध्यक्षस्यानुरोधाद्वचनानुसारेण । तस्यागारे गृहे । 'भवनागारमन्दिरम् ' इत्यमरः । अत्युदारं नितरामुत्कृष्टमभ्यवहारविधिं भोजनकर्म । यन्मूलो यन्निमित्तकः । दुरोदरे द्यूतक्रीडायामवतारः प्रवेशः । 'दुरोदरो द्यूतकारे पणे द्यूतेऽपि पाशके ' इति महीपकोशः अमरश्च । विश्वास्यतरमत्यन्तविश्वासास्पदम् । द्वितीयं हृदयमासीत् मित्रतां गत इति भावः । अवधार्य निश्चित्य । धूर्जटेर्महादेवस्य कण्ठे गलोद्देशे वर्तमानं यत्कल्माषं कालिमा तद्वत्कालतमेऽतिनीलवर्णे। 'धूर्जटिर्नीललोहितः ' इति 'कण्ठो गलः ' इति चामरः। 'सितेतरः स्यात्कल्माषम् ' इति शाश्वतकोशः। तमस्यन्धकारे। नीलनिवसनं नीलवर्णं वस्त्रं तन्मयं यदर्धोरुकमूर्वर्धभागपर्यन्तव्यापि 'अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम् ' इत्यमरः । तेन परिहित आच्छादितः । बद्धस्तीक्ष्णो निशितधारः कौक्षेयकः करवालो येन तादृशः। 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ' इत्यमरः । 'दृतिकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु ' इति ढकञ् । फणिनः सर्पस्येव मुखं यस्यैतदादयः आयुधविशेषाः । फणिमुखं भित्त्यादिखननसाधनम् । काकली वाद्यप्रभेदो यतो मोष्य गृहवर्तिजनानां निद्राजागरणादिज्ञानं जायते 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे ' इत्यमरः। संदंशकं भित्त्यादौ कृते खनने तत्रत्येष्टकादीनां बहिर्निष्कासनोपकरणम् । पुरुषशीर्षकं काष्ठादिविहितं पुरुषस्येव मस्तकम् । अस्योपयोगस्तु कृतच्छिद्रायां भित्तौ स्वशिरोऽप्रवेश्यास्यैव प्रवेशनम् । येन च गृहस्थानां जागरणेऽपि स्वस्यापायो न भवेत्। योगचूर्णं यत्साहाय्यात् गृहे कुत्रचिन्निक्षिप्तानामपि धनानामवगमनं भवति । योगवर्तिका अस्याश्च प्रज्वलनेनाभितो नागाश्चक्षुर्विषया जायन्ते। मानसूत्रं सुरङ्गाकरणे स्वशरीरानुरूपतया इयत्पर्यन्तं खननीयमिति परिमाणसूत्रम् । कर्कटकः कुलीराकारो यन्त्रविशेषः । रज्जुः सौधाद्युपरितलारोहणसाधनीभूता । दीपभाजनं संपुटान्तरितो दीपः । भ्रमरकरण्डकं गृहस्थहस्तवर्तिदीपस्य विनाशनाय शलभसमुद्गकः । संधिमिष्टकासंयोगम् । छित्त्वा निर्भेद्य। पट-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

प्रवृत्तिरव्यथो निजगृहमिवानुप्रविश्य नीवीं सारमहतीमादाय निरगाम्। नील-नीरदनिकरपीवरतमोनिबिडितायां राजवीथ्यां झटिति शतह्रदासंपातामिव क्षण-मालोकमलक्षयम्। अथासौ नगरदेवतेव नगरमोषरोषिता निःसंबाधवेलायां निःसृता संनिकृष्टा काचिदुन्मिषद्भूषणा युवतिराविरासीत्। 'कासि वासु, क यासि' इति सदयमुक्ता त्रासगद्गदमगादीत्—'आर्य, पुर्यस्यामर्यवर्यः कुबेरदत्त-नामा वसति। अस्म्यहं तस्य कन्या। मां जातमात्रां धनमित्रनाम्नेऽत्रत्यायैव कस्मैचिदिभ्यकुमारायान्वजानाद्भार्यां मे पिता। स पुनरस्मिन्नत्युदारतया पित्रोरन्ते वित्तैर्निजैः क्रीत्वेवार्थिवर्गाद्दारिद्र्यं दरिद्राति सत्यथोदारक इति च प्रीतलोकाधिरोपितापरश्लाघ्यनामानि वरयत्येव तस्मिन्मां तरुणीभूतामधन इत्य-

---

भासो गवाक्षद्वारम्। 'पटभासः प्रेक्षणकम्' इति वैजयन्ती। तस्य सूक्ष्मेण च्छिद्रेण विवरेण तद्द्वाराऽऽलक्षिता विदिताऽन्तर्गृहे मन्दिरमध्ये वर्तमानानां प्रवृत्तिर्निद्रारूपो व्यापारः येन तादृशः सन्। अव्यथो भयशून्यः। नीवीं मूलद्रव्यपेटिकाम्। 'मूलद्रव्यं परिपणो नीवी' इति हेमचन्द्रः। सारेणान्तःस्थितामूल्यवस्तुजातेन महतीं गुर्वीमपि। आदाय यत्नपुरः-सरं गृहीत्वा। **नीलेति**। नीला ये नीरदा मेघास्तेषां निकरवत् संघवत् पीवरेण गाढेन तम-सान्धकारेण निबिडितायां व्याप्तायाम्। झटिति शीघ्रमेव। शतह्रदा विद्युत्। 'शम्पाशत-ह्रदाह्रादिन्यैरावत्यः क्षणप्रभा। तडित्सौदामिनी विद्युत्' इत्यमरः। तस्याः सम्पातं समुद्गमनमिव। 'संपातस्तु समुद्गमः' इत्यमरः। आलोकं प्रकाशम्। 'आलोकौ दर्शन-द्योतौ' इत्यमरः। अलक्षयं विलोकितवान्। 'लक्ष आलोचने'। **अथेति**। नगरस्य चम्पा-पुर्याः मोषेण चौर्येण रोषिता रोषं गतवती। निःसंबाधवेलायां जनबाधारहितकाले। 'संकटं ना तु संबाधः' इत्यमरः। संनिकृष्टा समीपमागतवती। उन्मिषन्ति समुज्ज्वलन्ति भूष-णान्याभरणजातानि यस्यास्तादृशी। युवतिस्तरुणी। 'यूनस्तिः' इति तिप्रत्ययः। वासु हे बाले! 'अथ बाला स्याद्वासूः' इत्यमरः। सदयं कृपायुक्तं यथा तथा। त्रासेनोद्वेगेन गद्गदं स्वरभंगविशेषयुक्तं यथा तथा। अगादीत् कथयामास। 'गद व्यक्तायां वाचि' 'अतो हलादेर्लघोः' इति वैकल्पिकी वृद्धिः। अस्यां पुरि नगर्याम्। 'पूः स्त्री पुरीनगर्यौ वा' इत्यमरः। अर्यवर्यः वैश्योत्तमः। 'अर्यः स्वामिवैश्ययोः' इति निपातः। जातमात्रां प्रसूत-प्रायां तस्मिन्नेव काले इति भावः। अत्रत्याय चम्पापुरीभवाय 'तत्र भवः' इत्यर्थे 'अमेह-क्वतसित्रेभ्य एव' इति त्यप्। इभ्यकुमाराय धनिकपुत्राय। 'इभ्य आढ्यो धनी स्वामी' इत्यमरः। अन्वजानाद्भार्यां जायात्वेन दातुं संकल्पं कृतवान्। सः मत्पिता कुबेरदत्तः। अस्मिन्धनमित्रे अत्युदारतया नितरां दानशीलत्वेन। 'उदारो दातृमहतोः' इत्यमरः। पित्रोरन्ते मातापित्रोर्मरणानन्तरम्। 'पिता मात्रा' इत्येकशेषः। वित्तैर्धनैः। 'द्रव्यं वित्तं स्वापतेयम्' इत्यमरः। क्रीत्वेवेत्यत्र इवशब्देन दरिद्रीभावं प्रति स्वकीयधन-विनियोगो मूल्यतयोत्प्रेक्ष्यते। अर्थिवर्गाद्याचकलोकात्। दरिद्राति दरिद्रतां प्राप्नुवति। प्रीतैः सन्तुष्टैः लोकैरधिरोपितमारोपितं 'उदारकः' इति नामान्तरं यस्यैतादृशे सति।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

दत्त्वार्थपतिनाम्ने कस्मैचिदितरस्मै यथार्थनाम्ने सार्थवाहाय दित्सति मे पिता। तद्मङ्गलमद्य किल प्रभाते भावीति ज्ञात्वा प्रागेव प्रियतमदत्तसंकेता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना मन्मथाभिसरा तदगारमभिसरामि तन्मां मुञ्च । गृहाणैतद्भाण्डम्' इत्युन्मुच्य मह्यमार्पितवती । दयमानश्चाहमब्रवम्—'एहि साध्वि, त्वां नयेयं त्वत्प्रियावसथम्' इति त्रिचतुराणि पदान्युदचलम् । आपतच्च दीपिकालोकपरिलुप्यमानातिमिरभारं यष्टिकृपाणपाणि नागरिकबलमनल्पम् । दृष्ट्वैव प्रवेपमानां कन्यकामवदम्—'भद्रे, मा भैषीः । अस्त्ययमसिद्वितीयो मे बाहुः अपि तु मृदुरयमुपायस्त्वदपेक्षया चिन्तितः । शयेऽहं भावितविषवेगविक्रियः । त्वयाप्यमी वाच्याः 'निशि वयमिमां पुरीं प्रविष्टाः ।

---

तस्मिन्नुदारके तरुणीभूतां प्राप्तयौवनां मां वरयति प्रार्थयमाने सत्येव । अधनो दरिद्रं इदानीमस्ति इति हेतोः अदत्त्वाऽऽवयोर्विवाहमविधाय । यथार्थनाम्ने अर्थस्य धनस्य पतिः इत्यन्वर्थनाम्ने । सार्थवाहाय वैदेशिकवणिक्पुत्राय । दित्सति दातुमभिलषति । 'सनीवन्तर्ध–' इति इसभ्यासलोपश्च । **तदिति** । अमङ्गलमर्थपतये दानरूपमप्रियाचरणम् । प्रभाते प्रातःकाले । भावि भविष्यमाणं 'भविष्यति गम्यादयः' इति णिनिप्रत्ययः । प्राक्पूर्वमेव । प्रियतमेनाभीष्टनायकेनोदारकेण दत्तः कृतः संकेतो यस्याः सा तादृशी सती । वञ्चिताः प्रतारिताः स्वजनाः पित्रादयः यया सा । बाल्यात्प्रभृत्यभ्यस्तेन परिचितेन । मन्मथ एवाभिसरः सहायभूतो यस्याः । 'अनुप्लवः सहायश्चानुसरोऽभिसरः समाः' इत्यमरः । तस्योदारकस्यागारं गृहं प्रति अभिसरामि गच्छामि । 'कान्तार्थिनी तु या याति संकेतं साऽभिसारिका' इत्यभिसारिकालक्षणम् । भाण्डमलङ्कारम् । 'भाण्डं भूषाश्वभूषयोः' इत्यमरः । उन्मुच्य स्वशरीरान्निष्कास्य । अर्पितवती दत्तवती चोरत्वे सति तेनैव तुष्टः सन्गमिष्यतीति बुद्ध्या । **एहीति** । मया सहायेन सहागच्छेत्यर्थः । साध्वि हे पतिपरायणे । 'सती साध्वी पतिव्रता' इत्यमरः । तव भवत्याः यः प्रियोऽभीष्टो भर्ता तस्यावसथं मन्दिरम् । त्रीणि वा चत्वारि त्रिचतुराणि । 'संख्ययाऽव्यासन्ना–' इति बहुव्रीहौ 'त्र्युपाभ्यां चतुरोऽजिष्यते' इत्यच् समासान्तः । पदानि तावत्पर्यन्तमित्यर्थः । उदचलं प्रस्थितः । आपतत् ममाभिमुख्येनागच्छति स्म । दीपिकालोकेन दीपप्रकाशेन परिलुप्यमानः विनाशं प्राप्यमाणः तिमिरस्यान्धकारस्य भारः पुञ्जः येन तादृशम् । यष्टयः वेत्राणि कृपाणाः खड्गाश्च पाणौ यस्य तथाविधम् । 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः । कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः । नागरिकाणां रात्रौ नगररक्षकाणां बलं सैन्यम् । प्रवेपमानां भीतिग्रस्ताम् । असिर्द्वितीयः सहायो यस्मिन् तादृशः । त्वदपेक्षया त्वामुद्दिश्य । शये शयनं करोमि । 'शीङ् स्वप्ने' इत्यस्य 'शीङः सार्वधातुके गुणः' इति गुणः । भाविता सव्याजं प्रकटीकृता विषवेगस्य गरलवेगस्य विक्रिया विकारो निःसंज्ञत्वादिरूपो येन तादृशः सन् । 'क्ष्वेलस्तु गरलं विषम्' इत्यमरः । वाच्याः विज्ञापयितुमुचिताः । निशि रात्रौ । वयमहं मत्पतिश्च । 'अस्मदो द्वयोश्च' इति द्वित्वविवक्षायामपि बहुवचनम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

दष्टश्च ममैष नायको दर्वीकरेणामुष्मिन्सभागृहकोणे । यदि वः कश्चिन्मंत्रवित् कृपालुः स एनमुज्जीवयन्मम प्राणानाहरेदनाथायाः' इति । सापि बाला गत्यन्तराभावाद्भयगद्गदस्वरा बाष्पदुर्दिनाक्षी बद्धवेपथुः कथंकथमपि गत्वा मदुक्तमन्वतिष्ठत् । अशयिषि चाहं भावितविषविक्रियः । तेषु कश्चिन्नरेन्द्राभिमानी मां निर्वर्ण्य मुद्रातंत्रमंत्रध्यानादिभिश्चोपक्रम्याकृतार्थः 'गत एवायं कालदष्टः । तथा हि स्तब्धश्यावमङ्गम्, रुद्धा दृष्टिः, शान्त एवोष्मा । शुचालं वासु, श्वोऽग्निसात्करिष्यामः । कोऽतिवर्तते दैवम्' इति सहेतरैः प्रायात् । उत्थितश्चाहमुदारकाय तां नीत्वाब्रवम्—'अहमस्मि कोऽपि तस्करः । त्वद्गतेनैव चेतसा सहायभूतेन त्वामिमामभिसरन्तीमन्तरोपलभ्य कृपया त्वत्समीपमनैषम् । भूषणमिदमस्याः' इत्यंशुपटलपाटितध्वान्तजालं तदभ्यर्पितवान् । उदारकस्तु तदादाय

---

दर्वीकरेण सर्पेण । 'दर्वीकरो दीर्घपृष्ठो दन्दशूको विलेशयः' इत्यमरः । सभागृहस्य नानापथिकोद्देशेन धर्मार्थं विसृष्टमठस्य कोण एकदेशे । वो युष्माकं मध्ये । 'बहुवचनस्य वस्नसौ' इति वस् प्रकृतिप्रत्यययोरुभयोर्मिलित्वाऽऽदेशः । कृपालुर्दयावान् । 'स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः' इत्यमरः । एनं मम भर्तारम् । उज्जीवयन्विषनिःसारणपूर्वकं ससंज्ञं कुर्वन् । आहरेत् प्रत्यर्पयेत् । गत्यन्तराभावाद्रक्षकोपायान्तरस्याप्राप्त्या । बाष्पदुर्दिनाक्षी अश्रुकणपूरितनयना । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षचि 'षिद्गौरादिभ्यश्च' इति ङीष् । बद्धः संजातो वेपथुर्गात्रकम्पो यस्याः सा । 'टुवेपृ कम्पने' इत्यतो 'ट्वितोऽथुच्' इत्यथुच्प्रत्ययः । कथंकथमपि महताऽऽयासेन । मदुक्तं पूर्वोक्तप्रकारेण वञ्चनाप्रायवाक्यकथनमन्वतिष्ठत्कृतवती । नरेन्द्राभिमानी नरेन्द्रो विषचिकित्सकोऽहमित्यभिमानो गर्व एव केवलं न तु चिकित्सापरिज्ञानं वस्तुतया यस्य तादृशः । 'नरेन्द्रो वार्त्तिके राज्ञि विषवैद्ये च कथ्यते' इति विश्वः । निर्वर्ण्य परीक्ष्य । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । उपक्रम्य चिकित्सां कृत्वा । 'उपक्रमश्चिकित्सा स्यात्' इति वैजयन्ती । न कृतः संपादितोऽर्थः विषावतारणरूपो येन तादृशः । गत एव मृत एवेति भावः । कालदष्टः कृष्णसर्पदष्टः । स्तब्धं निष्कम्पम् । श्यावं धूम्रवर्णम् । ऊष्मा शरीरौष्ण्यम् । शुचा शोकेनालं न किमपि प्रयोजनमस्तीत्यर्थः । श्व आगामिदिने । अग्निसाद्दहनाधीनम् 'तदधीनवचने' इति सातिः । **कोऽतिवर्तते दैवमिति ।** न कोऽपीत्यर्थः । सहेतरैरन्यैः सहचरैः सार्धं प्रायात् गतवान् । तामुदारकमभिसरन्तीं कन्याम् । उदारकाय नीत्वा तं प्रापय्य । 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इति चतुर्थी । **अहमस्मीति** । अपहारवर्मा नाम । तस्करः चोरः कारणवशात् न तु स्वभावात् इति भावः । 'चोरैकागारिकस्तेनदस्युतस्करमोषकाः' इत्यमरः । चेतसा मनसा । अन्तरा मार्गमध्ये इत्यर्थः । उपलभ्य दृष्ट्वा । अनैषं प्रापितवानस्मि । अंशूनां भूषणत्विषां पटलेन पुञ्जेन पाटितं विदारितं ध्वान्तजालमन्धकारसमूहो यस्य तथो-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

सलज्जं च सहर्षं च ससंभ्रमं च मामभाषत—'आर्य, त्वयैवेयमस्यां निशि प्रिया मे दत्ता । वाक्पुनर्ममापहृता । तथा हि न जाने वक्तुं त्वत्कर्मैतदद्भुतमिति । न ते स्वशीलमद्भुतवत्प्रतिभाति । नैवमन्येनापि कृतपूर्वमिति प्रातिनियतैव वस्तुशक्तिः । न हि त्वय्यन्यदीया लोभादयः । त्वयाद्य साधुतोन्मीलितेति तत्प्रायस्त्वत्पूर्वावदानेभ्यो न रोचते । दृष्टमिदानीमौदार्यस्य स्वरूपमिति त्वदाशयमननुमान्य न युक्तो निश्चयः । त्वयामुना सुकृतेन क्रीतोऽयं दासजन इत्यसारमतिगरीयसा क्रीणासीति स ते प्रज्ञाधिक्षेपः । प्रियादानस्य प्रतिदानमिदं शरीरमिति तदलाभे निधनोन्मुखमिदमपि त्वयैव दत्तम् । अथवैतावदत्र प्राप्तरूपम् । अद्यप्रभृति भर्तव्योऽयं दासजनः' इति मम पादयोरपतत् । उत्थाप्य चैनमुरसोपश्लिष्याभाषिषि—'भद्र, काद्य ते प्रतिपत्तिः' इति । सोऽभ्यधत्त—'न शक्नोमि चैनामत्र पित्रोरनभ्यनुज्ञयोपयम्य जीवितुम् । अतोऽस्यामेव यामिन्यां

---

ज्ज्वलमित्यर्थः । तदपि भूषणमपि । अर्पितवान्दत्तवान् । आदाय गृहीत्वा । सलज्जं व्रीडया सह यथा तथा । अत्र च हेतुस्तत्कृतपारिणयोद्योगस्य परेण मया ज्ञातत्वम् । सहर्षं सानन्दम् । अत्र तु ज्ञातेऽप्यन्येन स्वव्यापारे स्वाभिलषितकन्याप्राप्तिः । 'मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः' इत्यमरः । ससंभ्रमं साश्चर्यम् । अत्र तु चौरस्य ममाद्भुतकर्मदर्शनात् । वागिति । त्वामुद्दिश्य किमप्यहं वक्तुं न समर्थोऽस्मि स्वस्य बुद्धिसामर्थ्याभावादिति भावः । उपरिस्थानां सर्वेषामिति शब्दानामत्रत्येन वक्तुं न जाने' इत्यनेनान्वयः । अद्भुतवदाश्चर्यवत् । एवमीदृक्प्रकारेणान्येन केनचित्पुरुषान्तरेण न कृतपूर्वं पूर्वं कृतं न भवति इत्यपि वक्तुं न जाने न समर्थोऽस्मि यतो वस्तुशक्तिः तत्तत्पदार्थस्वभावः प्रातिनियतैव तत्तद्व्यक्त्यधीनैव । नहि तन्तुभिर्घटोत्पत्तिर्दृश्यते कुत्रापि, यथा तादृशघटोत्पादकत्वरूपशक्तेः कपालादावेव नियमेन स्थितिः । तथा ईदृशचमत्कारजनककार्यकारित्वं भवादृशेषु पुरुषविशेषेष्वेव तिष्ठति नतु साधारणपुरुषे इति भावः । अन्यदीया इतरपुरुषसाधारणाः । त्वयाऽद्याधुना साधुता साधोर्भावः । उन्मीलिता प्रकटीकृता । तदद्येतिकथनं पूर्वावदानेभ्यः पूर्वं कृतश्लाघ्यकर्मभ्यः । 'अवदानं कर्मवृत्तम्' इत्यमरः । न रोचते संमतं नैव भवति । 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी । औदार्यस्य । महत्त्वस्य 'उदारो दातृमहतोः' इत्यमरः । त्वदाशयं भवदभिप्रायमननुमान्य सम्यगविदित्वा । अमुना सुकृतेन प्रियार्पणरूपसत्कर्मणाऽयं दासजनः सेवकः क्रीतः स्वायत्तीकृतः । असारं तुच्छमकिंचित्करं माम् अतिगरीयसा महत्तरेण कर्मणा क्रीणासि इति हेतोः स मत्कृतभवत्स्तवः ते प्रज्ञायाः बुद्धेरधिक्षेपो निन्दारूप एव भवेदिति भावः । तस्याः प्रियाया अलाभे अप्राप्तौ । निधनोन्मुखं मरणाय कृतनिश्चयमिदं मच्छरीरमपि । दत्तं स्थिरीकृतम् । एतावदेतन्मात्रमेव प्राप्तरूपं वक्तुमुचितमित्यर्थः । अद्यप्रभृति इदानीमारभ्य । भर्तव्यः पोषणीयः । पादयोरपतत्साष्टाङ्गं प्रणामं कृतवान् । नमस्कारस्याष्टांगता च 'उरसा शिरसा दृष्ट्या वचसा मनसा तथा । पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टांग उच्यते' इत्युक्तम् । उपाश्लिष्य गाढमालिंग्य । प्रतिपत्तिः कर्तव्यता । 'प्रतिपत्तिः कर्तव्ये प्रतिभाविज्ञातगौरवेषु' इत्यमरः । पित्रोरनभ्यनुज्ञया तदनुमतिं विना ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

देशमिमं जिहासामि ' को वाहम्, यथा त्वमाज्ञापयासि ' इति । अथ मयोक्तम्–'अस्त्येतत् । स्वदेशो देशान्तरमिति नेयं गणना विदग्धस्य पुरुषस्य । किंतु बालेयमनल्पसौकुमार्या । कष्टाः प्रत्यवायभूयिष्ठाश्च कान्तारपथाः । शैथिल्यमिव किंचित्प्रज्ञासत्त्वयोरनर्थेनेदृशेन देशत्यागेन संभाव्यते । तत्सहानया सुखमिहैव वस्तव्यम् । एहि । नयावैनां स्वमेवावासम्' इति । अविचारानुमतेन तेन सद्य एवैनां तद्गृहमुपनीय तयैवापसर्पभूतया तत्र मृद्भाण्डावशेषमचोरयाव । ततो निष्पत्य क्वचिन्मुषितकं निधाय समुच्चलन्तौ नागरिकसंपाते मार्गपार्श्वशायिनं कंचिन्मत्तवारणमुपरिपुरुषमाकृष्याध्यारोहाव । ग्रैवेयप्रोतपादयुगलेन च मयोत्थाप्यमान एव पातिताधोरणपृथुलोरःस्थलपरिणतः पुरीतल्लतापरीतदन्तकाण्डः स रक्षिकबलमक्षिणोत् । अध्वंसयाव चामुनैवार्थपतिभवनम् । अपवाह्य च क्वचन जीर्णोद्याने शाखाग्राहिकया चावातराव । स्वगृहगतौ च स्नातौ शयनमध्यशिश्रियाव ।

---

उपयम्य परिणीय । यामिन्यां रात्रौ । ' विभावरी तमस्विन्यौ रजनी यामिनी तमी ' इत्यमरः । जिहासामि परित्यक्तुमिच्छामि । **को वाऽहमिति** । एतादृशकार्यविचारे त्वदपेक्षया मम मन्दबुद्धित्वादित्यर्थः । विदग्धस्य समर्थस्य । अनल्पसौकुमार्या मृदुतरगात्रीति यावत् । प्रत्यवायभूयिष्ठाः विघ्नबहुलाः । ' विघ्नोऽन्तरायः प्रत्यूहः ' इत्यमरः । कान्तारपथा वनमार्गाः । ' कान्तारं वर्त्म दुर्गमम् ' इत्यमरः । ' ऋक्पूरब्धूःपथामानक्षे ' इति समासान्तः अप्रत्ययः । शैथिल्यं न्यूनता । वस्तव्यं स्थातव्यम् । आवासं गृहम् । अविचारानुमतेन मदुक्तं वचनं 'साधु वा असाधु वा ' इति विचारमकृत्वैव स्वीकुर्वता । तेनोदारकेण । उपनीय प्रापय्य । अपसर्पभूतया गुप्तपुरुषीभूतया । ' अपसर्पश्चरः स्पशः ' । इत्यमरः । तत्र कुबेरदत्तगृहे । मृद्भाण्डावशेषं विवाहार्थं सज्जीकृतानामन्येषां सर्वेषां पदार्थानां मोषितत्वेन केवलं मृद्भाण्डानि मृन्मयपात्राण्येवावशेषितानि यथा स्युस्तथा । निष्पत्य बहिरागत्य । मुषितकं चोरितद्रव्यजातम् । निधाय स्थापयित्वा । समुच्चलन्तौ स्वगृहं गच्छन्तौ । नागरिकाणां संपाते संमुखतयाऽऽगमने जाते सति । मत्तवारणमुन्मत्तं गजम् । उपरिपुरुषमुपरिस्थमाधोरणम् । आकृष्य बलान्नीचैर्निपात्य । ग्रैवेयं कण्ठरज्जुः । ' ग्रीवाविभूषणे रज्जौ ग्रैवं ग्रैवेयमित्यपि ' इति वैजयन्ती । तत्र प्रोतं स्थापितं पादयुगलं येन तथाविधेन । पातितो नीचैः क्षिप्तः य आधोरणो हस्तिरक्षकस्तस्य पृथुले विस्तीर्णे उरःस्थले वक्षःप्रदेशे परिणतः विहिततिर्यग्दन्तप्रहारः । ' आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ' इत्यमरः ' तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः ' इति हलायुधः । पुरीतल्लतयाऽन्त्रनाड्या ' अन्त्रं पुरीतत् ' इत्यमरः । परीतो व्याप्तो दन्तकाण्डो यस्य तथाविधः । रक्षिकबलं रात्रिसंचारि पौरसैन्यमक्षिणोत् नाशयामास । 'क्षिणु हिंसायाम्' । अध्वंसयाव ध्वस्तं कृतवन्तौ । अमुनैव वारणेन । अपवाह्य प्रापय्य । शाखाग्राहिकया शाखां गृहीत्वेत्यर्थः । ' धात्वर्थनिर्देशे ण्वुल् वक्तव्यः ' इति वार्तिकेन ण्वुल् । अवातरावावतीर्णौ । अध्यशिश्रियाव आश्रितवन्तौ । ' श्रिञ् सेवायाम् ' इत्यतो लुङुत्तमद्विवचनम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तावदेवोदगादुदधेरुदयाचलेन्द्रपद्मरागशृङ्गकल्पं कल्पद्रुमहेमपल्लवापीडपाटलं पतङ्गमण्डलम् । उत्थाय च धौतवक्त्रौ प्रगेतनानि मङ्गलान्यनुष्ठायास्मत्कर्मतुमुलं पुरमनुविचरन्तावशृणुव वरवधूगृहेषु कोलाहलम् । अथार्थैरर्थपतिः कुबेरदत्तमाश्वास्य कुलपालिकाविवाहं मासावधिकमकल्पयत् । उपह्वरे पुनरित्यशिक्षयं धनमित्रम्—'उपतिष्ठ सखे, एकान्त एव चर्मरत्नभस्त्रिकामिमां पुरस्कृत्याङ्गराजम् । आचक्ष्व च जानात्येव देवो नैककोटिसारस्य वसुमित्रस्य मां धनमित्रं नामैकपुत्रम् । सोऽहं मूलहरत्वमेत्यार्थिवर्गादस्म्यवज्ञातः । मदर्थमेव संवर्धितायां कुलपालिकायां मद्दारिद्र्यदोषात्पुनः कुबेरदत्तेन दुहितर्यर्थपतये दित्सितायामुद्वेगादुज्झितुमसूनुपनगरभवं जरद्वनमवगाह्य कण्ठन्यस्तशस्त्रिकः केनापि जटाधरेण निवार्यैवमुक्तः—'किं ते साहसस्य मूलम्' इति । मयोक्तम्—'अवज्ञा-

---

तावदेवेति । तस्मिन्नेव समये । शृङ्गेण समानं शृङ्गकल्पम् 'ईषदसमाप्तौ कल्पप्—' इति कल्पप्प्रत्ययः । कल्पद्रुमस्य सुरवृक्षविशेषस्य संबंधिनी तदाश्रितेत्यर्थः । या हेमलता सुवर्णवल्ली तस्याः पल्लवापीडः किसलयसमूहः 'आपीडः शेखरे व्राते' इति वैजयन्ती । तद्वत् पाटलम् ईषद्रक्तवर्णम् । 'श्वेतरक्तस्तु पाटलः' इत्यमरः । पतङ्गमण्डलं सूर्यबिम्बम् । 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः । धौतवक्त्रौ प्रक्षालितमुखौ । प्रगे उषःकाले भवानि प्रगेतनानि तत्र कर्तुमुचितानीत्यर्थः । 'प्रगे प्रातः प्रभाते' इत्यव्ययवर्गेऽमरः । 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च' इति सूत्रेण ट्युल् तुडागमश्च । अस्मत्कर्मणा ममोदारकस्य कर्मणा चौर्यरूपेण तुमुलं संकुलम् । अनुविचरन्तौ अनुचरन्तौ । अशृणुव श्रुतवन्तौ । 'श्रुवः शृ च' इति उप्रत्ययः श्रृवादेशश्च । वरो जामाताऽर्थपतिनामा, वधूः कन्या कुलपालिकानाम्नी कुबेरदत्तस्य तयोर्गृहेषु । कोलाहलमार्तनादम् । अर्थैर्धनैः । 'अर्थरैविभवा अपि' इत्यमरः । आश्वास्य समाहितं कृत्वा । कुलपालिकायास्तन्नाम्न्याः कन्याया विवाहं परिणयं मासोऽवधिर्यस्य तथाविधमकल्पयत् निश्चितवान् । 'विवाहोपयमौ समौ । तथा परिणयोद्वाहोपयामाः पाणिपीडनम्' इत्यमरः । उपह्वरे एकान्ते । 'रहोऽन्तिकमुपह्वरे' इत्यमरः । उपतिष्ठेति । चर्मरत्नस्य श्रेष्ठचर्मणो भस्त्रिकां प्रसेविकाम् । 'रत्नं स्वजातिश्रेष्ठेऽपि' इति, 'प्रसेविकोच्यते भस्त्रा' इति च कोशः । अल्पा भस्त्रा भस्त्रिका । 'अल्पे' इति कनि 'भस्त्रैषाजा—' इति इत्वे च रूपम् । अङ्गराजं चम्पेश्वरम् । नैककोटिसारस्य अनेककोटिमूलद्रव्ययुक्तस्य । मूलमपि हरति विनाशयति मूलहरस्तादृशत्वमाकिंचनत्वमिति यावत् । एत्य प्राप्य । अर्थिवर्गात् याचकलोकात् । अवज्ञातोऽस्मि इदानीं लोकैरवमानितोऽस्मि । मदर्थमेव मामेव पतिमुद्दिश्य संवर्धितायां पोषितायाम् । दित्सितायां दातुमिष्टायाम् । उद्वेगाच्छुचा । 'उद्वेगौ शोकसंभ्रमौ' इति वैजयन्ती । उज्झितुमसून् प्राणान्परित्यक्तुम् । 'उज्झ उत्सर्गे' 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । उपनगरभवं नगरसमीपवर्ति । अवगाह्य प्रविश्य । कण्ठे गले तच्छेदार्थं न्यस्ता स्थापिता शस्त्रिका छुरिका येन तादृशः । जटाधरेण तपस्विना । एवं वक्ष्यमाण-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

सोदर्यं दारिद्र्यम्' इति । स पुनरेवं कृपालुरन्वग्रहीत्–'तात, मूढोऽसि । नान्यत्पापिष्ठतममात्मत्यागात् । आत्मानमात्मनानवसाद्यैवोद्धरन्ति सन्तः । सन्त्युपाया धनार्जनस्य बहवः नैकोऽपि च्छिन्नकण्ठप्रतिसंधानपूर्वस्य प्राणलाभस्य । किमनेन । सोऽस्म्यहं मंत्रसिद्धः । साधितेयं लक्षग्राहिणी चर्मरत्नभस्त्रिका । चिरमहमस्याः प्रसादात्कामरूपेषु कामप्रदः प्रजानामवात्सम् । मत्सारिण्यां जरसि भूमिस्वर्गमत्रोद्देशे प्रवेक्ष्यन्नागतः । तामिमां प्रतिगृहाण । मदन्यत्र चेयं वणिग्भ्यो वारमुख्याभ्यो वा दुग्धे इति हि तद्गता प्रतीतिः । किंतु यत्सकाशादन्यायापहृतं तत्तस्मै प्रत्यर्पणीयम् । न्यायार्जितं तु देवब्राह्मणेभ्यस्त्याज्यम् । अथेयं देवतेव शुचौ देशे निवेश्यार्च्यमाना प्रातः प्रातः सुवर्णपूर्णैव दृश्यते । स एष कल्पः' इति बद्धाञ्जलये मह्यमेनां दत्त्वा किमपि ग्रावच्छिद्रं प्राविशत् । इयं च रत्नभूता चर्मभस्त्रिका देवायानिवेद्य नोपजीव्येत्यानीता । परंतु देवः प्रमाणम्' इति । राजा च नियतमेवं वक्ष्यति–'भद्र, प्रीतोऽस्मि । गच्छ । यथेष्टमिमामुपभुङ्क्ष्व' इति । भूयश्च ब्रूहि–'यथा न कश्चिदेनां मुष्णाति तथानुगृह्यताम्'

---

प्रकारेण। साहसस्य हठप्रवृत्तेः। अवज्ञायाः अवमानानायाः सोदर्यं बन्धुभूतं तत्सहितमिति भावः। 'समानोदर्यसोदर्यसगर्भ्यसहजाः समाः' इत्यमरः। 'सोदराद्यत्' इति यत्प्रत्ययः। अन्वग्रहीदनुग्रहं कृतवान्। पापिष्ठतममतिनिन्द्यमिति भावः। अनवसाद्य विनाशं न गमयित्वा। धनार्जनस्य द्रव्यसंपादनाय। छिन्नस्य कृत्तस्य कण्ठस्य प्रतिसंधानं पुनर्मेलनं तत्पूर्वकस्य प्राणलाभस्य जीवोपलब्धेरुपायो नैकोऽपि कश्चिदपि नास्तीति भावः। किमनेन क्रूरकर्मणा। मन्त्रैः सिद्धः सिद्धिं गतः। साधिता सिद्धियोगाल्लब्धा। लक्षग्राहिणी प्रतिदिनं लक्षं सुवर्णमुद्रा ग्राहयति इति तादृशी। कामरूपेषु तन्नामकदेशेषु। कामप्रदः प्रजानां जनमनोरथसंपादयिता। मत्सारिण्यामनभीष्टायां जरसि वृद्धावस्थायाम् 'पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा' इत्यमरः। 'जराया जरसन्यतरस्याम्' इति जरसादेशः। भूमिस्वर्गे भुवि स्वर्ग इव तं तत्तुल्यमित्यर्थः। प्रतिगृहाण स्वीकुरुष्व। इयं च चर्मभस्त्रिका। मदन्यत्र मां विना वणिग्भ्यो वैश्येभ्यो वारमुख्याभ्यो गणिकाभ्यश्च दुग्धे स्वाभीष्टं ददाति। इत्येवंप्रकारेण तद्गता भस्त्रिकासंबंधिनी प्रतीतिः प्रसिद्धिः। अन्यायेनापहृतं गृहीतम्। प्रत्यर्पणीयं पुनः प्रतिदेयम्। त्याज्यं वितरणीयम्। शुचौ पवित्रे। अर्च्यमाना पूज्यमाना। प्रातःप्रातः प्रतिदिनं प्रभाते। एष कल्पः प्रकारो दोहनस्येति शेषः। ग्रावच्छिद्रं पाषाणविवरं प्राविशत् प्रविष्टवान्। इयं चेति। रत्नभूता श्रेष्ठा। देवायानिवेद्य चम्पानगर्या राजानं भवन्तमविज्ञाप्य नोपजीव्योपभोक्तव्या न भवतीति हेतोः। अविज्ञाप्यैवोपभोगे मदुपरि चौर्यशंका जनस्य भविष्यतीति भयेनेति भावः। आनीता भवत्सकाशं प्रापिताऽस्ति। देवः प्रमाणमनन्तरकरणीयाज्ञापको भवानेवेति भावः। नियतमवश्यमेव। एवं वक्ष्यमाणप्रकारेण। मुष्णाति चोरयति। 'मुष स्तेये' तथाऽनुगृह्यतां मद्गृहे राजपुरुषादिस्थापनेनानु-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

इति । तदप्यवश्यमसावभ्युपैष्यति । ततः स्वगृहमेत्य यथोक्तमर्थत्यागं कृत्वा दिने दिने वरिवस्यमानां स्तेयलब्धैरर्थैर्नक्तमापूर्य प्राह्णे लोकाय दर्शयिष्यासि । ततः कुबेरदत्तस्तृणायमत्वार्थपतिमर्थलुब्धः कन्यकया स्वयमेव त्वामुपस्थास्यति । अथ कुपितोऽर्थपतिर्व्यवहर्तुमर्थगर्वादभियोक्ष्यते । तं च भूयश्चित्रैरुपायैः कौपीनावशेषं करिष्यावः । स्वकं चौर्यमनेनैवाभ्युपायेन सुप्रच्छन्नं भविष्यति' इति । हृष्टश्च धनमित्रो यथोक्तमन्वातिष्ठत् । तदहरेव मन्नियोगाद्विमर्दकोऽर्थपतिसेवाभियुक्तस्तस्योदारके वैरमभ्यवर्धयत् । अर्थलुब्धश्च कुबेरदत्तो निवृत्त्यार्थपतेर्धनमित्रायैव तनयां सानुनयं प्रादित्सत । प्रत्यबध्नाच्चार्थपतिः ।

एष्वेव दिवसेषु काममञ्जर्याः स्वसा यवीयसी रागमञ्जरी नाम पञ्चवीरगोष्ठे संगीतकमनुष्ठास्यतीति सान्द्रादरः समागमन्नागरजनः । स चाहं सह सख्या धनमित्रेण तत्र संन्याधिषि । प्रवृत्तनृत्यायां च तस्यां द्वितीयं रङ्गपीठं ममाभू-

---

ग्रहः कार्य इत्यर्थः । असौ राजा चम्पापुर्याः । अभ्युपैष्यति अङ्गीकरिष्यति । 'इण् गतौ' लृट् । यथोक्तमर्थत्यागं 'अन्यायार्जितं यद्यतस्तत्तस्मै प्रत्यर्पणीयं, न्यायार्जितं तु देवब्राह्मणेभ्यस्त्याज्यम्' इति पूर्वोक्तविधिना द्रव्यविनियोगम् । वरिवस्यमानां पूज्यमानाम् । 'वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासना' इत्यमरः । 'नमो वरिवश्चित्रङः क्यच्' इति क्यजन्ताच्छानच् । स्तेयलब्धैश्चौर्यप्राप्तैः । नक्तं रात्रौ । प्राह्णे प्रभातकाले । कुबेरदत्तः कुलपालिकायाः पिता । तृणाय मत्वाऽर्थपतिं तं तृणवदनादृत्येत्यर्थः । 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति चतुर्थी । अर्थलुब्धः द्रव्यासक्तः । त्वामुदारकम् । उपस्थास्यति भवत्समीपमागमिष्यति स्वकन्यास्वीकारार्थं सानुनयं ब्रुवाणेति भावः । **अथेति** । कुपितो रुष्टः स्वस्मै दातुं निश्चिताया अन्यस्मै दानोद्योगश्रवणादित्यर्थः । व्यवहर्तुं विवादं कर्तुम् । अभियोक्ष्यते उद्योगं करिष्यतीत्यर्थः । तं चार्थपतिम् । चित्रैरनेकप्रकारैरुपायैः साधनैः । कौपीनावशेषं मलमल्लकशेषम् । अनेनैवाभ्युपायेन चर्मभस्त्रिकाप्रकटीकरणरूपेणोपायेन । सुप्रच्छन्नं गुप्ततरम् । यथोक्तं चर्मभस्त्रिकां दर्शयित्वा राजसविधे मदुक्तकथनम् । अन्वतिष्ठदाचरितवान् । **तदहरेवेति** । तस्मिन्नेव दिने । विमर्दको द्यूतस्थले यो मित्रतां गतः । अर्थपतेः सेवायां शुश्रूषायामभियुक्तः नियुक्तः सन् । तस्यार्थपतेः । वैरं विरोधम् । निवृत्त्यार्थपतेः अर्थपत्यपेक्षयोदारकस्यैव चर्मभस्त्रिकया धनाढ्यत्वं विचार्यार्थपतये कन्यां न दित्सुस्ततः परावृत्य । सानुनयं सान्त्वनवाक्यपुरःसरम् । प्रादित्सत दातुमिच्छां कृतवान् । 'डुदाञ् दाने' इत्यतः सनि 'सनि मीमाघुरभलभशकपतपदामच इस्' इतीसभ्यासलोपश्च । प्रत्यबध्नाच्च विघ्नमाचरितवानित्यर्थः ।

**एष्वेवेति** । एतेष्वेव वासरेषु । स्वसा यवीयसी कनिष्ठभगिनी । 'भगिनी स्वसा' इत्यमरः । पञ्चवीरगोष्ठे जनपदसम्बन्धिन्यां सभायाम् 'तत्पञ्चवीरगोष्ठं तु यत्तु जानपदं सदः' इति कोशसारः । संगीतकं गीतादित्रिकम् । 'गीतं वाद्यं च नृत्यं च त्रिभिः संगीतकं विदुः' इति संगीतकसर्वस्वे । अनुष्ठास्यति करिष्यति इति श्रुत्वेति शेषः । सान्द्रो गाढस्तच्छ्रवणे आदरो यस्यैतादृशः । तत्र संगीतकसभामण्डपे संन्यधिषि सन्निहितोऽभूवम् । प्रवृत्तमारब्धं नृत्यं यथा

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

न्मनः । तद्दृष्टिविभ्रमोत्पलवनसच्चापाश्रयश्च पञ्चशरो भावरसानां सामग्र्यात्समुदितबल इव मामतिमात्रमव्यथयत् । अथासौ नगरदेवतेव नगरमोषरोषिता लीलाकटाक्षमालाशृङ्खलाभिर्नीलोत्पलपलाशश्यामलाभिर्मामबध्नात् । नृत्योत्थिता च सा सिद्धिलाभशोभिनी—'किं विलासात्, किमभिलाषात्, किमकस्मादेव वा, न जाने,—असकृन्मां सखीभिरप्यनुपलक्षितेनापाङ्गप्रेक्षितेन सविभ्रमारेचितभ्रूलतमभिवीक्ष्य, सापदेशं च किंचिदाविष्कृतदशनचन्द्रिकं स्मित्वा, लोकलोचनमानसानुयाता प्रातिष्ठत। सोऽहं स्वगृहमेत्य दुर्निवारयोत्कण्ठया दूरीकृताहारस्पृहः शिरःशूलस्पर्शनमपदिशन्विविक्ते तल्पे मुक्तैरवयवैरशयिषि। अतिनिष्णातश्च

---

तादृश्याम् । रंगपीठं नृत्यस्थानम् । तस्या रागमंजर्या ये दृष्टिविभ्रमा अपाङ्गविलासास्तद्रूपं यदुत्पलवनं नीलोत्पलसमुदायस्तदात्मकं सन्तं कामिजनमनोवेधने समर्थं चापं शरासनमाश्रयतीति तादृशः । नतकटाक्षरूपस्त्रसामग्रीसहितः सन्नित्यर्थः । पञ्चशरो मन्मथः । 'कामः पञ्चशरः स्मृतः' इत्यमरः । भावानां विभावानुवसात्त्विकव्यभिचारिणां रसस्य शृङ्गारस्य " बाह्यार्थालम्बनो यस्तु विकारो मनसो भवेत् । स भावः कथ्यते सद्भिस्तस्योत्कर्षो रसः स्मृतः ' इत्युक्तरूपस्य च सामग्र्यात्संपूर्णतया । समुदितबलः नितरां पुष्ट इव । मामपहारवर्माणमतिमात्रं निर्भरमव्यथयत् पीडितवान् । **अथेति** । नृत्यावसने इत्यर्थः । असौ रागमंजरी । नगरे चम्पापुर्यां मोषेण चौर्यकर्मणा रोषिता कोपं प्राप्ता । लीलायुक्ता विलासयुक्ता याः कटाक्षमाला अपाङ्गश्रेण्यः ताभिरेव शृंखलाभिः । नीलोत्पलपलाशानि नीलोत्पलदलानि ' पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ' इत्यमरः । तद्वत् श्यामलाभिः कृष्णवर्णाभिः । ' कालश्यामलमेचकाः ' इत्यमरः । अबध्नाद्बध्नाति स्म । गृहीते चौरे तस्योचितत्वाद्बन्धनस्येति भावः । नृत्योत्थिता लास्याद्विरता । ' ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ' इत्यमरः । सा रागमंजरी । सिद्धिलाभेन ख्यातिलाभेन शोभिनी । सखीभिरप्यनुपलक्षितेनाज्ञातेनापाङ्गप्रेक्षितेन कटाक्षविलोकनेन । ' अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने ' इत्यमरः । सविभ्रमं सविलासमारेचिते वक्रीकृते भ्रूलते यस्मिन् कर्मणि तद्यथा तथेति क्रियाविशेषणम् । सापदेशं व्याजसहितम् । ' व्याजोऽपदेशो लक्ष्यं च ' इत्यमरः । किञ्चिदीषदाविष्कृता प्रकटीकृता दशनचन्द्रिका दन्तकान्तिर्यस्मिन्कर्मणि तद्यथा तथा स्मित्वा हासं कृत्वा । ' रदना दशना दन्ता रदाः ' इत्यमरः । लोकानां जनानां लोचनैश्चक्षुर्भिर्मानसैर्हृदयैश्चानुयाताऽनुसृता । प्रातिष्ठत स्वगृहाय प्रतस्थे । दुर्निवारया दुःखेनापि निवारयितुमशक्ययोत्कण्ठया स्वाभीष्टरागमञ्जरीप्राप्तौ कालविलम्बासहिष्णुतया । ' स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे ' इत्यमरः । दूरीकृताहारस्पृहः परित्यक्तभोजनाभिलाषः सन् । ' भोजनं लेह आहारः ' ' इच्छाकांक्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः ' इत्यमरः । शिरःशूलस्पर्शनं मस्तकवेदनाप्राप्तिमपदिशन्कपटेन कथयन्नित्यर्थः । विविक्त एकान्ते तल्पे शय्यायाम् । ' तल्पं शय्याट्टदारेषु ' इत्यमरः । मुक्तैरङ्गैः शिथिलैरवयवैः । अशयिषि शयनं कृतवान् । ' शीङ् स्वप्ने ' अतिनिष्णातश्च मदनतन्त्रे कामशास्त्रे नितरां निपुणः । ' प्रवीणे

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मदनतंत्रे मामभ्युपेत्य धनमित्रो रहस्यकथयत्—'सखे, सैव धन्या गणिकादारिका, यामेवं भवन्मनोऽभिनिविशते । तस्याश्च मया सुलक्षिता भाववृत्तिः । तामप्यचिरादयुग्मशरः शरशयने शाययिष्यति । स्थानाभिनिवेशिनोश्च वामयत्नसाध्यः समागमः । किंतु सा किल वारकन्यका गणिकास्वधर्मप्रतीपगामिना भद्रोदारेणाशयेन समगिरत—'गुणशुल्काहम्, न धनशुल्का । न च पाणिग्रहणादृतेऽन्यभोग्यं यौवनम्' इति । तच्च मुहुः प्रतिषिध्याकृतार्था तद्भगिनी काममञ्जरी माता च माधवसेना राजानमश्रुकण्ठ्यौ व्यजिज्ञपताम्—'देव, युष्मद्दासी रागमञ्जरी रूपानुरूपशीलशिल्पकौशला पूरयिष्यति मनोरथानित्यासीदस्माकमतिमहत्याशा साद्य मूलच्छिन्ना । यदियमतिक्रम्य स्वकुलधर्ममर्थनिरपेक्षा गुणेभ्य एव स्वं यौवनं विचिक्रीषते कुलस्त्रीवृत्तमेवाच्युतमनुतिष्ठासति । सा चेदियं देवपादाज्ञयापि तावत्प्रकृतिमापद्येत तदा पेशलं भवेत्' इति । राज्ञा च तदनुरोधात्तथानुशिष्टा सत्यप्यनाश्रवैव सा यदासीत्, तदास्याः स्वसा माता च रुदितानिर्बन्धेन राज्ञे समगिरताम्—'यदि कश्चिद्भुजङ्गोऽस्मादिच्छया विनैनां

---

निपुणाभिज्ञविज्ञानिष्णातशिक्षिताः' इत्यमरः । 'तन्त्रं कुटुम्बकृत्ये स्यात्करणे च परिच्छदे । शास्त्रे प्रधाने सिद्धान्ते' इति विश्वः । 'निनदीभ्यां स्नातेः कौशले' इति मूर्धन्यः । सैव रागमंजर्येव धन्या श्लाघ्या । एवमनेन प्रकारेण । भवन्मनो भवदीयं चित्तम् । अभिनिविशते अभिलषति । 'नेर्विशः' इत्यात्मनेपदम् । 'अभिनिविशश्च' इत्यनेन कर्मता 'याम्' इत्यत्र । सुलक्षिता दृष्टा भावप्रवृत्तिर्मनोवृत्तिः । अयुग्मशरः कामः । शरशयने बाणतल्पे शाययिष्यति पातयिष्यति । स्थानाभिनिवेशिनोर्युक्तनायिकानायकाभिलाषवतोः । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । अयत्नसाध्यः सुकरः । **किन्त्विति** । वारकन्यका गणिकादारिका । गणिकानां वेश्यानां यः स्वधर्मः शुल्कग्रहणरूपस्तस्य प्रतीपगामिना विरुद्धेन आशयेनाभिप्रायेण समगिरत प्रतिज्ञां कृतवती । 'गॄ निगरणे' इत्यस्मात् 'समः प्रतिज्ञाने' इत्यात्मनेपदम् । गुणाः शौर्यादय एव शुल्कं देयद्रव्यं यस्यास्तादृश्यहं न धनशुल्का शुल्कत्वेन धनं न ग्रहीष्यामि, यस्तु गुणी स एव मे स्वामी भवितुमर्हति । पाणिग्रहादृते परिणयं विना 'अन्यारादितरर्तेदिक्' इति पञ्चमी । अन्येन परपुरुषेण मे यावनं तारुण्यं भोग्यं न च नैवोपभोक्तुमुचितम् । तच्च रागमञ्जर्याः प्रतिज्ञावाक्यम् । अश्रुकण्ठ्यौ रोदनजलेन गद्गदकण्ठ्यौ । व्यजिज्ञपतां विज्ञापितवत्यौ । सा आशा । मूलच्छिन्ना समूलं विनष्टा जाता । यद्यस्मात्कारणात् । स्वकुलधर्मं वेश्याधर्मं शुल्कादानरूपमतिक्रम्योल्लंघ्य । अर्थनिरपेक्षा द्रव्यानिस्पृहा । विचिक्रीषते विक्रेतुमिच्छति । कुलस्त्रीणां पतिव्रतानां वृत्तं धर्ममेवाच्युतमविच्छिन्नतयाऽनुतिष्ठासति आचारितुमिच्छति । प्रकृतिमापद्येत स्वकुलधर्मं प्राप्नुयात् । पेशलं क्षेमम् । अनुशिष्टा शिक्षिता । अनाश्रवैव तद्वचनानुरोधेन न वर्तमाना । 'वचने स्थित आश्रवः' इत्यमरः । राज्ञे समगिरतां प्रतिज्ञापूर्वकं राजानमुक्तवत्यौ । 'समः प्रतिज्ञाने' इत्यात्मनेपदम् । भुजङ्गो विटः । 'भुजङ्गो विटसर्पयोः' इति विश्वः । अस्मदिच्छया विना अस्माकं संमतिमन्तरेण ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

बालां विप्रलभ्य नाशयिष्यति स तस्करवद्वध्यः' इति। तदेवं स्थिते धनादृते न तत्स्वजनोऽनुमन्यते। न तु धनदायासावभ्युपगच्छतीति विचिन्त्योऽत्राभ्युपायः' इति। अथ मयोक्तम्—'किमत्र चिन्त्यम्। गुणैस्तामावर्ज्य गूढं धनैस्तत्स्वजनं तोषयावः' इति।

ततश्च कांचित्काममञ्जर्याः प्रधानदूतीं धर्मरक्षितां नाम शाक्यभिक्षुकीं चीवरपिण्डदानादिनोपसंगृह्य तन्मुखेन तया बन्धक्या पणबन्धमकरवम्—'अजिनरत्नमुदारकान्मुषित्वा मया तुभ्यं देयम्, यदि प्रतिदानं रागमञ्जरी' इति। सोऽहं संप्रतिपन्नायां च तस्यां तथा तदर्थं संपाद्य मद्गुणोन्मादिताया रागमञ्जर्याः करकिसलयमग्रहीषम्। यस्यां च निशि चर्मरत्नस्तेयवादस्तस्याः प्रारम्भे कार्यान्तरापदेशेनाहूतेषु शृण्वत्स्वेव नागरमुख्येषु मत्प्रणिधिर्विमर्दकोऽर्थपतिगृह्यो नाम भूत्वा धनमित्रमुल्लङ्घ्य बह्वतर्जयत्। उक्तं च धनमित्रेण—'भद्र, कस्तवार्थो यत्प-

---

विप्रलभ्य वञ्चयित्वा। तस्करवत् वध्यो चोरेण तुल्यं हन्तव्यः। 'तेन तुल्यं क्रियाचेद्वतिः' इति वतिः। धनादृते धनदानं विना। तस्या रागमञ्जर्याः स्वजन आप्तवर्गो भगिन्यादिः। नानुमन्यते सम्मतिं नैव करोति। धनदाय शुल्कद्रव्यं प्रयच्छतेऽसौ रागमञ्जरी न अभ्युपगच्छति नैवाङ्गीकरोति। इत्युभयतः स्पाशारज्जुः इतिवत् धनदानेऽदानेऽपि तत्संमेलनस्य दुष्करत्वाद्धेतोरत्र तस्याः संगमेऽभ्युपायो विचिन्त्यः विशेषेण चिन्तनीयः इति भावः। आवर्ज्य वशीकृत्य। तोषयावः संतोषयावः।

**ततश्चेति**। अथ कदाचित्। प्रधानदूतीं प्रियदूतिकाम्। शाक्यभिक्षुकीं बौद्धमतावलम्बिनीं तापसीम्। चीवरमाच्छादनं, पिण्डः आहारः एतदादिना तत्प्रदानेनोपसंगृह्य वशवर्तिनीं कृत्वा। तन्मुखेन धर्मरक्षिताद्वारा। तया बन्धक्या कुलटया काममञ्जर्या सह। 'पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरी' इत्यमरः। पणबन्धं रागमञ्जर्यर्थे शुल्कनियमम्। मुषित्वा चोरयित्वा। यदि प्रतिदानं रागमञ्जरी रागमञ्जरीं चेन्मह्यं भवती दास्यतीति भावः। संप्रतिपन्नायां च तस्यां काममञ्जर्यामङ्गीकृतवत्याम्। तथा तमर्थं संपाद्य चर्मभस्त्रिका तस्यै समर्प्येति यावत्। मम गुणैरुन्मादितायाः कामावस्थामुन्मादाख्यां गतायाः। करकिसलयमग्रहीषम् उद्वाहमकरवम्। निशि रात्रौ। 'निशा निशीथिनी रात्रिः' इत्यमरः। 'पद्दन्नोमासहृन्निशसन्' इति निशादेशः। चर्मरत्नस्तेयवादः 'श्रेष्ठभुता चर्मभस्त्रिकोदारकगृहात्केनापि मुषिता' इति जनश्रुतिः। तस्याः प्रारम्भे तद्रात्रिपूर्वभागे। कार्यान्तरापदेशेन कार्यान्तरमिषेण 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः। आहूतेष्वेकत्र संनिधापितेषु। शृण्वत्स्वाकर्णयत्सु। नागरमुख्येषु नगरप्रधानजनेषु। मम प्रणिधिर्गूढपुरुषः। 'यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः। चारश्च गूढपुरुषः' इत्यमरः। 'अर्थपतेर्गृह्यो नाम भूत्वा तत्पक्षपातीव स्थितः सन्। अतर्जयद्भीषयामास। **उक्तं चेति**। कस्तवार्थः किंवा ते प्रयोजनमित्यर्थः। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु'

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

-रस्य हेतोर्मामाक्रोशसि । न स्मरामि स्वल्पमपि तवापकारं मत्कृतम्’ इति । स भूयोऽपि तर्जयन्निवाब्रवीत्–‘स एष धनगर्वो नाम, यत्परस्य भार्यां शुल्कक्रीतां पुनस्तत्पितरौ द्रव्येण विलोभ्य स्वीचिकीर्षसि । ब्रवीषि च–‘कस्तवापकारो मत्कृतः’ इति, ननु प्रतीतमेवैतत् ‘सार्थवाहस्यार्थपतेर्विमर्दको बहिश्चराः प्राणाः’ इति । सोऽहं तत्कृते प्राणानपि परित्यजामि । ब्रह्महत्यामपि न परिहरामि । ‘ममैकरात्रजागरप्रतीकारस्तवैष चर्मरत्नाहंकारदाहज्वरः’ इति । तथा ब्रुवाणश्च पौरमुख्यैः सामर्षं निषिध्यापवाहितोऽभूत् । इयं च वार्ता कृत्रिमार्तिना धनमित्रेण चर्मरत्ननाशमादावेवोपाक्षिप्य पार्थिवाय निवेदिता । स चार्थपतिमाहूयोपह्वरे पृष्टवान् ‘अङ्ग, किमस्ति कश्चिद्विमर्दको नामात्रभवतः’ इति । तेन च मूढात्मना ‘अस्ति देव, परं मित्रम्’ । कश्च तेनार्थः’ इति कथिते राज्ञोक्तम्–‘अपि शक्नोषि तमाह्वातुम्’ इति । ‘बाढमस्मि शक्तः’ इति निर्गत्य स्वगृहे वेशवाटे द्यूतसभायामापणे च निपुणमन्विष्यन्नोपलब्धवान् । कथं वोपलभ्येत

---

इत्यमरः । परस्य हेतोरर्थपतेर्हेतोः, आक्रोशसि निन्दसि । स विमर्दकः । धनगर्वोनाम प्रत्यहं चर्मभस्त्रिकया लभ्यते यल्लक्षमुद्रात्मकं धनं तज्जनितो मद एव । परस्य भार्यामर्थपतेर्भार्यात्वेन निश्चितां शुल्केन देयद्रव्येण क्रीतां स्वीकृताम् । तस्याः कुलपालिकायाः पितरौ मातापितरौ । विलोभ्य वञ्चयित्वा । स्वीचिकीर्षसि ग्रहीतुमिच्छसि । प्रतीतं प्रसिद्धमेव । बहिश्चराः प्राणाः प्राणतुल्यस्नेहविषय इति भावः । सोऽहं विमर्दकः । तत्कृतेऽर्थपतिमुद्दिश्य । ब्रह्महत्यां ब्राह्मणवधमपि । एका चासौ रात्रिश्चैकरात्रः । ‘अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः’ इति समासान्तेऽचि ‘रात्राह्नाहाः पुंसि’ इति पुंस्त्वे च रूपम् । एकरात्रे यो जागरो निद्रापरित्यागः स एव तावन्मात्रप्रतीकारश्चिकित्सारूपः यस्य तादृशस्तवैष चर्मरत्नजनितो योऽहंकारो गर्वस्तद्रूपो दाहज्वर उष्णज्वरः एकस्यामस्यामेव रात्रौ जागरणं कृत्वा तव चर्मरत्नमपि मुषित्वा तज्जनितं तवाहंकारं नाशयिष्यामीति प्रकरणार्थः । ब्रुवाणः कथयन् । सामर्षं कोपेन । ‘कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ’ इत्यमरः । निषिध्यानिवार्यापवाहितो बहिर्निष्कासितः । **इयं च वार्तेति** । विमर्दककृतभर्त्सनरूपा । कृत्रिमा कपटेन दर्शिता आर्तिः पीडा यस्यैवंभूतेन । ‘डुकृञ् करणे’ ‘ड्वितः क्त्रिः’ ‘क्त्रेर्मम्नित्यम्’ इति कृत्या निर्वृत्ता कृत्रिमा । ‘आर्तिः पीडाधनुष्कोट्योः’ इत्यमरः । चर्मरत्नस्य नाशं चौर्यमादावेव पूर्वमेवोपक्षिप्य प्रस्तूय । ‘प्रस्तावः स्यादुपक्षेपः’ इति वैजयन्ती । उपह्वरे एकान्ते । अङ्गेति संबोधनमव्ययम् । ‘स्युः प्याट् पाडङ्ग हे हे भोः’ इत्यमरः । मूढात्मना पूर्वापरविचारशून्येन । परं मित्रं नितरां विश्वासभाजनम् । आह्वातुमत्रानेतुम् । वेशवाटे वेश्यागृहवीथिकायाम् । ‘वेशो वेश्यागृहम्’ इति हैमः । आपणे पण्य वीथ्यां च । ‘आपणस्तु निषद्यायां विपणिः पण्यवीथिका’ इत्यमरः । निपुणं सम्यक्तयाऽन्विष्यन्मार्गयन् । नोपलब्धवान्न ददर्श । **कथंवेति** । केन वा प्रकारेण स वराको धूर्तो

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

स वराकः । स खलु विमर्दको मद्ग्राहितत्वदभिज्ञानचिह्नो मन्नियोगात्त्वदन्वेषणायोज्जयिनीं तदहरेव प्रातिष्ठत । अर्थपतिस्तु तमदृष्ट्वा तत्कृतमपराधमात्मसंबद्धं मत्वा मोहाद्भयाद्वा प्रत्याख्याय पुनर्धनमित्रेण विभाविते कुपितेन राज्ञा निगृह्य निगडबन्धनमनीयत ।

तेष्वेव दिवसेषु विधिना कल्पोक्तेन चर्मरत्नं दोग्धुकामा काममञ्जरी पूर्वदुग्धं क्षपणीभूतं विरूपकं रहस्युपसृत्य ततोऽपहृतं सर्वमर्थजातं तस्मै प्रत्यर्प्य सप्रश्रयं च बह्वनुनीय प्रत्यागमत् । सोऽपि कथंचिन्निर्ग्रन्थिकग्रहान्मोचितात्मा मदनुशिष्टो हृष्टतमः स्वधर्ममेव प्रत्यपद्यत । काममञ्जर्यपि कतिपयैरेवाहोभिरश्मन्तकशेषमाजिनरत्नदोहाशया स्वमभ्युदयमकरोत् । अथ मत्प्रयुक्तो धनमित्रः पार्थिवं मिथो व्यज्ञापयत्—'देव, येयं गणिका काममञ्जरी लोभोत्कर्षाल्लोभमञ्जरीति लोकावक्रोशपात्रमासीत्, साद्य मुसलोलूखलान्यपि निरपेक्षं त्यजति ।

---

विमर्दक उपलभ्येत प्राप्तो भविष्यति । खलु निश्चयेन । मयाऽपहारवर्मणा ग्राहितानि संदिष्टानि तव राजवाहनस्य अभिज्ञानचिह्नानि स्मारकलक्षणानि यस्मै तादृशः सन् । मम नियोगादाज्ञया । तदहरेव तस्मिन्नेव दिवसे । प्रातिष्ठत प्रस्थितवान् । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । आत्मनि स्वस्मिन्संबद्धमारूढं मत्वा विचार्य । प्रत्याख्याय राजसंनिधौ विमर्दकादर्शने कारणान्तरं विपरीतमुक्त्वा । 'प्रत्याख्यानं निरसने विपरीतविजल्पिते' इत्यजयः । विभाविते-तददर्शने मच्चर्मरत्नचौर्यमेव वस्तुतः कारणमित्याविष्कृते सति । निगडबन्धनं पादबन्धनं तत्पुरःसरं कारागृहमिति यावत् । अनीयत प्रापितः । 'णीञ् प्रापणे' ।

**तेष्वेवेति** । पूर्वोक्तेष्वेव दिनेषु । कल्पोक्तेन विधिना चर्मरत्नदोहनकल्पकथितेन प्रकारेण । दोग्धुकामा ततः स्वाभीष्टानि लब्धुमिच्छुः । 'तुं काममनसोरपि' इत्यनुस्वारलोपः । पूर्वदुग्धं पुरैव निर्धनीकृतमत एव क्षपणीभूतं जैनमतावलम्बिनं विरूपकं तन्नामानं वैश्यमुपसृत्य गत्वा । अर्थजातं द्रव्यनिचयम् । सप्रश्रयं विनयवाक्यपुरःसरम् । अनुनीय सान्त्वयित्वा । सोऽपि विरूपकश्च । निर्ग्रन्थिकग्रहाज्जैनमतसिद्धान्तात् । 'निर्ग्रन्थोऽर्हन् क्षपणकः श्रमणो जिन इत्यपि' इति वैजयन्ती । मोचित आत्मा येन तादृशः सन् । मदनुशिष्टः 'इतः वेश्यागृहं मा गमः' इति सम्यङ्मया शिक्षितः । स्वधर्मं वैश्याचारमेव । प्रत्यपद्यताचरति स्म । अश्मन्तकमधिश्रयणी तदेव शेषो यस्मिन्कर्मणि तद्यथा तथा । 'अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका' इत्यमरः । अजिनरत्नस्य चर्मरत्नस्य दोहे आशया कामनया । अभ्युदयं मङ्गलकर्माकरोत्कृतवती । **अथेति** । मया प्रयुक्तः प्रेरितः । पार्थिवं राजानं मिथो रहसि व्यज्ञापयन्निवेदयामास । देव हे राजन् ! 'राजा भट्टारको देवः' इत्यमरः । लोभोत्कर्षात्तृष्णोद्रेकात् । लोकानां जनानामवक्रोशस्य पात्रं आस्पदम् । मुसलोलूखले धान्यानां निस्तुषीकरणसाधनीभूते ।'अयोऽग्रं मुसलोऽस्त्री स्यादुलूखलमुदूखलम्' इत्यमरः । तदादीन्यपि निरपेक्षमविचार्यैव त्यजति ददाति ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तन्मन्ये मच्चर्मरत्नालाभं हेतुम् । तस्य खलु कल्पस्तादृशः । वणिग्भ्यो वारमुख्याभ्यश्च दुग्धे नान्येभ्य इति हि तद्गता प्रतीतिः । अतोऽमुष्यामस्ति मे शङ्का ' इति । सा सद्य एव राज्ञा सह जनन्या समाहूयत । व्यथितवर्णेनेव मयोपह्वरे कथितम्—'नूनमार्ये, सर्वस्वत्यागादतिप्रकाशादाशङ्कनीयचर्मरत्नलाभा । तदनुयोगायाङ्गराजेन समाहूयसे । भूयोभूयश्च निर्बद्धया त्वया नियतमस्मि तदागतित्वेनाहमपदेश्यः । ततश्च मे भावी चित्रवधः । मृते च मयि न जीविष्यत्येव ते भगिनी । त्वं च निःस्वीभूता । चमरत्नं च धनमित्रमेव प्रतिभजिष्यति । तदियमापत्समन्ततोऽनर्थानुबन्धिनी । तत्किमत्र प्रतिविधेयम्' इति । तया तज्जनन्या चाश्रूणि विसृज्योक्तम्—'अस्त्येवैतदस्मद्बालिश्यान्निर्भिन्नप्रायं रहस्यम् । राज्ञश्च निर्बन्धाद्द्वित्रिश्चतुर्निह्नुत्यापि नियतमागतिरपदेश्यैव चोरितस्य त्वयि । त्वयि त्वपदिष्टे सर्वमस्मत्कुटुम्बमवसीदेत् । अर्थपतौ च तदपयशो रूढम् । अङ्गपुरप्रसिद्धं च तस्य कीनाशस्यास्माभिः संगतम् । अमुनैव तदस्मभ्यं दत्तमित्यपदिश्य वरमात्मा गोपायितुम्' इति मामभ्युपगमय्य राजकुलमगमताम् । राज्ञानुयुक्ते च 'नैष न्यायो वेशकुलस्य यद्दातुरपदेशः । न ह्यर्थैर्न्यायार्जितैरेव

---

तत्तस्मात्कारणादेतादृशदानस्य हेतुं निमित्तं मच्चर्मरत्नलाभं तत्प्राप्तिमेव मन्ये निश्चिनोति । तादृशः 'अन्यायार्जितं यद्यतस्तस्मै प्रतिदेयम्, न्यायार्जितं तु देवब्राह्मणेभ्यो देयम् ' इति कल्पो विधिः। तद्गता चर्मरत्नसंबन्धिनी प्रतीतिः प्रख्यातिः।अमुष्यां काममञ्जर्याम्। शंका चौर्यशङ्का । व्यथितवर्णेनेव कृत्रिमतया प्रकटितमुखवैवर्ण्येन । उपह्वरे रहसि । नूनं निश्चयेन । अतिप्रकाशात् प्रसिद्धतरात् । आशंकनीयस्त्वयि संदेहविषयीभूतश्चर्मरत्नलाभो यस्यास्तादृशी । तदनुयोगाय तत्प्रश्नाय । ' प्रश्नोऽनुयोगः पृच्छा च ' इत्यमरः । समाहूयसे आकारिताऽसि । निर्बद्धया भीषितया । नियतमवश्यम् । अगतित्वेन गत्यन्तराभावात् । अपदेश्योऽस्मि कथनीयोऽस्मि । भावी चित्रवधो भविष्यत्येव । ' भविष्यति गम्यादयः ' इति णिनिः । न जीविष्यत्येव पातिव्रत्यात्तस्याः साऽवश्यं मरिष्यतीति भावः । निःस्वीभूता दारिद्रतां गता । ' निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ' इत्यमरः । धनमित्रमेव प्रतिभजिष्यति तस्मा एव प्रत्यर्पितं भविष्यति । अनर्थानुबन्धिनी अनर्थोत्पादयित्री । अत्रास्मिन्कार्ये । किमत्र प्रतिविधेयं को वा उपाय आश्रयणीयः । बालिशस्य भावो बालिश्यं तस्मादस्मन्मौर्ख्यात् । ' अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः ' इत्यमरः । निह्नुत्यापि मिथ्याभाषणेन प्रच्छाद्यापि । आगतिः प्राप्तिः । अवसीदेत् विनाशं गच्छेत् । तदपयशश्चर्मरत्नहरणा कीर्तिः । कीनाशस्य क्षुद्रस्य । ' कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत् । यमे ना ' इति मेदिनी । ' कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु' इत्यमरः । संगतं मित्रता । अमुनवार्थपतिनैव । तच्चर्मरत्नम् । अपदिश्य मिथ्योक्त्वा । आत्मा गोपायितुं रक्षितुं वरं शक्य इति यावत् । ' गुपू रक्षणे ' । अगमतां गच्छतः स्म । ' गम्लृ गतौ ' ' पुषादिद्युतादि—' इत्यङ् । अनुयुक्ते पृष्टे सत्यौ ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पुरुषा वेशमुपतिष्ठन्ति' इत्यसकृदतिप्रणुद्य कर्णनासाच्छेदोपक्षेपभीषिताभ्यां दग्धबन्धकीभ्यां स एव तपस्वी तस्करत्वेनार्थपतिरग्राह्यत । कुपितेन च राज्ञा तस्य प्राणेषूद्यतो दण्डः । प्राञ्जलिना धनमित्रेणैव प्रत्यषिध्यत–'आर्य, मौर्यदत्त एष वरो वणिजाम् ईदृशेष्वपराधेष्वसुभिरवियोगः।यदि कुपितोऽसि हृतसर्वस्वो निर्वासनीयः पाप एषः' इति। तन्मूला च धनमित्रस्य कीर्तिरप्रथत। अप्रीयत च भर्ता। पटच्चरच्छेदशेषोऽर्थपतिरर्थमत्तः सर्वपौरजनसमक्षं निरवास्यत। तस्यैव द्रव्याणां तु केनचिदवयवेन सा वराकी काममञ्जरी चर्मरत्नमृगतृष्णिकापविद्धसर्वस्वा सानुकम्पं धनमित्राभिनोदितेन भूपेनान्वगृह्यत । धनमित्रश्चाहनि गुणिनि कुलपालिकामुपायंस्त। तदेवं सिद्धसंकल्पो रागमञ्जरीगृहं हेमरत्नपूर्णमकरवम् ।

अस्मिंश्च पुरे लुब्धसमृद्धवर्गस्तथा मुषितो यथा कपालपाणिः स्वैरेव धनैर्मद्विश्राणितैः समृद्धीकृतस्यार्थिवर्गस्य गृहेषु भिक्षार्थमभ्रमत् । न ह्यलमतिनिपुणो-

---

दातुरपदेशस्तन्नामप्रकटीकरणम् । वेशं गणिकामन्दिरम् । असकृत्पुनःपुनः । 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः । अतिप्रणुद्य नितरां पीडयित्वा । कर्णनासाच्छेदस्य तत्कर्तनस्योपक्षेपेण प्रस्तावेन 'प्रस्तावः स्यादुपक्षेपः' इति वैजयन्ती । भीषिताभ्यामुद्वेगं प्रापिताभ्यां दग्धबन्धकीभ्यां हतभाग्यकुलटाभ्याम् । तपस्वी निर्दोषतया शोच्यभूतः । 'तपस्वी चानुकम्पार्हः' इत्यमरः । अग्राह्यत ग्राहितोऽभूत् । दण्डः शिक्षा । प्रत्यषिध्यत निवारितः । मौर्यो राजनीतिकारकस्तेन दत्तः । अपराधेष्वागस्सु । असुभिरवियोगः प्राणहानिर्न कार्येति । निर्वासनीयो देशाद्बहिष्कार्यः । तन्मूलाऽर्थपतिप्राणरक्षणहेतुकी । अप्रथत ख्याताऽभूत् । पटच्चरच्छेदो जीर्णवस्त्रखण्डः शेषो यस्य तथाकृतः । 'पटच्चरं जीर्णवस्त्रम्' इत्यमरः । सर्वपौरजनसमक्षं समस्तनागरिकजनसंनिधाने निरवास्यत बहिर्निष्कासितः । तस्यैवार्थपतेरेव । अवयवेनांशेन । चर्मरत्नमृगतृष्णिकया तदाशयाऽपविद्धं परित्यक्तं सर्वस्वं यया तादृशी । सानुकम्पं दयायुक्तम् । 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः । धनमित्रेणाभिनोदितेन प्रार्थनापूर्वकं प्रेरितेन । अन्वगृह्यतानुगृहीता । अहनि गुणिनि शुभदिवसे 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः । कुलपालिकामेतन्नाम्नीं कुबेरदत्तकन्याम् । उपायंस्त पर्यणैषीत् । 'यम उपरमे' उपपूर्वः । परिणयार्थे । ततो लुङ् । **एवमिति** । पूर्वोक्तप्रकारेण सिद्धः परिपूर्णः संकल्पः मनोरथः विरूपकस्य स्वधनप्राप्तिपूर्वकं स्वधर्मे एव स्थापनम्, मरीचिविरूपकयोरपकारिण्याः काममंजर्या अवमाननम्, कुलपालिकाधनमित्रसंयोजनम्, तद्विघातकार्थपतिनिष्कासनम्, एतद्रूपः यस्य तथाविधः सन् ।

**अस्मिंश्चेति** । चम्पापुर इत्यर्थः । लुब्धानां वितरणे कृपणानां समृद्धानां धनसम्पन्नानां च वर्गः समुदायः । तथा तेन प्रकारेण मुषितः चोरितः । यथा येन प्रकारेण कपालं शिरोऽस्थिखण्डः पाणौ भिक्षाटनार्थं यस्य तथाविधः सन् । 'स्यात्कर्परः कपालोऽस्त्री' इत्यमरः । मया अपहारवर्मणा विश्राणितैः दत्तैः । 'त्यागो विहापितं दानमुत्सर्जनविसर्जने । विश्राणनं वितरणं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

ऽपि पुरुषो नियतिलिखितां लेखामतिक्रमितुम् । यतोऽहमेकदा रागमञ्जर्याः प्रणयकोपप्रशमनाय सानुनयं पायितायाः पुनः पुनः प्रणयसमर्पितमुखमधुगण्डूषमास्वादमास्वादं मदेनास्पृश्ये । शीलं हि मदोन्मादयोरमार्गेणाप्युचितकर्मस्वेव प्रवर्तनम् । यदहमुपोढमदः ' नगरमिदमेकयैव शर्वर्या निर्धनीकृत्य त्वद्भवनं पूरयेयम् ' इति प्रव्यथितप्रियतमाप्रणामाञ्जलिशपथशतातिवर्ती मत्तवारण इव रभसच्छिन्नशृङ्खलः कयापि धात्र्या शृगालिकाख्ययानुगम्यमानो नातिपरिकरोऽसिद्वितीयो रंहसा परेणोदचलम् । अभिपततोऽपि नागरिकपुरुषानशङ्कमेव विगृह्य तस्कर इति तैरभिहन्यमानोऽपि नातिकुपितः क्रीडन्निव मदावसन्नहस्तपतितेन निस्त्रिंशेन द्वित्रानेव हत्वावघूर्णमानताम्रदृष्टिरपतम् । अनन्तरमार्तरवा-

---

स्पर्शनं प्रतिपादनम् ' इत्यमरः । समृद्धीकृतस्य पूरितस्यार्थिवर्गस्य याचकलोकस्य । गृहेषु भवनेषु । ' गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ' इत्यमरः । अभ्रमतपरिभ्रमति स्म । 'भ्रमु अनवस्थाने ' । 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' इति श्यनोऽभावपक्षेऽत्र शप् । नह्यलं निश्चयेन समर्थो न भवति । ' अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ' इत्यमरः । अतिनिपुणो नितरां चतुरोऽपि । नियतिलिखितां लेखां विधिना ललाटे लिखितां लिपिम् । ' दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ' इत्यमरः । अतिक्रमितुमुल्लंघयितुम् । प्रणयकोपस्य स्नेहकलहस्य प्रशमनाय तन्निवारणार्थम् । सानुनयं प्रश्रयपूर्वकम् । प्रणयसमर्पितं स्नेहेन दत्तं मुखमधु गण्डूषं मुखादुच्छिष्टमदिरम् । आस्वादमास्वादं पुनः पुनः पीत्वा । ' आभीक्ष्ण्ये णमुल् च ' इति णमुलि ' नित्यवीप्सयोः ' इति द्विरुक्तिः । मदेनास्पृश्ये उन्मत्तोऽहमभूवमित्यर्थः । अमार्गेणापि कुत्सिताचरणेनाप्युचितकर्मस्वेवाभ्यस्तकार्येष्वेव । ' अभ्यस्तेऽप्युचितं न्याय्ये ' इति वैजयन्ती । प्रवर्तनमनुष्ठापनम् । उपोढमदः पूर्णमदः । शर्वर्या रजन्या । ' अथ शर्वरी । निशा निशीथिनी रात्रिः ' इत्यमरः । निर्धनीकृत्य दरिद्रीकृत्य । प्रव्यथिता स्वनायकोपरि चौर्ये कृते काप्यापदापतिष्यतीति विह्वलीभूता या प्रियतमा रागमञ्जरी तस्याः प्रणामाञ्जलीनां नमस्काराञ्जलीनां शपथानां च शतमतिक्रम्य वर्तत एवंशीलः सन् । मत्तवारणो मत्तगज इव । ' मतङ्गजो गजो नागः कुञ्जरो वारणः करी ' इत्यमरः । रभसेन वेगेन छिन्ना भग्ना शृंखला पादबन्धनं येन तादृशः । धात्र्योपमात्रा । ' धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि ' इत्यमरः । न विद्यतेऽत्यन्तं परिकरो युद्धसामग्री यस्य तादृशः । असिः खड्गो द्वितीयः सहायभूतो यस्य सोऽसिद्वितीयः । ' खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ' इत्यमरः । परेण रंहसा महता वेगेन । उदचलं प्रस्थितवान् । अभिपततः आभिमुख्येनागच्छतः । विगृह्य तैः सह युद्धं कृत्वा । ' अस्त्रियां समारानीकरणाः कलहविग्रहौ ' इत्यमरः । तस्कर इति ' चौरोऽयम् ' इति बुद्धया । ' चौरैकागारिकस्तेनदस्युतस्करमोषकाः ' इत्यमरः । अभिहन्यमानस्ताड्यमानः । नातिकुपितः मदोद्रेकात्कोपं न गतः सन् । मदेनावसन्नः दुर्बलीभूतो यो हस्तः करस्तस्मात् पतितेन गलितेन निस्त्रिंशेन खड्गेन । द्वौ वा त्रयो वा द्वित्रास्तान् । 'संख्ययाऽव्ययासन्नादूराधिक-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

न्विसृजन्ती शृगालिका ममाभ्याशमागमत्। अबध्ये चाहमरिभिः। आपदा तु मदापहारिण्या सद्य एव बोधितस्तत्क्षणोपजातया प्रतिभया व्यचीचरम्—'अहो, ममेयं मोहमूला महत्यापदापतिता। प्रसृततरं च सख्यं मया सह धनमित्रस्य, मत्परिग्रहत्वं च रागमञ्जर्याः। मदेन सा च तौ प्रोर्णुतौ श्वो नियतं निग्रहिष्येते। तदियमिह प्रतिपत्तिर्ययानुष्ठीयमानया मन्नियोगतस्तौ परित्रास्येते। मां च कदाचिदनर्थादितस्तारयिष्यति' इति कमप्युपायमात्मनैव निर्णीय शृगालिकामगर्गादिषम्—'अपेहि जरतिके, या तामर्थलुब्धां दग्धगणिकां रागमञ्जरिकामजिनरत्नमत्तेन शत्रुणा मे मित्रच्छद्मना धनमित्रेण संगमितवती, सा हतासि। तस्य पापस्य चर्मरत्नमोषाद्दुहितुश्च ते साराभरणापहारादहमद्य निःशल्यमुत्सृजेयं जीवितम्' इति। सा पुनरुद्घटितज्ञा परमधूर्ता साश्रुगद्गदमुदञ्जलिस्तान्

---

संख्याः संख्येये' इति समासे 'बहुव्रीहौ संख्येये डजबहुगणात्' इति समासान्तो डच् प्रत्ययः। अवघूर्णमाने परिभ्रमन्त्यौ ताम्रे दृष्टी नयने यस्य तादृशः। 'घुण घूर्ण भ्रमणे'। **अनन्तरमिति**। आर्तरवान्दीनशब्दान्। 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः। अभ्याशं निकटम्। 'सदेशाभ्याशसविधसमर्यादसवेशवत्' इत्यमरः। आगमदागता। अवघ्ये बद्धोऽभूवम्। अरिभिः शत्रुभिर्नागरिकजनैः। 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। मदापहारिण्या मदनिवारणशीलया। बोधितः सचेतीकृतः। तत्क्षणे तस्मिन्नेवावसरे उपजातयोत्पन्नया प्रतिभया 'प्रज्ञा नवनवोल्लासशालिनी प्रतिभा मता' इत्युक्तप्रज्ञाविशेषेण व्यचीचरं विचारं कृतवान्। मोहमूला अज्ञाननिमित्तिका। महती दुस्तराऽऽपद्विपत्तिरापतिता जाता। प्रसृततरं विख्यातप्रायम्। मत्परिग्रहत्वं मत्पत्नीत्वम्। 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः। मदेनसा मम दुरितेन। 'कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम्' इत्यमरः। तौ रागमञ्जरीधनमित्रौ। प्रोर्णुतावाच्छादितौ। 'ऊर्णुञ् आच्छादने'। श्व आगामिनि दिवसे। नियतमवश्यमेव। निग्रहीष्येते बद्धौ भविष्यतः। इयमुपरि वक्ष्यमाणस्वरूपा प्रतिपत्तिरितिकर्तव्यता। परित्रास्येते आपदो मोचितौ भविष्यतः। 'त्रैङ् पालने' इत्यतः कर्मणि लृट्। तारयिष्यतीयं प्रतिपत्तिः कदाचिन्मामपि उद्धरिष्यति। आत्मनैव निर्णीय स्वयं मनस्येवाशु निश्चित्य। अगादिषमुक्तवान्। 'अतो हलादेर्लघोः' इति वैकल्पिकी वृद्धिः। **अपेहीति**। दूरस्थिता भव। 'इण् गतौ' जरतिके हे वृद्धे! अर्थलुब्धां धनाशापूर्णाम्। मित्रमिति छद्म कपटो यस्य तथाविधेन। 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः। संगमितवती संयोजितवती। **सा हताऽसीति**। मत्परिग्रहस्य रागमञ्जर्या अन्येन धनमित्रेण सह संमेलनरूपापराधात्त्वां सद्य एवावसादयिष्यामीति भावः। तस्य पापस्यैव परकलत्रगमनशीलस्य दुष्टस्य धनमित्रस्य चर्मरत्नमोषाच्चर्मभास्त्रिकायाश्चौर्यात्। दुहितुश्च ते तव कन्याया रागमञ्जर्याः साराभरणानां मुख्यालंकाराणामपहरणान्मोषणेन। सा शृगालिका वञ्चनाचातुर्याद्यथार्थनाम्नी। उद्घटितं धनमित्ररागमञ्जर्योर्मया सह विरोधाविष्करणरूपापदुद्धारोपायस्य सूचनं जानातीति उद्घटितज्ञा। 'सूचन

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पुरुषान्सप्रणाममासादितवती सामपूर्वं मम पुरस्तादयाचत—'भद्रकाः, प्रतीक्ष्यतां कंचित्कालं यावदस्मादरमदीयं सर्वं मुषितमर्थजातमवगच्छेयम् ' इति । तथेति तैः प्रतिपन्ने पुनर्मत्समीपमासाद्य ' सौम्य, क्षमस्वास्य दासीजनस्यैकमपराधम् । अस्तु स कामं त्वत्कलत्राभिमर्शी वैरास्पदं धनमित्रः । स्मरंस्तु चिरकृतां ते परिचर्यामनुग्रहीतुमर्हसि दासीं रागमञ्जरीम् । आकल्पसारो हि रूपाजीवाजनः । तद्ब्रूहि क निहितमस्यां भूषणम्' इति पादयोरपतत् । ततो दयमान इवाहमत्रवम्—'भवतु, मृत्युहस्तवर्तिनः किं ममामुष्या वैरानुबन्धेन' इति तद्ब्रुवन्निव कर्णे एवैनामशिक्षयम्—'एवमेवं प्रतिपत्तव्यम्' इति। सा तु प्रतिपन्नार्थेव जीव चिरम्, प्रसीदन्तु ते देवताः, देवोऽप्यङ्गराजः पौरुषप्रीतो मोचयतु त्वाम्, एतेऽपि भद्रमुखास्तव दयन्ताम्, इति क्षणादपासरत् । आनीये चाहमारक्षकनायकस्य शासनाच्चारकम् ।

अथोत्तरेद्युरागत्य दृप्ततरः सुभगमानी सुन्दरंमन्यः पितुरत्ययादचिराधिष्ठिता-

---

मुद्धर्त्नं बोधिः ' इत्यजयकोशः । ' इगुपधज्ञाप्रीकिरः कः ' इति कप्रत्ययः । तान्पुरुषान् नगररक्षकान् । आसादितवती समीपं गतवती सती । सामपूर्वं सान्त्वनवाक्यपुरःसरम् । अयाचत प्रार्थयामास । भद्रका हे सौम्यपुरुषाः ! प्रतीक्ष्यतां कंचित्कालं भवद्भिः कियत्कालपर्यन्तं प्रतिपालनं कर्तव्यमित्यर्थः । मुषितं चोरितमर्थजातमाभरणवस्तुजालम् । अवगच्छेयं जानीयाम् । प्रतिपन्नेऽङ्गीकृते । आसाद्य प्राप्य । स धनमित्रः । कामं यथेष्टम् । त्वत्कलत्राभिमर्शी भवद्भार्यादूषकः । वैरस्यास्पदं पात्रम् । चिराद्बहुकालात् कृतां विरचितां परिचर्यां सेवाम् । आकल्पः अलंकारः सारः प्रधानभूतो यस्य तथाविधो हि निश्चयेन रूपाजीवाजनो गणिकावर्गः । ' आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ' ' वारस्त्री गणिका वेश्या रूपाजीवा ' इत्यमरः । ब्रूहि कथय । क कुत्रस्थाने । निहितं स्थापितम् । मृत्युहस्तवर्तिनः अवश्यं नागरिकैर्मारयिष्यमाणस्य । वैरानुबन्धेन वैरदार्ढ्यापादनेन । किं न किमपि प्रयोजनमस्तीत्यर्थः । तत् आभरणनिधनास्थानम् । कर्ण एव यथा नागरिका न शृण्वन्ति तथेति भावः । प्रतिपत्तव्यमनुष्ठातव्यम् । प्रतिपन्नः प्राप्तः अर्थ आभरणजातरूपो यया तादृशीव । प्रसीदन्त्वनुग्रहं कुर्वन्तु । पौरुषेण तव पराक्रमेण प्रीतः सन्तुष्टः । एते पुरोवर्तिनो राजपुरुषाश्च । तव त्वाम् । ' अधीगर्थदयेशां कर्मणि' इति कर्मार्थे षष्ठी । अपासरद्दूरं गतवती । आरक्षकाणां नगरपालानां नायकस्य प्रधानाध्यक्षस्य शासनादाज्ञया । चारकं कारागृहम् ।

**अथेति** । मम कारागृहगमनादनन्तरम् । उत्तरेद्युः परस्मिन्दिवसे । ' सद्यःपरुत्परार्यैष—' इत्यादिना निपातः । दृप्ततरो नितान्तं गर्वयुक्तः । 'गर्वितो दृप्त उद्धतः ' इति वैजयन्ती । सुभगमात्मानं मन्यते सुभगमानी । ' सर्वोन्नतत्वं सौभाग्यं तद्वान्सुभग उच्यते ' इति दिवाकरः । सुन्दरंमन्यः ' सुन्दरोऽहम्' इत्यभिमानयुतः । ' आत्ममाने खश्च ' इति खश् चाणिनिः । ' अरुर्द्विषदजन्तस्य मुम् ' इति मुमागमः । पितुरत्ययान्नाशादनन्तरमचिरादिदानीमेवाधिष्ठितः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

धिकारस्तारुण्यमदादनतिपक: कान्तको नाम नागरिक: किंचिदिव भर्त्सयित्वा मां समभ्यधत्त--'न चेद्धनमित्रस्याजिनरत्नं प्रतिप्रयच्छसि, न चेद्वा नागरिकेभ्यश्चोरितकानि प्रत्यर्पयासि, द्रक्ष्यसि पारमष्टादशानां कारणानामन्ते च मृत्युमुखम्' इति। मया तु स्मयमानेनाभिहितम्–'सौम्य, यद्यपि दद्यामाजन्मनो मुषितं धनं न त्वर्थपतिदारापहारिण: शत्रोर्मे मित्रमुखस्य धनमित्रस्य चर्मरत्नप्रत्याशां पूरयेयम्। अदत्त्वैव तदयुतमपि यातनानामनुभवेयम्। इयं मे साधीयसी सन्धा' इति। तेनैव क्रमेण वर्तमाने सान्त्वनतर्जनप्राये प्रतिदिनमनुयोगव्यतिकरेऽनुगुणान्नपानलाभात्कतिपयैरेवाहोभिर्विरोपितव्रण: प्रकृतिस्थोऽहमासम्।

अथ कदाचिदच्युताम्बरपीतातपत्विषि क्षयिणि वासरे हृष्टवर्णा शृगालिकोज्ज्वलेन वेषेणोपसृत्य दूरस्थानुचरा मामुपश्लिष्याब्रवीत्–'आर्य, दिष्ट्या

---

प्राप्तोऽधिकारो येन तादृशः। तारुण्यमदाद्यौवनगर्वात्। अनतिपक्को शमादिरहितः। नागरिकः कारागृहाधिपतिः। 'कारापतिर्नागरिकः' इति वैजयन्ती। समभ्यधत्त प्रोक्तवान्।

**न चेदिति**। प्रतिप्रयच्छसि प्रतिददासि। 'दाण् दाने' 'पाघ्राध्मास्था–' इत्यादिना यच्छादेशः। नागरिकेभ्यो नगरवासिजनेभ्यः। चोरितकानि मुषितवस्तुजातानि। कारणानां यातनानाम्। 'कारणा तु यातना तीव्रवेदना' इत्यमरः। अन्ते कारागृहवासदुःखभोगानन्तरम्। मृत्युमुखं यमसुखम्। स्मयमानेन हासं कुर्वता। 'ष्मिङ् ईषद्धसने'। अभिहितं कथितम्। 'डुधाञ् धारणपोषणयोः' इत्यतो निष्ठायां 'दधातेर्हिः' इति ह्यादेशः। शत्रोर्मे मद्रिपोः। इदं तु कथनं तयोरापद्यथा न भवेत्तथोपायविचारपूर्वकम्। मित्रमुखस्य कपटसुहृदः। 'मुखं तु वदने मुख्ये ताम्रे छद्मानि वा पुमान्' इति भागुरिः। चर्मरत्नस्य प्रत्याशां पुनः प्राप्त्यभिलाषम् 'प्रत्याशा पुनराशीच्छा' इति वैजयन्ती। पूरयेयं संपादयेयम्। तच्चर्मरत्नमदत्त्वैव न पुनर्दत्त्वा। यातनानां तीव्रवेदनानां सहस्रमपि। साधीयसी बलवत्तरा सन्धा प्रतिज्ञा। 'सन्धा प्रतिज्ञा मर्यादा' इत्यमरः। तेनैव क्रमेण प्रतिदिनं कान्तकेन पूर्वोक्तप्रकारेण तर्जनं क्रियते, मया चेत्थमेवोत्तरं दीयते इत्यनेन प्रकारेण। सान्त्वनमनुनयनम्, तर्जनं भीषणं तत्प्राये तद्बहुले। अनुयोगव्यतिकरे प्रश्नप्रकारे अनुगुणस्यान्नपानादेर्लाभात्प्राप्त्या। विरोपितव्रणः चिकित्सितक्षतः। 'विरोपित उपशान्तश्चिकित्सितः' इति बोपालितः। 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः। प्रकृतिस्थः शरीरस्वास्थ्ययुक्तः।

**अथेति**। अच्युतो नारायणस्तस्याम्बरं वस्त्रम् 'पीताम्बरोऽच्युतः शार्ङ्गी' 'अम्बरं व्योम्नि वाससि' इत्यमरः। तद्वत् पीताऽऽतपानां सूर्यप्रकाशानां त्विट् कान्तिर्यस्मिंस्तथाविधे। 'प्रकाशो द्योत आतपः' 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः। क्षयिणी क्षयोन्मुखे दिवसावसाने इत्यर्थः। हृष्टवर्णा उज्ज्वलाकारा। उपसृत्य मत्समीपमागत्य दूरस्थाः काराभवनाद्बहिरेव स्थिता अनुचरा यस्याः सा। उपाश्लिष्य गाढमालिङ्ग्य। अब्रवीत्

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

वधस। फलिता तव सुनीतिः। यथा त्वयादिश्ये तथा धनमित्रमेत्यात्रवम्—आर्य, तवैवमापन्नः सुहृदित्युवाच—'अहमद्य वेशसंसर्गसुलभात्पानदोषाद्बद्धः। त्वया पुनरविशङ्कमद्यैव राजा विज्ञापनीयः—'देव, देवप्रसादादेव पुरापि तद्-जिनरत्नमर्थपातिमुषितमासादितम्। अथ तु भर्ता रागमञ्जर्याः कश्चिदक्षधूर्तः कलासु कवित्वेषु लोकवार्तासु चातिवैचक्षण्यान्मया समसृज्यत तत्सम्बन्धाच्च वस्त्राभरणप्रेषणादिना तद्भार्यां प्रतिदिनमन्ववर्ते। तदसावशङ्किष्ट निकृष्टाशयः कितवः। तेन च कुपितेन हृतं तच्चर्मरत्नमाभरणसमुद्गकश्च तस्याः। स तु भूयः स्तेयाय भ्रमन्नगृह्यत नागरिकपुरुषैः। आपन्नेन चामुनानुसृत्य रुदत्यै रागमञ्जरीपरिचारिकायै पूर्वप्रणयानुवर्तिना तद्भाण्डनिधानोद्देशः कथितः। ममापि चर्मरत्नमुपायोपक्रान्तो यदि प्रयच्छेदिह देवपादः प्रसादः कार्यः' इति। तथा निवेदितश्च नरपतिरसुभिर्मामवियोज्योपच्छन्दनैरेव स्वं ते दापयितुं प्रयतिष्यते तन्नः पथ्यम्' इति। श्रुत्वैव च त्वदनुभावप्रत्ययादनतित्रस्नुना तेन तत्तथैव संपादितम्। अथाहं त्वदभिज्ञानप्रत्यायिताया रागमञ्जर्याः सकाशाद्यथेप्सितानि वसूनि लभमाना राजदुहितुरम्बालिकाया धात्रीं माङ्गलिकां त्वदादिष्टेन मार्गे-

---

कथयामास। दिष्ट्या दैववशात्। आदिश्ये उपदिष्टाऽहम्। आपन्नः विपदं गतः 'आपन्न आपत्प्राप्तः स्यात्' इत्यमरः। वेशसंसर्गेण वेश्यागृहसंपर्केण सुलभात्। पुराऽपि पूर्वमपि। आसादितमुपलब्धम्। अक्षधूर्तः द्यूतकितवः। लोकवार्तासु लौकिकव्यवहारेषु। अत्यन्तं वैचक्षण्यात् पाण्डित्यात्। मया समसृज्यत मित्रत्वं प्राप्तः। अन्ववर्ते अनुसृत्य स्थितः। अशङ्किष्ट स्वभार्यापहारित्वेन मां शङ्कितवान्। निकृष्टाशयः दुरभिप्रायवान्। आभरणसमुद्गकः अलंकारमंजूषा, 'समुद्गकः संपुटकः' इत्यमरः। तस्याः स्वभार्याया रागमञ्जर्याः स्तेयाय चौर्यार्थम्। आपन्नेन विपत्तिं गतेन। अनुसृत्य पश्चादागत्य। रुदत्यै रोदनशीलायै। पूर्वप्रणयं पूर्वस्नेहमनुवर्तते तादृशेन। तद्भाण्डनिधानोद्देशः अलंकारसंपुटस्थापनभूमिः। उपायेन सामाद्यन्यतरेण उपक्रान्तो वशीकृतः 'सामदाने भेददण्डावित्युपायचतुष्टयम्' इत्यमरः। 'उपक्रमो वशीकारे समारम्भे चिकित्सने' इति वैजयन्ती। इह चर्मरत्नपुनःप्राप्तिविषये। नरपती राजा असुभिर्मामवियोज्य मम प्राणदण्डं न विधाय। उपच्छन्दनैः सान्त्वनैरेव ते स्वं चर्मरत्नात्मकम्। पथ्यं हितकरम्। त्वदनुभावे तव पराक्रमे प्रत्ययाद्विश्वासात्। अनतित्रस्नुनाऽनुद्वेगिना। 'त्रसिगृधि—' इति ताच्छील्ये क्नुप्रत्ययः। तेन धनमित्रेण। तथैव त्वदुक्तप्रकारेणैव। **अथेति**। त्वदभिज्ञानैः तव चिह्नैः "त्वत्स्वामी अपहारवर्मा राजपुरुषैर्न विपत्तिं गमितः सुखं जीवति" इति बोधकैः प्रत्यायिताया: विश्वासं प्रापितायाः। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। वसूनि लभमानानि द्रव्याणि प्राप्नुवन्ती। धात्रीमुपमातरम्। त्वयाऽऽदिष्टेन कथितेन। अन्वरञ्जयं सन्तोषितवती।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

णान्वरञ्जयम् । तामेव च संक्रमीकृत्य रागमञ्जर्याश्चाम्बालिकायाः सख्यं परमवीवृधम् । अहरहश्च नवनवानि प्राभृतान्युपहरन्ती कथाश्चित्राश्चित्तहारिणीः कथयन्ती तस्याः परं प्रसादपात्रमासम् । एकदा च हर्म्यगतायास्तस्याः स्थानस्थितमपि कर्णकुवलयं स्रस्तमिति समादधती प्रमत्तेव प्रच्याव्य पुनरुत्क्षिप्य भूमेस्तेनोपकन्यापुरं कारणेन केनापि भवनाङ्गणं प्रविष्टस्य कान्तकस्योपरि प्रवृत्तकुहरपारावतत्रासनापदेशात्प्रहसन्ती प्राहार्षम् । सोऽपि तेन धन्यंमन्यः किंचिदुन्मुखः स्मयमानो मत्कर्मप्रहासिताया राजदुहितुर्विलासप्रायमाकारमात्माभिलाषमूलमिव यथा संकल्पयेत्तथा मयापि संज्ञयैव किमपि चतुरमाचेष्टितम् । आकृष्टधन्वना च मनसिजेन विद्धः सन्दिग्धफलेन पत्रिणातिमुग्धः कथंकथमप्यपा-

---

तामेव माङ्गलिकामेव संक्रमीकृत्योपायत्वेनावलम्ब्य । 'प्रत्युपाये संक्रमे च निश्रेण्यां संक्रमो मतः ' इत्युत्पलिनीकोशः । अवीवृधं वार्धितवती । नवनवानि नूतननूतनानि । प्राभृतान्युपायनानि । ' प्राभृतं तु प्रदेशनम् । उपायनमुपग्राह्यमुपहारस्तथोपदा ' इत्यमरः । चित्तहारिणीर्मनोरञ्जनकारिणीः । तस्या अम्बालिकायाः । प्रसादपात्रमनुग्रहभाजनम् । **एकदेति** । एकस्मिन्दिवसे । हर्म्यगतायाः राजमन्दिरोपरिभागवर्तिन्याः । ' हर्म्यादिर्धनिनां वासः' इत्यमरः । तस्या अम्बालिकायाः । स्थानस्थितमपि यथाप्रदेशवत्यपि कर्णकुवलयं श्रोत्रालंकारीभूतनीलोत्पलम् । स्रस्तमिति गलितं वर्तते इति व्याजेनोक्त्वा । समादधती यथोचितस्थाने विन्यस्यन्ती। प्रच्याव्य नीचैः पातयित्वा । कन्यापुरस्य कन्यान्तःपुरस्य समीपे उपकन्यापुरम् । ' अव्ययं विभक्ति–' इत्यादिना सामीप्ये समासः । भवनस्य गृहस्याङ्गणं चत्वरं प्रविष्टस्यागतस्य । 'भवनागारमन्दिरम् ' ' अङ्गणं चत्वराजिरे' इत्यमरः । कान्तकस्योपरि कारागृहाध्यक्षस्य शिरोभागे प्रवृत्तमारब्धं कुहरं सुरतिक्रीडा याभ्यां तौ प्रवृत्तकुहरौ । 'कुहरं सुषिरे दम्भे नागलोके रतेऽपि च' इत्यजयः । पारावतश्च पारावती च पारावतौ । 'पुमान्स्त्रिया' इत्येकशेषः । आरब्धसुरतौ यौ पारावतौ कपोतपक्षिणौ 'पारावतः कलरवः कपोतः' इत्यमरः। तयोस्त्रासनापदेशात् भीषणव्याजेन। प्रहसन्ती ईषद्धासं कुर्वन्ती सती । प्राहार्षं प्रक्षिप्तवती । **सोऽपीति** । कान्तकश्च । तेन कर्णोत्पलपातनेन स्वस्मिन्नंबालिकाया महती प्रीतिरस्तीति सूचनेन। धन्यंमन्यः आत्मानं कृतार्थं मन्यमानः । 'आत्ममाने खश् च' इति खशि शित्त्वात् श्यनि 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि च रूपम् । किंचिदुन्मुखः अम्बालिकादर्शनार्थमीषदुन्नमितमुखः । स्मयमानः स्वस्याप्यम्बालिकायां महान्स्नेहोऽस्तीति द्योतनार्थं मन्दहासं कुर्वन् । ' ष्मिङ् ईषद्धसने ' । मम कर्मणा पारावतकेलिनिवारणरूपेणैव न तु कान्तकासक्त्या प्रहासितायाः हास्यं कारितायाः । विलासप्रायं हास्यादिभावबहुलमाकारं मुखप्रसादादिचिह्नमात्मनि योऽभिलाषः अनुरागः तन्मूलं तदेककारणम् । संकल्पयेदवगच्छेत् । संज्ञयैव हस्तनेत्रादिचेष्टयैव न तु वाचा ' संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ' इत्यमरः । आकृष्टं धनुर्येन स आकृष्टधन्वा । ' धनुषश्च ' इति समासान्तोऽनङ् । कर्णान्तमाकर्षितचापेन । ' धनुश्चापो धन्वशरासनकोदण्डकार्मुकम् ' इत्यमरः । तादृशेन मनसिजेन पुष्पधन्वना । ' शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः ' इत्यमरः । ' तत्पुरुषे कृति बहुलम् ' सप्तम्या अलुक् । विद्धस्ताडितः । ' व्यध ताडने ' । संदिग्धं विषलिप्तं फलमग्रभागो

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

सरत् । सायं च राजकन्यांगुलीयकमुद्रितां वासताम्बूलपट्टांशुकयुगलभूषणावयवगर्भां च वङ्गेरिकां कयाचिद्बालिकया ग्राहयित्वा रागमञ्जर्या इति नीत्वा कान्तकस्यागारमगाम् । अगाधे च रागसागरे मग्नो नावमिव मामुपलभ्य परमहृष्यत् अवस्थान्तराणि च राजदुहितुः सुदारुणानि व्यावर्णयन्त्या मया स दुर्मतिः सुदूरमुदमाद्यत । तत्प्रार्थिता चाहं त्वत्प्रियाप्रहितमिति ममैव मुखताम्बूलोच्छिष्टानुलेपनं निर्माल्यं मलिनांशुकं चान्येद्युरुपाहरम् । तदीयानि च राजकन्यार्थमित्युपादाय च्छन्नमेवापोढानि । इत्थं च सन्धुक्षितमन्मथाग्निः स एवैकान्ते मयोपमन्त्रितोऽभूत्—'आर्य, लक्षणान्येव तवाविसंवादीनि । तथा हि मत्प्रातिवेश्यः कश्चित्कार्तान्तिकः 'कान्तकस्य हस्ते राज्यमिदं पतिष्यति, तादृशानि तस्य लक्षणानि' इत्यादिक्षत् । तदनुरूपमेव च त्वामियं राजकन्यका कामयते । तदेकापत्यश्च राजा तया त्वां समागतमुपलभ्य कुपितोऽपि दुहितुर्मरणभयान्नो-

---

यस्य तथाविधेन पत्रिणा बाणेन । 'विषाक्ते दिग्धलिप्तकौ' 'पत्री रोप इषुर्द्वयोः' इत्यमरः । 'लाभे सस्ये शराग्रे व्युष्टौ च फलके फलम्' इति शाश्वतः । अपासरत्स्वगृहं गतः । **सायमिति** । दिनावसानकाले । राजकन्याया अम्बालिकाया अंगुलीयकेनांगुल्याभरणेन मुद्रितां चिह्निताम् । वासताम्बूलं कर्पूरैलादिभिः सुरभीकृतं नागवल्लीदलम् । 'घनसारादिभिर्यत्तु वासितं वासमुच्यते' इति वैजयन्ती । पट्टांशुकयुगलं क्षौमवस्त्रद्वयम् । 'चैलं वसनमंशुकम्' इत्यमरः । भूषणावयवाः कानिचिद्भूषणानि च गर्भे मध्यभागे यस्यास्तथाविधां वङ्गेरिकां वेत्रमंजूषाम् । 'वङ्गेरी वेत्रपुटिका' इति वैजयन्ती । रागमञ्जर्या इति तदर्थं नीयते इति मिषेण कथयित्वा । अगां प्राप्तवती । 'इणो गा लुङि' इति गादेशः । अगाधेऽधस्तलस्पर्शायोग्ये । रागसागरेऽनुरागपयोनिधौ मग्नो निमज्जन् । नावमुत्तरणसाधनामिव । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । उपलभ्य प्राप्य । परमहृष्यत् नितरां प्रसन्नोऽभूत् । अवस्थान्तराणि कार्श्यनिद्राक्षयादिरूपान् मदनावस्थाविशेषान् । सुदारुणानि भयंकराणि । दुर्मतिर्मूढाशयः । उदमाद्यत उन्मादं प्रापितः । तेन कान्तकेन प्रार्थिता याचिता । तव प्रियया कांतया प्रहितं प्रेषितम् । उपाहरमुपायनीकृतवती । तस्य कान्तकस्येमानि तदीयानि । 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः' इति छप्रत्ययः । छन्नमेव गुप्तमेव यथा तथाऽपोढानि परित्यक्तानि । 'अपोढमपविद्धं च विस्पष्टं त्यक्तमित्यपि' इति वैजयन्ती । **इत्थंचेति** । पूर्वोक्तप्रकारेण संधुक्षितो वर्द्धितो मन्मथाग्निः कामानलो यस्य तथाविधः । स एव कान्तक एव । उपमन्त्रितः अम्बालिकाप्राप्त्युपायमुपदिष्टः । अविसंवादीनि राजकन्यापरिणेतृत्वयोग्यतायां विसंवादरहितानि । मम प्रातिवेश्यः प्रतिगृहवर्ती । कार्तान्तिकः सामुद्रिकलक्षणज्ञानवान् । 'कार्तान्तिको लक्षणज्ञः' इति वैजयन्ती । तस्य लक्षणानि कान्तकस्य हस्तचिह्नानि । आदिक्षत्कथयामास । 'दिश अतिसर्जने' इत्यतो लुङि 'शल इगुपधादनिटः क्सः' इति क्सः । तदनुरूपं राज्यप्राप्त्यनुकूलतयैव । कामयते वाञ्छति । सैवाम्बालिका एकमपत्यं कन्या यस्य तादृशः । 'अपत्यं तोकं तयोः समे' इत्यमरः । उपलभ्य विदित्वा । मरणभयात् मृतिभीतेः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

च्छेत्स्यति। प्रत्युत प्रापयिष्यत्येव यौवराज्यम्। इत्थं चायमर्थोऽर्थानुबन्धी। किमिति तात, नाराध्यते। यदि कुमारीपुरप्रवेशाभ्युपायं नावबुध्यसे। ननु वन्धनागाराभित्तेर्व्यामत्रयमन्तरालमारामप्राकारस्य केनचित्तु हस्तवतैकागारिकेण तावतीं सुरङ्गां कारयित्वा प्रविष्टस्योपवनं तवोपरिष्टादस्मदायत्तैव रक्षा। 'रक्ततरो हि तस्याः परिजनो न रहस्यं भेत्स्यति' इति। सोऽब्रवीत्—'साधु भद्रे, दर्शितम्। अस्ति कश्चित्तस्करः खननकर्मणि सगरसुतानामिवान्यतमः स चेल्लब्धः क्षणेनैतत्कर्म साधयिष्यति' इति। 'कतमोऽसौ, किमिति न लभ्यते' इति मयोक्त 'येन तद्धनामित्रस्य चर्मरत्नं मुषितम्' इति त्वामेव निरदिक्षत्। 'यद्येवमेहि, त्वयास्मिन्कर्मणि साधित चित्रैरुपायैस्त्वामहं मोचयिष्यामीति शपथपूर्वं तेनाभिसन्धाय सिद्धेऽर्थे भूयोऽपि निगडयित्वा 'योऽसौ चोरः स सर्वथोपक्रान्तः, न तु धाष्टर्यभूमिः प्रकृष्टवैरस्तदजिनरत्नं दर्शयिष्यति' इति राज्ञे विज्ञाप्य 'चित्रमेनं हनिष्यसि, तथा च सत्यर्थः सिद्ध्यति, रहस्यं च न स्रवति' इति मयोक्ते सोऽतिहृष्टः प्रतिपद्य मामेव त्वदुपप्रलोभने नियुज्य बहिरवस्थितः प्राप्तमितः परं चिन्त्यताम्' इति। प्रीतेन च मयोक्तम्,

---

नोच्छेत्स्यति हिंसां तव न करिष्यति। अयमर्थः—राजकन्यासमागमात्मकः अर्थानुबन्धी राज्यप्राप्तिरूपमङ्गलदायी। **तातेति**। निजत्वद्योतकमिदं संबोधनम्। नाराध्यते अयमुपायो नाश्रीयते। बन्धनागारभित्तेः कारागृहकुड्यादारभ्य। 'भित्तिः स्त्री कुड्यमेडूकम्' इत्यमरः। व्यामत्रयं विस्तृतभुजयुगलमध्यरूपपरिमाणविशेषत्रिकम्। 'व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्' इत्यमरः। अन्तरालं मध्यभागम्। आरामप्राकारस्योपवनावरणभित्तेः। 'आरामः स्यादुपवनम्' 'प्राकारो वरणः सालः' इत्यमरः। हस्तवता खनने हस्तचातुर्ययुक्तेन। ऐकागारिकेण स्तेनेन। 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः' इत्यमरः। 'ऐकागारिकट् चौरे' इति निपातनात्साधुता। तत्प्रमाणं व्यामत्रयात्मकं यस्यास्तादृशीम्। 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुप्। सुरङ्गां भूमिच्छिद्रम्। उपरिष्टादुपवनप्रवेशानन्तरम्। रक्षा गुप्तिरस्मदायत्तैवास्मदधीनैव। अवश्यं वयं त्वां गोपायिष्यामः इति भावः। 'अधीनो निघ्न आयत्तः' इत्यमरः। भेत्स्यति प्रकटीकरिष्यति। सगरसुतानां सगरराजपुत्राणां मध्येऽन्यतम इव तद्वदतिनिपुणः इत्यर्थः। लब्धो वशीभूतः। निरदिक्षदादिष्टवान्। एहि मया साकमागच्छ। चित्रैर्नानाविधैः। तेन चर्मरत्नमोषकेणापहारवर्मणाऽभिसंधाय प्रतिज्ञां कृत्वा। निगडयित्वा निबध्य। सर्वथा सर्वैः प्रकारैरुपक्रान्तो वशीकृतोऽपि। धाष्टर्यभूमिर्धैर्यशाली। **तथा च सतीति**। सुरङ्गाकरणानन्तरं तस्य चित्रवधे च कारिते। अर्थः राजकन्यासंगमरूपकार्यम्। न स्रवति लोकैर्विदितं न भवति। स कान्तकः। प्रतिपद्य मदुक्तमङ्गीकृत्य त्वदुपप्रलोभने तव वञ्चनार्थम्। नियुज्य प्रेरयित्वा। इतःपरमस्मादनन्तरं प्राप्तं कर्तव्यं चिन्त्यतां त्वयैव विचार्य कथ्यताम्। 'प्राप्तं युग्यं च कर्तव्यम्' इति वैजयन्ती। **प्रीतेनेति**। कर्णे यथा मयोपादिष्टं तथैवाचरणात्तुष्टेन।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

'मदुक्तमल्पम्, त्वन्नय एवात्र भूयान् । आनयैनम्' इति । अथानीतेनामुना मन्मोचनाय शपथः कृतः, अहं च रहस्यानिर्भेदाय विनिगडीकृतश्च स्नानभोजनविलेपनान्यनुभूय नित्यान्धकाराद्भित्तिकोणादारभ्योरगास्येन सुरङ्गामकरवम्। अचिन्तयं चैवम्—'हन्तुमनसैवामुना मन्मोचनाय शपथः कृतः । तदेनं हत्वापि नासत्यवाददोषेण स्पृश्ये' इति । निष्पततश्च मे निगडनाय प्रसार्यमाणपाणेस्तस्य पादेनोरसि निहत्य पतितस्य तस्यैवासिधेन्वा शिरो न्यकृन्तम् । अकथयं च शृगालिकाम्—'भण भद्रे, कथंभूतः कन्यापुरसंनिवेशः ? महानयं प्रयासो मा वृथैव भूत् । अमुत्र किंचिच्चोरयित्वा निवर्तिष्ये' इति । तदुपदर्शितविभागे चावगाह्य कन्यान्तःपुरं प्रज्वलत्सु मणिप्रदीपेषु नैकक्रीडाखेदसुप्तस्य परिजनस्य मध्ये महितमहार्घरत्नप्रत्युप्तसिंहाकारदन्तपादे हंसतूलगर्भशय्योपधानशालिनि कुसुमविच्छुरितपर्यन्ते पर्यङ्कतले दक्षिणपादपार्ष्ण्यधोभागानुवलितेतरचरणाग्रपृष्ठम्, ईषद्विवृत्तमधुरगुल्फसंधि, परस्पराश्लिष्टजङ्घाकाण्डम्, आकुञ्चितकोमलोभयजानु,

---

त्वन्नयो भवतया एव नीतिः । भूयानधिकः । आनयैनं बहिः स्थितं कान्तकमन्तराहूय । रहस्यस्य गोप्यस्यानिर्भेदायाप्रकाशनार्थम् । विनिगडीकृतो बन्धनान्मोचितः । नित्यमेवान्धकारस्तमो यत्र तद्दशात् । उरगास्येन फणिमुखाकारेण खननोपकरणेन । हन्तुमनसैव सुरङ्गाकरणानन्तरं नियमेन मां हन्तुमुद्युक्तेनैव । 'तुं काममनसोरपि' इत्यनुस्वारलोपः । एनं हत्वाऽपि अस्य हनने कृतेऽपि । असत्यवाददोषेण मिथ्याभाषणजनितपापेन । मे निगडनाय मां बद्धुं निष्पततः आगच्छतः । निहत्य ताडयित्वा । असिधेन्वा छुरिकया 'छुरिका चासिधेनुका' इत्यमरः । न्यकृन्तं छिनद्मि स्म । 'कृती छेदने' 'शे मुचादीनाम्' इति नुम् । भण कथय । कन्यापुरस्य सन्निवेशः संस्थानम् । 'संस्थानं सन्निवेशे च' इति वररुचिः । अयं प्रयासः सुरङ्गाकरणे यत्नः । मा वृथा भूत् निष्प्रयोजनो न सम्पद्यताम् । 'न माङ्योगे' इत्यडभावः । अमुत्र कन्यान्तःपुरप्रदेशे । **तदुपदर्शितेति** । तया शृगालिकाभिधया परिचारिकयोपदर्शिते निर्दिष्टे प्रविभागे प्रदेशे । अवगाह्य प्रविश्य । कन्याया राजकुमार्या अम्बालिकानाम्न्या अन्तःपुरमवरोधगृहम् । मणिप्रदीपेषु रत्नमयदीपिकासु । नैकाः नानाप्रकारा याः क्रीडा विहारास्तासां खेदेन तज्जनितपरिश्रमेण सुप्तस्य निद्रितस्य । महितैः श्रेष्ठैर्महार्घैरमूल्यैश्च रत्नैर्वज्रादिभिः प्रत्युप्ताः खचिताः सिंहाकाराः सिंहसदृशाश्च दन्तपादा गजदन्तकृताः पादा यस्य तथाविधे इति पर्यंकविशेषणम् । हंसतूला हंसरोमाणि गर्भे मध्यदेशे ययोस्तादृशाभ्यां शय्योपधानाभ्यामास्तरणोपबर्हाभ्यां शालिनि शोभिते । 'उपधानं तूपबर्हः' इत्यमरः । कुसुमैः सुमनोभिर्विच्छुरितः व्याप्तः पर्यन्तः परिसरप्रदेशो यस्य तथाभूते । 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्' इत्यमरः । 'पर्यन्तभूः परिसरः' इति च । पर्यङ्कतले मञ्चस्योपरिभागे । 'शयनं मञ्चपर्यंकपल्यंकाः खट्वया समाः' इत्यमरः । दक्षिणपादपार्ष्णेः दक्षिणचरणपाश्चात्यभागस्य अधोभागेनानुवलित ईषन्नमितः इतरचरणस्य वामपादस्याग्रपृष्ठ अग्रभागाधस्तलं यस्मिन्कर्माणि तद्यथा तथेति वक्ष्यमाणं च सर्वं क्रियाविशेषणम् । पार्ष्णिः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

किंचिद्वेल्लितोरुदण्डयुगलम्, अधिनितम्बस्रस्तमुक्तैकभुजलताग्रपेशलम्, अपाश्रयान्तनिमिताकुञ्चितेतरभुजलतोत्ताननतलकरकिसलयम्, आभुग्नश्रोणिमण्डलम्, अतिश्लिष्टचीनांशुकान्तरीयम्, अनतिवलिततनुतरोदरम्, अतनुतरनिःश्वासारम्भकम्पमानकठोरकुचकुड्मलम्, आतिरश्चीनबन्धुरशिरोधरोद्देशदृश्यमानानिष्टप्ततपनीयसूत्रपर्यस्तपद्मरागरुचकम्, अर्धलक्ष्याधरकर्णपाशनिभृतकुण्डलम्, उपरिपरावृत्तश्रवणपाशरत्नकर्णिकाकिरणमञ्जरीपिञ्जरितविषयव्याविद्धाशिथिलशि-

---

'पुमान्पार्ष्णिस्तयोरघः' इत्यमरः। ईषद्विवृत्तौ किंचिद्वक्रीकृतौ मधुरौ मनोज्ञौ च गुल्फसंधी यस्मिन् कर्मणि। 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः। परस्पराश्लिष्टावन्योन्यं मिलितौ जंघाकाण्डौ यस्मिन् कर्मणि तथा।'जंघा तु प्रसृता' इत्यमरः। आकुञ्चिते ईषद्वक्रीकृते कोमले मनोहरे च उभे जानुनी ऊरुपर्वणी यस्मिन्। 'जानूरुपर्वाष्ठीवदस्त्रियाम्' इत्यमरः। ऊरुदण्डौ सक्थिस्तम्भौ। 'सक्थि क्लीबे पुमानूरुः' इत्यमरः। अधिनितम्बं कटिपश्चाद्भागे 'अव्ययं विभक्ति-' इत्यव्ययीभावः' स्रस्तमुक्तैः निक्षिप्तैरेकभुजलताया अग्रैरंगुलिभिः पेशलं मनोज्ञं यथा तथा। 'पश्चान्नितम्बः स्त्रीकट्याः' इत्यमरः। अपाश्रयान्ते शिरोभागैकदेशे निमितं निक्षिप्तम्। 'डुमिञ् प्रक्षेपणे। इत्यतः क्तः। आकुञ्चिताया वक्रीकृताया इतरभुजलताया अन्यबाहुवल्ल्याः उत्तानतलम् ऊर्ध्वं स्थापितपुरोभागम् यत् करकिसलयं पल्लववदतिमृदुलो हस्त इत्यर्थः। तादृशं करकिसलयं शिरोभागे निहितं यस्मिन्कर्मणि। 'भुजबाहू प्रवेष्टो दोः' 'बलिहस्तांशवः कराः' इत्यमरः। 'पल्लवोऽस्त्री किसलयम्' इति च। आभुग्नं किञ्चित्संकुचितं श्रोणिमण्डलं कटिमण्डलं यथा तथा। 'कटिः श्रोणिःककुद्मती'इत्यमरः। आतिश्लिष्टं नितरां साधुतया संबद्धं चीनांशुकस्य चैनदेशवस्त्रस्यान्तरीयमधोवस्त्रं यथा तथा। 'वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम्' 'अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके' इत्यमरः। तनुतरमातिकृशमुदरं कुक्षिदेशो यथा तथा। 'पिचण्डकुक्षी जठरोदरं तुन्दम्' इत्यमरः। अतनुतरोऽतिदीर्घो यो निःश्वासस्तस्यारम्भेण कम्पमानौ किंचिच्चलौ कठोरौऽतिकठिनौ च कुचकुड्मलौ मुकुलाकारौ स्तनौ यस्मिन्कर्मणि तथा। 'कठोरं कठिनं तीक्ष्णम्' इति हैमः। 'स्तनौ कुचौ' 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः। आतिरश्चीन इषत्तिर्यक्कृतः बन्धुरो मनोज्ञश्च यः शिरोधरोद्देशः ग्रीवाप्रदेशः। 'अथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः। तत्र दृश्यमानः। अवलोक्यमानः, निष्टप्ततपनीयसूत्रे नितान्तं वह्निशुद्धस्वर्णतन्तौ पर्यस्तः प्रोतः पद्मरागरुचकः पद्मरागरत्नमयाभरणविशेषः अवलोक्यमानो यथा तथा। 'तपनीयं शातकुम्भं गांगेयं भर्म कर्बुरम्' इत्यमरः। 'रुचकोऽङ्गुलिकामणिः' इति वैजयन्ती। अर्धलक्ष्यम् ईषद्दृश्यमान अधरकर्णपाशः शयने नीचैः स्थापितकर्णदेशः तत्र निभृतं निश्चलतया स्थितं कुण्डलं कर्णभूषणमर्धलक्ष्यं यस्मिन्कर्मणि। 'अधस्तादपिचाधरः' 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः। उपरि परावृत्तः शयनकाले उत्तानतया स्थापितो यः श्रवणपाशस्तत्रत्याया रत्नकर्णिकाया रत्नकृतकर्णवेष्टनस्य किरणमञ्जर्या कान्तिश्रेण्या पिञ्जरितः विशङ्गीकृतः विषमव्याविद्धो वक्रतया बद्धः वेणीकृत इति यावत्। अत एवाशिथिलः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

खण्डबन्धम्, आत्मप्रभापटलदुर्लक्ष्यपाटलोत्तराधरविवरम्, गण्डस्थलीसंक्रान्तहस्तपल्लवदर्शितकर्णावतंसकृत्यम्, उपरिकपोलादर्शतलनिषक्तचित्रवितानपत्रजातजनिताविशेषकक्रियम्, आमीलितलोचनेन्दीवरम्, अविश्रान्तभ्रूपताकम्, उद्भिद्यमानश्रमजलपुलकाभिन्नाशिथिलचन्दनातिलकम्, आननेन्दुसंमुखालकलतं च विश्रब्धप्रसुप्तामतिधवलोत्तरच्छदनिमग्नप्रायैकपार्श्वतया चिरविलसनखेदनिश्चलां शरदम्भोधरोत्सङ्गशायिनीमिव सौदामिनीं राजकन्यामपश्यम् । दृष्ट्वैव स्फुरदनङ्गरागश्चकितश्चोरयितव्यनिस्पृहस्तयैव तावच्चोर्यमाणहृदयः किंकर्तव्यतामूढः क्षणमतिष्ठम् । अतर्कयं च–'न चेदिमां वामलोचनामाप्नुयां न मृष्यति

---

न स्रस्तश्च शिखण्डबन्धः केशपाशः यथा तथा । 'कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम्' इत्यमरः । 'कर्णललाटात्कनलंकारे' इति कन् । आत्मनोरुत्तराधरोष्ठयोः प्रभापटलेन कान्तिजालेन दुर्लक्ष्यं विविच्य ज्ञातुमेयाग्यं पाटलयोः श्वेतरक्तयोरुत्तराधरयोर्द्वयोरोष्ठयोः विविरं रन्ध्रं मध्यदेशः यस्मिन्कर्मणि यथा तथा । 'श्वेतरक्तस्तु पाटलः' इत्यमरः । गण्डस्थल्यां कपोलदेशे संक्रान्तः संश्लिष्टो यो हस्तपल्लवः करकिसलयं तेनैव दर्शितं प्रकटितं कृतमिति यावत् । कर्णावतंसस्य कर्णभूषणस्य कृत्यं कार्यं यथा तथा । उपरि कपोलः शयनकाले उत्तानतया स्थितो गण्डदेशः स एवादर्शो नैर्मल्यात् दर्पणस्तस्य तले निषक्तं प्रतिफलितं यच्चित्रवितानमुल्लोचस्तत्रत्येन पत्रजातेन तिलकविशेषजालेनैव जनिता संपादिता विशेषकक्रिया चित्रकरचना यस्मिन् कर्माणि । 'दर्पणे मुकुरादर्शौ' 'अस्त्री वितानमुल्लोचः' 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । अविश्रान्ते निद्रावस्थया निश्चले भ्रूपताके यथा तथा । उद्भिद्यमानैरुत्पद्यमानैः श्रमजलपुलकैः स्वेदबिन्दुभिः भिन्नं मिश्रितमत एव शिथिलं ललाटात्प्रच्युतं चन्दनतिलकं यस्मिन्कर्माणि । 'पुलको बिन्दुरोमाञ्चयोरपि' इति वैजयन्ती । आननेन्दोर्मुखचन्द्रस्य संमुखास्तत्र प्रलम्बमाना अलकलताश्चूर्णकुन्तलवल्ल्यो यथा तथा। 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । विश्रब्धप्रसुप्तां निःशङ्कं निद्रिताम् । अतिधवले नितान्तं शुभ्रे उत्तरच्छदे उत्तरास्तरणे निमग्नप्रायः प्रायेणान्तरितः एकः पार्श्वः यस्यास्तादृशतया । चिरं बहुकालपर्यन्तविलसनेन स्फुरणेन यः खेदः आयासस्तेन निश्चलां निष्कम्पतया स्थिताम् । शरदम्भोधरस्य शरन्मेघस्योत्सङ्गशायिनीमङ्कवर्तिनीम् । सौदामिनीं विद्युतमिव । 'उत्सङ्गचिह्नयोरङ्कः' 'तडित्सौदामिनी विद्युत्' इत्यमरः । अपश्यं दृष्टवान् । **दृष्ट्वैवेति** । दर्शनसमकालमेव । स्फुरन्समुत्पद्यमानः अनङ्गरागो मन्मथानुरागो यस्य तादृशः । 'कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः' इत्यमरः । चकितो राजकन्या मां वीक्ष्य रक्षकेभ्यः प्रदास्यतीति भयात्कम्पितः । चोरयितव्ये मोषणीयवस्तुजाते निःस्पृहः निरभिलाषः । तयैवाम्बालिकया चौर्यमाणमपह्रियमाणं हृदयं मनो यस्यैतादृशः सन् । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । किंकर्तव्यतामूढः ततः परं किं वा कर्तव्यमित्यत्र विषयेऽसमर्थः । क्षणं कियत्कालपर्यन्तमतिष्ठं तूष्णीमासम् । **अतर्कयं चेति** । वक्ष्यमाणप्रकारेण मनसा विचारं च कृतवान् । वामे लोचने यस्यास्तां सुन्दराक्षीमित्यर्थः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मां जीवितुं वसन्तबन्धुः। असंकेतितपरामृष्टा चेयमतिबाला व्यक्तमार्तस्वरेण निहन्यान्मे मनोरथम्। ततोऽहमेवाहन्येय। तादियमत्र प्रतिपत्तिः' इति। नागदन्तलग्ननिर्यासकल्कवर्णितं फलकमादाय मणिसमुद्गकाद्वर्णवर्तिकामुद्धृत्य तां तथाशयानां तस्याश्च मामावद्धाञ्जलिं चरणलग्नमालिखमार्यां चैताम्—

'त्वामयमावद्धाञ्जलि दासजनस्तामिममर्थमर्थयते।
स्वपिहि मया सह सुरतव्यतिकरखिन्नेव मा मैवम्॥'

हेमकरण्डकाच्च वासताम्बूलवीटिकां कर्पूरस्फुटिकां पारिजातकं चोपयुज्यालक्त-

---

'वामौ वल्गु प्रतीपौ द्वौ' इत्यमरः। न चेत् आप्नुयां यदि न प्राप्स्ये। न मृष्यति न सहिष्यते, 'मृष तितिक्षायाम्' इत्यतो 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यदर्थे लट्। वसन्तः कुसुमोद्गमसमयः बन्धुः सहायो यस्य स मन्मथ इत्यर्थः। असंकेतितपरामृष्टा पूर्वं शृगालिकादिद्वारा संकेतमकृत्वैवेदानीं मया स्पृष्टा सती। व्यक्तं स्फुटमार्तस्वरेण दैन्यसूचकस्वरेण मे मनोरथमभिलाषं निहन्यान्निष्फलीकुर्यात्। ततः आर्तस्वरश्रवणानन्तरमहमेवापहारवर्माऽऽहन्येय हिंसितो भविष्यामीत्यर्थः। रक्षकपुरुषैरिति शेषः। तत्पूर्वोक्तप्रकारेणानर्थोत्पत्तेः जायमानत्वात्। इत्थं वक्ष्यमाणप्रकारा प्रतिपत्तिः कर्तव्यता। इति मनसि विचार्येत्यर्थः। नागदन्तोऽवलम्बनदारु। 'नागदन्तो द्विपरदे गृहान्निर्गतदारुणि' इति विश्वः। तत्र लग्नं विन्यस्तं निर्यासकल्केन मसृणद्रव्यरसेन वर्णितं चित्रितं च फलकं काष्ठफलकम्। मणिसमुद्गकाद्रत्नमयसंपुटात् 'समुद्गकः संपुटकः' इत्यमरः। वर्णवर्तिकां चित्रलेखनीम्। 'तूलिका वर्णवर्तिका' इति वैजयन्ती। तथा पूर्वोक्तप्रकारेण शयानां निद्रां कुर्वतीं तामम्बालिकाम्। तस्याश्च चरणलग्नं पादयोः पतितम् आवद्धाञ्जलिं कृतप्रणामाञ्जलिं मामपहारवर्माणमिमामार्यां च वक्ष्यमाणमार्यावृत्तलक्षणघटितपद्यं चालिखं लिखितवान्। 'यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या' इति श्रुतबोधबोधितं च लक्षणं ज्ञेयम्।

**त्वामिति।** **अयम्** अपहारवर्माख्यो **दासजनः** सेवकः **आबद्धाञ्जलि** कृताञ्जलि यथातथा **त्वाम्** अम्बालिकाभिधामङ्गराजकन्याम् **तमिममर्थम्** अनुपदं वक्ष्यमाणं कार्यम् **अर्थयते** याचते। 'दुह्याचूपचू—' इत्यत्राथग्रहणस्य भाष्यकारेष्टत्वादत्र द्विकर्मता। **मया सह सुरतव्यतिकरखिन्नेव** यः सुरतव्यतिकरः रतिक्रीडाव्यापारस्तेन खिन्ना क्लेशं प्राप्ता सत्येव **स्वपिहि** निद्रां कुरु। **एवम्** एकाकिनी मां विना **मा मा** निद्रां मा कुर्वित्यर्थः। 'अत्यन्तमनुचिता तवैकाकिन्या निद्रेति द्योतनाय माङो द्विरुक्तिः।

**हेमकरण्डकात्** काञ्चनमञ्जूषायाः। 'हिरण्यं हेम हाटकम्' इत्यमरः। वासताम्बूलवीटिकां 'घनसारादिभिर्यत्तु वासितं वासमुच्यते' इति वैजयन्त्युक्तप्रकारेण सुरभीकृतां नागवल्लीदलवीटीम्। 'नागवल्लीपलाशानां त्वेलाक्तानां रसालतः। वेष्टनं वीटिका प्रोक्ता चन्द्रमन्दारवर्णयुक्' इति वीटिकालक्षणं वात्स्यायने प्रसिद्धम्। कर्पूरस्फुटिकां घनसारगोलीम्। पारिजातकं सुवासित-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कपाटलेन तद्रसेन सुधाभित्तौ चक्रवाकमिथुनं निरष्ठीवम् । अंगुलीयकविनिमयं च कृत्वा कथंकथमपि निरगाम् । सुरङ्गया च प्रत्येत्य बन्धागारं तत्र बद्धस्य नागरिकवरस्य सिंहघोषनाम्नस्तेष्वेव दिनेषु मित्रत्वेनोपचरितस्य 'एवं मया हत-स्तपस्वी कान्तकः, तत्त्वया प्रतिभिद्य रहस्यं लब्धव्यो मोक्षः' इत्युपदिश्य सह शृगालिकया निरक्रामिषम् । नृपतिपथे च समागत्य रक्षिकपुरुषैरगृह्ये । अचिन्तयं च—'अलमस्मि जवेनापसर्तुमनामृष्ट एवैभिः । एषा पुनर्वराकी गृह्येत । तदिदमत्र प्राप्तरूपम्' इति तानेव चपलमभिपत्य स्वपृष्ठसमर्पितकूर्परः पराङ्मुखः स्थित्वा 'भद्राः, यद्यहमस्मि तस्करः बध्नीत माम् । युष्माकमयमाधिकारः, न पुनरस्या वर्षीयस्याः' इत्यवादिषम् । सा तु तावतैवोन्नीतमदभिप्राया तान्स-प्रणाममभ्येत्य 'भद्रमुखाः, ममैष पुत्रो वायुग्रस्तश्चिरं चिकित्सितः । पूर्वेद्युः प्रसन्नकल्पः प्रकृतिस्थ एव जातः । जातास्थया मया बन्धनान्निष्क्रमय्य स्नापि-तोऽनुलेपितश्च परिधाप्य निष्प्रवाणियुगलमभ्यवहार्य परमान्नमौशीरेऽद्य.कामचारः

---

खादिरसारं चोपयुज्यास्वाद्य । अलक्तकवत् यावकवत्पाटलेन रक्तवर्णेन तद्रसेन ताम्बूलवीटिका-रसेन । सुधाभित्तौ स्तुहीराञ्जिते कुड्ये । ' सुधालेपोऽमृतं स्तुही ' इत्यमरः । चक्रवाकमि-थुनं रथाङ्गयुग्मम् । ' कोकश्चक्रश्चक्रवाको रथाङ्गह्वायनामकः ' ' स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम् ' इत्यमरः । निरष्ठीवं मुखात्ताम्बूलरसस्य थूत्करणेनैव चित्रितवानित्यर्थः । ' ष्ठिवु निरसने ' ' ष्ठिवुक्लमुचमां शिति ' इति दीर्घः । अंगुलीयकयोरूर्मिकयोर्विनिमयं विपर्यासम् । ' अंगुलीयकमूर्मिका ' इत्यमरः । कथकथमपि महता श्रमेण निरगां बहिरागतः । प्रत्येत्य प्रतिनिवृत्य । तेष्वेव दिनेषु मम बन्धनालयनिवासकाले इत्यर्थः । तपस्वी शोचनीयः । प्रतिभिद्य प्रकाश्य । रहस्यं ' कान्तकेन राजकन्यासंगमार्थं बद्धचोरद्वारा सुरङ्गा कारिता ' इत्येवंरूपं गोप्यम् । मोक्षः कारागृहान्मुक्तिः । नृपतिपथे राजमार्गे । ' ऋक्पूरब्धूःपथामानक्षे ' इति समासान्तोऽप्रत्ययः । अगृह्ये गृहीतः । **अचिन्तयमिति** । अलमस्मि शक्तो भवामि । जवेन वेगेनापसर्तुं गन्तुम् । अनामृष्टोऽस्पृष्टः । वराकी कृपणा । प्राप्तरूपं कर्तुमुचितम् । चप-लमाशु । 'सत्वरं चपलं तूर्णमविलम्बितमाशु च' इत्यमरः । स्वपृष्ठदेशे समर्पितो न्यस्तः कूर्परः कफोणिर्येन तादृशः सन् । ' स्यात्कफोणिस्तु कूर्परः ' इत्यमरः । अयमाधिकारो बन्धना-धिकारः। वर्षीयस्याः स्थविरायाः । ' प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि । वर्षीयान् ' इत्यमरः । तावतैव तावन्मात्रभाषणेनैवोन्नीत ऊहितो मदभिप्रायो यया तादृशी सती । वायुग्रस्तः वातरोगाक्रान्तः । ईषत्प्रसन्नः स्वास्थ्यं प्राप्तः प्रसन्नकल्पः । ' ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ' इति कल्पप् । जातास्थया उत्पन्नादरया । निष्क्रमय्य मोचयित्वा । निष्प्रवाणियुगलं नूतनवस्त्रयुगम् । ' अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे ' इत्यमरः । अभ्य-वहार्य भोजयित्वा । औशीरे वीरणाख्यतृणविशेषमूलकृते शयने । 'स्याद्वीरणं वीरतरं मूलेऽस्यो-शीरमस्त्रियाम्' इत्यमरः । ' औशीरं शयनासनम् ' इति हलायुधः । कामचारः स्वेच्छाकारी ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कृतोऽभूत् । अथ निशीथे भूय एव वायुनिघ्नः 'निहत्य कान्तकं नृपतिदुहित्रा रमेय' इति रंहसा परेण राजपथमभ्यपतत् । निरूप्य चाहं पुत्रमेवंगतमस्यां वेलायामनुधावामि । तत्प्रसीदत । बद्ध्वैनं मह्यमर्पयत' इति यावदसौ क्रन्दति तावदहं 'स्थविरे, केन देवो मातरिश्वा बद्धपूर्वः । किमेते काकाः शौङ्गेयस्य मे निग्रहीतारः । शान्तं पापम्' इत्यभ्यधावम् । असावप्यमीभिः 'त्वमेवोन्मत्ता यानुन्मत्त इत्युन्मत्तं मुक्तवती । कस्तमिदानीं बध्नाति' इति निन्दिता कदर्थिता रुदत्येव मामन्वधावत् । गत्वा च रागमञ्जरीगृहं चिरविरहखेदविह्वलामिमां बहुविधं समाश्वास्य तं निशाशेषमनयम् । प्रत्यूषे पुनरुदारकेण च समगच्छे ।

अथ भगवन्तं मरीचिं वेशकृच्छ्रादुत्थाय पुनः प्रतितप्ततपःप्रभावप्रत्यापन्नादिव्यचक्षुषमुपसंगम्य तेनास्येवंभूतत्वदर्शनमवगमितः । सिंहघोषश्च कान्तकापचारं निर्भिद्य तत्पदे प्रसन्नेन राज्ञा प्रतिष्ठापितः तेनैव चारकसुरङ्गापथेन कन्यापुरप्रवेशं भूयोऽपि मे समपादयत् । समगंसि चाहं शृगालिकामुखानिःसृतवार्ता-

---

निशीथेऽर्धरात्रे । 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः । भूयः पुनरपि । वायुनिघ्नो वायुरोगाधीनः । 'अधीने निघ्न आयत्तः' इत्यमरः । रमेय विहरिष्यामि । रंहसा परेण महता वेगेन । 'रंहस्तरसी तु रयः स्यदः । जवः' इत्यमरः । अभ्यपतदभिमुखीकृत्य धावति स्म । निरूप्य दृष्ट्वा । अस्यां वेलायां निशीथकाले । अनुधावामि पश्चाद्धावामि । प्रसीदतानुग्रहं कुरुत । असौ शृगालिका । क्रन्दत्याक्रोशति । स्थविरे हे वृद्धे ! मातरिश्वा वायुः । 'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः' इत्यमरः । पूर्वं बद्धो बद्धपूर्वः । काका वायसतुल्याः । शौङ्गेयस्य पक्षिविशेषस्य तत्तुल्यस्येति यावत् । 'तिलच्छदस्तु शौङ्गेयो विहङ्गारातिरित्यपि' इति वैजयन्ती । निग्रहीतारो बन्धकाः । शान्तं पापमित्यनाकाङ्क्षायाम् । एतत्कर्तृकमद्बन्धनं स्वप्नेऽप्यनाकाङ्क्षितमिति भावः । अभ्यधावं वेगेन पलायनं कृतवान् । 'धावु गतिशुद्धयोः' । उन्मत्ता उन्मादवती । मुक्तवती बन्धनान्मोचितवती । कदर्थिता धिक्कृता । चिरविरहखेदेन बहुकालिकवियोगदुःखेन पीडितां बहुविधं नानाप्रकारेण समाश्वास्य सान्त्वयित्वा । निशाशेषं रात्र्यवशेषम् । अनयं यापयामि स्म । प्रत्यूषे प्रातःकाले । 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः । समगच्छे संमिलितोऽभूवम् । 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदम् ।

**अथेति** । कारागृहान्निर्गमनानन्तरम् । भगवन्तम् 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना' इत्युक्तषडैश्वर्ययुक्तम् । वेशकृच्छ्रात् वेश्यागृहसंकटात् । उत्थाय परावृत्य । प्रत्यापन्नं प्राप्तं दिव्यचक्षुर्ज्ञानचक्षुर्येन तादृशम् । उपसंगम्य तत्समीपं गत्वा । तेन मरीचिना । अवगमितोऽस्मि बोधितोऽस्मि । कान्तकस्यापचारं कन्यादूषणोद्योगरूपदुष्कृत्यं निर्भिद्य प्रकाश्य । तत्पदे कान्तकस्य स्थाने कारागृहाधिकारित्वरूपे । चारकसुरङ्गापथेन मद्विहितेन बन्धनागारस्थेन बिलमार्गेण । समपादयत्कारयामास । समगंसि संगच्छे स्म । शृगालिकाया मुखान्निःसृताभिर्निर्गताभिर्वार्ताभिर्मत्कथाभिरनुरक्तया सञ्जात-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

नुरक्तया राजदुहित्रा । तेष्वेव दिवसेषु चण्डवर्मा सिंहवर्मावधूतदुहितृप्रार्थनः कुपितोऽभियुज्य पुरमवारुणत् । अमर्षणश्चाङ्गराजो यावदरिः पारग्रामिकं विधिमाचिकीर्षति तावत्स्वयमेव प्राकारं निर्भिद्य प्रत्यासन्नानपि सहायानप्रतीक्षमाणो निर्गत्याभ्यधिकबलेन विद्विषा महति संपराये भिन्नवर्मा सिंहवर्मा बलादगृह्यत । अम्बालिका च बलवदभिगृह्य चण्डवर्मणा हठात्परिणेतुमात्मभवनमनीयत । कौतुकं च स किल क्षपावसाने विवाह इत्यबध्नात् । अहं च धनमित्रगृहे तद्विवाहायैव पिनद्धमङ्गलप्रतिसरस्तमेवमवोचम्—'सखे, समापतितमेवाङ्गराजाभिसरं राजमण्डलम् । सुगूढमेव संभूय पौरवृद्धैस्तदुपावर्तय । उपावृत्तश्च कृत्तशिरसमेव शत्रुं द्रक्ष्यसि' इति । 'तथा' इति तेनाभ्युपगते गतायुषोऽमुष्य भवनमुत्सवाकुलमुपसमाधीयमानपरिणयोपकरणमितस्ततः प्रवेशनिर्गमप्रवृत्तलोकसंबाधमलक्ष्यशस्त्रिकः सह प्रविश्य मङ्गलपाठकैरम्बालिकापाणिपल्लवमग्नौ साक्षिण्याथर्वणेन विधिनार्प्यमाणमादित्समानस्यायामिनं बाहुदण्डमाकृष्य च्छुरिकयोरसि प्राहर्षम् । स्फुरतश्च कतिपयानन्यानपि

---

प्रीत्या । अभियुज्यावमान्य 'अभियोगस्त्वभिभवः' इति हैमः । पुरं चम्पापुरीम् । अवारुणत् युद्धायावृतवान् । अमर्षणः तत्कृतावमानमसहमानः । अरिः शत्रुश्चण्डवर्मा । पारग्रामिकं परग्रामे शत्रुनगरे भवं पारग्रामिकं तद्ध्वंसनादिकमाचिकीर्षति कर्तुमिच्छति । तावत् ततःपूर्वमेव । प्राकारमावरणभित्तिम् । 'प्राकारो वरणः सालः' इत्यमरः । निर्भिद्य विदार्य । प्रत्यासन्नान् समीपमागतान् । अप्रतीक्षमाणः न प्रतिपालयन् । विद्विषा शत्रुणा । संपराये युद्धे । भिन्नं कृत्तं वर्म कवचं यस्य तादृशः । 'तनुत्रं वर्म दंशनम्' इत्यमरः । अगृह्यत निगृहीतः । परिणेतुं पाणिग्रहणार्थम् । आत्मभवनं स्वगृहम् ।'प्रधाने नीहृकृष्वहाम्' इत्युक्त्या प्रधानकर्मणोऽम्बालिकाया अभिहितत्वात्प्रथमा । कौतुकं मङ्गलकङ्कणम् । क्षपावसाने रात्रिशेषे श्वः प्रभात इत्यर्थः । तद्विवाहायैव तस्या अम्बालिकायाः एव पाणिग्रहणार्थम् । पिनद्धः बद्धः मङ्गलप्रतिसरं माङ्गलिकहस्तसूत्रं येन तादृशः सन् । 'ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्' इत्यमरः । तं धनमित्रम् । अङ्गराजस्य सिंहवर्मणः अभिसरं साहाय्यदायि । 'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः' इत्यमरः । सुगूढं गुप्तमेव । सम्भूय पौरवृद्धैर्नागरिकमुख्यैर्मिलित्वा । तद्राजमण्डलमुपावर्तय योग्यस्थाने निवेशय । उपावृत्तश्च पुनरागतश्च । कृत्तं छिन्नं शिरो यस्यैतादृशमेव । 'कृती छेदने'। शत्रुममित्रं चण्डवर्माणम् । अभ्युपगतेऽङ्गीकृते । गतायुष आसन्नमृत्योः। अमुष्य चण्डवर्मणः । उपसमाधीयमानं संनिधाप्यमानं परिणयोपकरणं विवाहार्हसामग्री यस्मिन्नेतादृशम् । संबाधं निविडीकृतम् । 'संकटं ना तु संबाधः' इत्यमरः । अलक्ष्या प्रच्छन्नीकृता शस्त्रिका छुरिका यस्य तथाविधः सन् । मङ्गलपाठकैस्तत्पाठार्थं गच्छद्भिः विप्रैः सह । आथर्वणेन पुरोहितेन । 'आथर्वणः पुरोधाः स्याच्छान्तिपुष्टिकरो द्विजः' इति कामन्दकीये । विधिना श्रुत्युक्तप्रकारेण, आदित्समानस्य ग्रहीतुकामस्य । आयामिनमतिदीर्घम् । छुरिकया



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

यमविषयमगमयम् । हतविध्वस्तं च तद्गृहमनु विचरन्वेपमानमधुरगात्रीं विशाललोचनामभिनिशाम्य तदालिङ्गनसुखमनुबुभूषुस्तामादाय गर्भगृहमविक्षम् । अस्मिन्नेव क्षणे तवास्मि नवाम्बुवाहस्तानितगम्भीरेण स्वरेणानुगृहीतः' इति ।

श्रुत्वा च स्मित्वा च देवोऽपि राजवाहनः 'कथमसि कार्कश्येन कर्णीसुतमप्यतिक्रान्तः' इत्यभिधाय पुनरवेक्ष्योपहारवर्माणम् 'आचक्ष्व, तवेदानीमवसरः' इत्यभाषत । सोऽपि सस्मितं प्रणम्यारभताभिधातुम् ।

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽपहारवर्मचरितं नाम द्वितीय उच्छ्वासः ।

## तृतीयोच्छ्वासः ।

एषोऽस्मि पर्यटन्नेकदा गतो विदेहेषु । मिथिलामप्रविश्यैव बहिः क्वचिन्मठिकायां विश्रमितुमेत्य कयापि वृद्धतापस्या दत्तपाद्यः क्षणमलिन्दभूमाववास्थिषि । तस्यास्तु मद्दर्शनादेव किमप्याबद्धधारमश्रु प्रावर्तत । 'किमेतदम्ब, कथय कारणम्' इति पृष्टा सकरुणमाचष्ट—'जैवातृक, ननु श्रूयते पतिरस्या

---

शास्त्रिकया । प्राहार्षं प्रहृतवान् । यमविषयं धर्मराजदेशम् । 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः । अगमयं प्रापयामि स्म । तद्गृहं चण्डवर्मगृहम् । वेपमानानि कम्पमानानि मधुराणि मनोहराणि च गात्राणि अङ्गानि यस्याः तादृशीम् । अभिनिशाम्य सादरमवलोक्य । 'शमो दर्शने' इति मित्त्वनिषेधाद्दर्शने ह्रस्वो न भवति । अनुबुभूषुरनुभवितुमिच्छुः । आदाय गृहीत्वा । गर्भगृहं वासगृहम् । नवो नूतनो योऽम्बुवाहो मेघस्तस्य स्तनितवद्गर्जितवद्गम्भीरेण । अनुगृहीतः सन्तोषं प्रापितः ।

श्रुत्वेति । कार्कश्येन क्रौर्येण । कर्णीसुतं चौर्यशास्त्रप्रवर्तकमपि । अभिधाय कथयित्वा । आचक्ष्व कथय । 'चक्षिङ् व्यक्तायां वाचि' । अवसरः कथनाय योग्यः समयः । सोऽप्युपहारवर्मा । प्रणम्य नमस्कृत्य । अभिधातुं स्ववृत्तान्तं वर्णयितुमारभतोपक्रान्तवान् ॥

इति श्रीदशकुमारचरितव्याख्यायां मनोरमाख्यायामुत्तरपीठिकायां द्वितीय उच्छ्वासः ॥२॥

### अथोत्तरपीठिकायां तृतीय उच्छ्वासः ॥ ३ ॥

इदानीमात्मवृत्तवर्णनायोपक्रमत उपहारवर्मा—एषोऽस्मीति । अस्मीत्यहमर्थेऽव्ययम् । पर्यटन्नितस्ततो भवदन्वेषणार्थं भ्रमन् । विदेहेषु तदाख्येषु देशेषु । मिथिलां तन्नामिकां विदेहराजधानीमप्रविश्यैव ततो बहिरेवेत्यर्थः । क्वचिन्मठिकायां कस्मिंश्चित्क्षुद्रमठे । 'मठश्छात्रादिनिलयः' इत्यमरः । 'अल्पे' इति सूत्रेण कन्प्रत्ययः । विश्रमितुमध्यायासं परिहर्तुमेत्य गत्वा । पादार्थमुदकं पाद्यं 'पादार्घाभ्यां च' इति यत्प्रत्ययः । 'पाद्यं पादाय वारिणि' इत्यमरः । दत्तं पाद्यं यस्मै तादृशः । क्षणं किञ्चित्कालपर्यन्तम् । अलिन्दभूमौ द्वारबहिर्देशे । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । अवास्थिषि उपविष्टः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । आबद्धधारमविच्छिन्नसंपातमश्रु नेत्रोदकं प्रावर्तत निःसरति स्म । अम्ब हे मातः ! । 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः । कथय कारणमश्रुपातस्येति शेषः । आचष्ट प्रोक्तवती । जैवातृक हे

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मिथिलायाः प्रहारवर्मा नामासीत् । तस्य खलु मगधराजो राजहंसः परं मित्रमासीत् । तयोश्च वल्लभे बलशम्बलयोरिव वसुमतीप्रियंवदे सख्यमप्रतिममधत्ताम् । अथ प्रथमगर्भाभिनन्दितां तां च प्रियसखीं दिदृक्षुः प्रियंवदा वसुमतीं सह भर्त्रा पुष्पपुरमगमत् । तस्मिन्नेव च समये मालवेन मगधराजस्य महज्जन्यमजनि । तत्र लेशतोऽपि दुर्लक्ष्यां गतिमगमन्मगधराजः । मैथिलेन्द्रस्तु मालवेन्द्रप्रयत्नप्राणितः स्वविषयं प्रतिनिवृत्तो ज्येष्ठस्य संहारवर्मणः सुतैर्विकटवर्मप्रभृतिभिर्व्याप्तं राज्यमाकर्ण्य स्वस्रीयात्सुह्मपतेर्दण्डावयवमादित्सुरटवीपदमवगाह्य लुब्धकलुप्तसर्वस्वोऽभूत् । तत्सुतेन च कनीयसा हस्तवर्तिना सहैकाकिनी वनचरशरवर्षभयपलायिता वनमगाहिषि । तत्र च मे शार्दूलनखावलीढनिपतितायाः

---

चिरंजीविन् ! ' जैवातृकः स्यादायुष्मान्' इत्यमरः । तस्य प्रहारवर्मणः । तयोः राजहंसप्रहारवर्मणोः । वल्लभे प्रियमहिष्यौ । अप्रतिमं नितरां दृढमित्यर्थः । प्रथमगर्भेण आद्यगर्भधारणेनाभिनन्दितां परितुष्टाम् । दिदृक्षुः द्रष्टुकामा सती । सह भर्त्रा स्वनायकेन प्रहारवर्मणा साकम् । पुष्पपुरं तन्नामिकां मगधदेशराजधानीम् । अगमत् गता । **तस्मिन्नेवेति** । पुष्पपुरगमनकाले इत्यर्थः । मालवेन तद्देशाधिपेन मानसाराख्येण शत्रुणा सह । जन्यं युद्धम् । ' युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ' इत्यमरः । अजनि उत्पद्यते स्म । ' जनी प्रादुर्भावे ' इत्यतः कर्तरि लुङि ' दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ' इति च्लेश्चिण् । तत्र तस्मिन्युद्धे । लेशतोऽपि किंचिदपि । दुर्लक्ष्यां ज्ञातुमशक्याम् । गतिं दुरवस्थाम् । मगधराजो राजहंसः । ' राजाहःसखिभ्यष्टच्' इति समासान्तः टच् प्रत्ययः । मालवेन्द्रस्य मानसाराख्यस्य । प्रयत्नेन किंचित्साहाय्यादिति भावः । प्राणितः जीवितः दयया सजीवः परित्यक्त इति यावत् । स्वविषयं विदेहाभिधं स्वदेशम् ।' नीवृज्जनपदो देशविषयौ तूपवर्तनम् ' इत्यमरः । प्रतिनिवृत्तः प्रत्यागतः ज्येष्ठस्य ज्येष्ठभ्रातुः । सुतैः पुत्रैः । ' आत्मजस्तनयः सूनुः सुतः पुत्रः ' इत्यमरः । व्याप्तमाक्रान्तम् । आकर्ण्य निशम्य । स्वसुरपत्यं स्वस्रीयस्तस्मात । ' स्वसुश्छः ' इति छप्रत्ययः । ' स्वस्रीयो भागिनेयः स्यात् ' इत्यमरः । दण्डावयवं किंचित्सैन्याङ्गम् । ' दण्डोऽस्त्री शासने राज्ञां हिंसने दमसैन्ययोः ' इति भागुरिः । आदित्सुर्ग्रहीतुमिच्छुः । अटवीपथमरण्यमार्गम् । ' अटव्यरण्यं विपिनं गहनं काननं वनम् ' इत्यमरः । ' ऋक्पूरब्धूःपथामानक्षे ' इति समासान्तोऽप्रत्ययः । अवगाह्य प्रविश्य । लुब्धकैर्व्याधैः लुप्तमपहृतं सर्वस्वं यस्यैतादृशः । ' व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः' इत्यमरः । **तत्सुतेनेति** । प्रहारवर्मणः पुत्रेण । कनीयसा कनिष्ठेन । 'युवाल्पयोः कनन्यतरस्याम्' इति युवन्शब्दस्य कनादेशः । हस्तवर्तिना मत्करास्थितेन। एकाकिनी पुरुषान्तरसाहाय्यरहिता 'एकाकी त्वेक एककः' इत्यमरः । ' एकादाकिनिच्चासहाये ' इत्याकिनिच् । वनचराणां वनवासिनां व्याधानां शरवर्षाद्बाणवृष्टेर्यद्भयं साध्वसं तेन पलायिता धावनायोद्यता । अगाहिषि प्रविष्टा । 'गाहू विलोडने' इत्यतो लुङ् । शार्दूलस्य व्याघ्रस्य कस्यचित् नखैः कररुहैः अवलीढाया विक्षताया अत एव निपतिताया भूमौ पतितायाः । 'शार्दूलद्वी-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पाणिभ्रष्टः स बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत। तच्छवाकर्षिणश्च व्याघ्रस्यासूनिषुरिष्वसनयंत्रमुक्तः क्षणादलिक्षत्। भिल्लदारकैः स बालोऽपाहारि! सा त्वहं मोहसुप्ता केनापि वृष्णिपालेनोपनीय स्वं कुटीरमावेश्य कृपयोपक्रान्तव्रणा स्वस्थीभूय स्वभर्तुरन्तिकमुपतिष्ठासुरसहायतया यावद्व्याकुलीभवामि तावन्ममैव दुहिता सह यूना केनापि तमेवोद्देशमागमत्। सा भृशं रुरोद। रुदितान्ते च सा सार्थघाते स्वहस्तगतस्य राजपुत्रस्य किरातभर्तृहस्तगमनम्, आत्मनश्च केनापि वनचरेण व्रणविरोपणम्, स्वस्थायाश्च पुनस्तेनोपयन्तुं चिन्तिताया निकृष्टजातिसंसर्गवैक्लव्यात्प्रत्याख्यानपारुष्यम्, तदक्षमेण चामुना विविक्ते विपिने स्वशिरःकर्तनोद्यमम्, अनेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननम्, आत्मनश्चोपयमनमित्यकथयत्। स तु पृष्टो मैथिलेन्द्रस्यैव कोऽपि सेवकः कारणवि-

---

पिनी व्याघ्रे' 'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः। पाणिभ्रष्टः हस्ततलात्प्रच्युतः। कपिलाशवस्य मृतगोविशेषस्य। क्रोडं भुजमध्यभागम्। 'न ना क्रोडं भुजान्तरम्' इत्यमरः। अभ्यलीयत तत्रान्तर्हितोऽभूत् इत्यर्थः। असून्प्राणान्। 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः। इषुर्बाणः। 'कलम्बमार्गणशराः पत्रीरोप इषुर्द्वयोः' इत्यमरः। इषवोऽस्यन्ते प्राक्षिप्यन्तेऽनेनेतीष्वसनम्। 'करणाधिकरणयोश्च' इति ल्युट्। 'धनुश्चापो धन्वशरासनकोदण्डकार्मुकम्। इष्वासोऽपि' इत्यमरः। तद्रूपं यद्यन्त्रं तस्मान्मुक्तः प्रेरितः। अलिक्षदपहृतवान्। 'लिह आस्वादने' 'शल इगुपधादनिटः क्सः' इतिक्सः। भिल्लदारकैः किरातपुत्रैः। स बालो मम हस्तात्पतितः। अपाहारि नीतः। मोहसुप्ता मूर्च्छया व्याप्ता। वृष्णिपालेनाजापालकेन गोपेन वा। 'मेषवृष्णय एडके' इत्यमरः। 'वृष्णिर्यदुषु गोपेषु' इत्यजयकोशश्च। स्वं कुटीरं स्वकीयं क्षुद्रगृहम्। 'कुटीशमीशुण्डाभ्यो रः' इति ह्रस्वार्थे रः। कृपयाऽनुकम्पया। उपक्रान्तव्रणा चिकित्सितक्षता। 'उपक्रमश्चिकित्सायाम्' इति वैजयन्ती। 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः। स्वस्थीभूय प्रकृतिमापन्ना सती स्वभर्तुर्निजपालकस्य प्रहारवर्मणोऽन्तिकं समीपमुपतिष्ठासुर्गन्तुमिच्छुः। व्याकुलीभवामि विह्वलीभवामि। तावत्तदानीम्। दुहिता कन्या। यूना तरुणपुरुषेण। भृशमत्यन्तम्। सार्थघाते समूहविभ्रंशे जाते सति। राजपुत्रस्य प्रहारवर्मज्येष्ठसूनोः। किरातभर्तुः भिल्लस्वामिनो हस्ते गमनं प्राप्तिम्। व्रणविरोपणं व्रणचिकित्सनम्। तेन वनचरेणोपयन्तुं परिणेतुं चिन्तिताया निश्चितायाः। निकृष्टजात्या किरातजात्या सह यः संसर्गः संबन्धस्तत्र वैक्लव्यात् दुःखात्। प्रत्याख्याने विरुद्धभाषणे पारुष्यं काठिन्यम्। तदक्षमेण परुषोक्तिमसहमानेनामुना वनेचरेण। विविक्ते निर्जने विपिने वने। 'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः' इत्यमरः। स्वस्य मम कन्यायाः शिरःकर्तनोद्यमं मस्तकच्छेदे प्रयत्नम्। यदृच्छया दैववशात्। हननं मारणम्। उपयमनं परिणयः। इतीति। एतत्पर्यन्तमुक्तं निजवृत्तान्तं मत्कन्याऽकथयत्प्रोक्तवती। स तु यदृच्छया दृष्टो युवा। मैथिलेन्द्रस्य प्रहारवर्मण एव।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

लम्बी तन्मार्गानुसारी जातः। सह तेन भर्तुरन्तिकमुपसृत्य पुत्रवृत्तान्तेन श्रोत्रमस्य देव्याः प्रियंवदायाश्चादहाव। स च राजा दिष्टदोषाज्ज्येष्ठपुत्रैश्चिरं विगृह्य पुनरसहिष्णुतयातिमात्रं चिरं प्रयुध्य बद्धः। देवी च बन्धनं गमिता। दग्धा पुनरहमस्मिन्नपि वार्धके हतजीवितमपारयन्ती हातुं प्रव्रज्यां किलाग्रहीषम्। दुहिता तु मम हतजीविताकृष्टा विकटवर्ममहादेवीं कल्पसुन्दरीं किलाशिश्रियत्। तौ चेद्राजपुत्रौ निरुपद्रवावेवावार्धिष्येताम्, इयता कालेन तवेमां वयोवस्थामस्प्रक्ष्येताम्। तयोश्च सतोर्न दायादा नरेन्द्रस्य प्रसह्यकारिणो भवेयुः' इति प्रमन्युरभिरुरोद। श्रुत्वा च तापसीगिरमहमपि प्रवृद्धबाष्पो निगूढमभ्यधाम्—'यद्येवमम्ब, समाश्वसिहि। नन्वस्ति कश्चिन्मुनिस्त्वया तदवस्थया पुत्राभ्युपपादनार्थं याचितस्तेन स लब्धो वर्धितश्च। वार्तेयमतिमहती। किमनया। सोऽहमस्मि। शक्यश्च मयासौ विकटवर्मा यथाकथंचिदुपाश्लिष्य व्यापादयितुम्। अनुजाः पुनरतिबहवः, तैरपि घटन्ते पौरजानपदाः। मां तु न कश्चिदिहत्यः

---

कारणविलम्बी केनचित्कारणेन विलम्बमानः। तेन सह मत्कन्याभर्त्रा साकम्। भर्तुः प्रहारवर्मणोऽन्तिकं समीपमुपसृत्य प्राप्य। पुत्रयोर्मया मत्कन्यया च धृतयो राजकुमारयोर्वृत्तान्तेन 'आवाभ्यां धृतौ भवत्पुत्रौ सैन्यभ्रंशे पाणि भ्रष्टौ जातौ न जानीवहे ताविदानीं कुत्र वर्तेते' इति कथनेन। देव्या राजपत्न्याः। अदहाव भस्मीकृतवत्यौ। तयोर्महत्कष्टमुत्पादितवत्याविति भावः। स चेति। प्रहारवर्मा। दिष्टदोषात् निर्भाग्यतावशात्। 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः। ज्येष्ठपुत्रैर्विकटवर्मादिभिः। चिरं बहुकालपर्यन्तं विगृह्य वैरं कृत्वा। प्रयुद्धय रणं विधाय बद्धो निगडितः। देवी राजमहिषी प्रियंवदाख्या बन्धनं कारागृहम्। दग्धा निर्भाग्या। वार्धके वृद्धदशायामपि। अपारयन्त्यशक्नुवती। हातुं परित्यक्तुम्। 'ओहाक् त्यागे' प्रव्रज्यां संन्यासम्। अग्रहीषं स्वीकृतवती। कल्पसुन्दरीमेतन्नाम्नीम्। आशिश्रियत् आश्रितवती। 'श्रिञ् सेवायाम्' इत्यतो लुङि 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति चङ्। **ताविति**। मया मत्कन्यया च त्यक्तौ। अवर्धिष्येतां वृद्धिं गतौ भवेताम्। 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति लृङ्। राजपुत्रयोर्वृद्धिक्रियाद्यभावस्तु तापस्या मनःकल्पितो न तु वास्तविकः। दायादा बान्धवा विकटवर्मादयः। 'दायादौ सुतबान्धवौ' इत्यमरः। प्रसह्यकारिणः बलाद्राज्यापहारिणः। प्रमन्युर्दुःखिता सती। तापस्या गिरं वचनम्। 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः। प्रवृद्धबाष्पः संजातोष्माश्रुकणः। 'बाष्पमूष्माश्रु' इत्यमरः। निगूढं प्रच्छन्नम्। अभ्यधामवोचम्। समाश्वसिहि समाधानं प्राप्नुहि। तदवस्थया व्याघ्रनखविदारितया। पुत्राभ्युपपादनार्थं तदन्वेषणार्थम्। याचितः प्रार्थितः। तेन मुनिना स बालो लब्धः प्राप्तः। इयं वार्ता कथाऽतिमहती नितरां विस्तृता। यथाकथंचित्केनापि प्रकारेण। उपश्लिष्य समीपं गत्वा। व्यापादयितुं हन्तुम्। अतिबहवो दुर्योधनापेक्षयाऽप्यसंख्याः। तैर्विकटवर्मादिभिः पौरजानपदा नगरवासिनो देशवासिनश्च घटन्ते संगता भविष्यन्ति। इहत्यः एतद्-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

ईदृक्तया जनो जानाति। पितरावपि तावन्मां न संविदाते, किमुतेतरे । तमेनमर्थमुपायेन साधयिष्यामि' इत्यगादिषम्। सा तु वृद्धा सरुदितं परिष्वज्य मुहुः शिरस्युपाघ्राय प्रस्नुतस्तनी सगद्गदमगदत्—'वत्स, चिरं जीव ! भद्रं तव। प्रसन्नोऽद्य भगवान्विधिः। अद्यैव प्रहारवर्मण्यधि विदेहा जाताः, यतः प्रलम्बमानपीनबाहुर्भवानपारमेतच्छोकसागरमद्योत्तारयितुं स्थितः । अहो, महद्भागधेयं देव्याः प्रियंवदायाः' इति हर्षनिर्भरा स्नानभोजनादिना मामुपाचरत्। अशिश्रियं चास्मिन्मठैकदेशे निशि कटशय्याम्। अचिन्तयं च 'विनोपधिनायमर्थो न साध्यः। स्त्रियश्चोपधीनामुद्भवक्षेत्रम्। अतोऽन्तःपुरवृत्तान्तमस्या अवगम्य तद्द्वारेण किंचिज्जालमाचरेयम्' इति।

चिन्तयत्येव मयि महार्णवोन्मग्नमार्तण्डतुरंगमश्वासरयावधूतेव व्यावर्तत त्रियामा। समुद्रगर्भवासजडीकृत इव मन्दप्रतापो दिवसकरः प्रादुरासीत्।

---

शीयः। 'अमेहक्वतसित्रेभ्य एव' इति भवार्थे त्यप्। ईदृक्तया राजपुत्रतया। पितरौ मम मातापितरौ प्रियंवदाप्रहारवर्माणौ। संविदाते न सम्यक् जानीतः। 'विदिप्रच्छिस्वरतीनामुपसंख्यानम्' इत्यात्मनेपदम्। किमुतेतरे नागरिका नैव ज्ञास्यन्तीति भावः। एनमर्थं विकटवर्महस्तात्स्वराज्यप्रतिप्राप्तिरूपं प्रयोजनम्। अगादिषमुक्तवान्। परिष्वज्यालिङ्ग्य। प्रस्नुतौ क्षरत्पयसौ स्तनौ यस्यास्तादृशी सती। वत्स हे पुत्रक। भद्रं मङ्गलम्। प्रहारवर्मण्यधि तदधीना इत्यर्थः। 'अधिरीश्वरे' इत्यधेः कर्मप्रवचनीयत्वम्। 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' इति यन्निरूपितमीश्वरत्वमथवा यन्निष्ठमीश्वरत्वमित्युभयविधार्थेऽन्तिममर्थमादाय तद्वाचकादधिरामे भूरितिवा सप्तमी। प्रलम्बमानौ नितरामायतौ पीनौ पुष्टिं गतौ च बाहू भुजौ यस्य तथाविधः। शोकसागरं दुःखार्णवम्। स्थितः सन्निहितः। भागधेयं भाग्यम्। हर्षनिर्भराऽनन्दभरिता। मठस्य छात्रादिनिवासस्यैकदेशे कस्मिंश्चित्कोणे। कटशय्यां तृणविशेषविहितं शयनम्। **अचिन्तयमिति**। उपधिना विना कपटं हित्वा। 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्म कैतवे' इत्यमरः। उद्भवक्षेत्रमुत्पत्तिस्थानम्। अस्या वृद्धायाः सकाशात्। अवगम्य ज्ञात्वा। तद्द्वारेण तापसीमुखेन। जालं कपटम्। 'जालं समूह आनाये गवाक्षे कपटेऽपि च' इति वैजयन्ती। आचरेयं करिष्यामीत्यर्थः।

**चिन्तयतीति**। पूर्वोक्तप्रकारेण विचारं कुर्वाणे सत्येव। महार्णवात्समुद्रादुन्मग्नस्योद्गतस्य मार्तण्डस्यार्कस्य 'विकर्तनार्कमार्तण्डमिहिरारुणपूषणः' इत्यमरः। तुरंगमाणामश्वानां श्वासरयेण निश्वासपवनवेगेनावधूतेव प्रणुन्नेव। 'घोटके वीतितुरगतुरंगाश्वतुरंगमाः' इत्यमरः। व्यावर्तत निवृत्ताऽभूत। त्रियामा रात्रिः। 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इत्यमरः। समुद्रस्य गर्भे मध्ये वासेन स्थित्या जडीकृतः शीतलीकृत इव 'सुषीमः शिशिरो जडः। तुषारः शीतलः शीतः' इत्यमरः। मन्दप्रतापः स्वल्पातपः। दिवसकरोऽर्यमा। प्रादुरासीदुदितः।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

उत्थायावसायितदिनमुखनियमविधिस्तां मे 'मातरमवादिषम्—'अम्ब, जाल्मस्य विकटवर्मणः कच्चिदन्तःपुरवृत्तान्तमभिजानासि' इत्यनवसितवचन एव मयि काचिदङ्गना प्रत्यदृश्यत । तां चावेक्ष्य सा मे धात्री हर्षाश्रुकुण्ठितकण्ठमाचष्ट—'पुत्रि पुष्करिके, पश्य भर्तृदारकम् । अयमसावकृपया मया वने परित्यक्तः पुनरप्येवमागतः' इति । सा तु हर्षनिर्भरनिपीडिता चिरं प्ररुद्य बहु विलप्य शान्ता पुनः स्वमात्रा राजान्तःपुरवृत्तान्ताख्याने न्ययुज्यत । उक्तं च तया—'कुमार, कामरूपेश्वरस्य कलिन्दवर्मनाम्नः कन्या कल्पसुन्दरी कलासु रूपे चाप्सरसोऽप्यतिक्रान्ता पतिमभिभूय वर्तते । तदेकवल्लभः, स तु बह्ववरोधोऽपि विकटवर्मा' इति । तामवोचम्—'उपसर्पैनां मत्प्रयुक्तैर्गन्धमाल्यैः । उपजनय चासमानदोषनिन्दादिना स्वभर्तरि द्वेषम् । अनुरूपभर्तृगामिनीनां च वासवदत्तादीनां वर्णनेन ग्राहयानुशयम् । अवरोधनान्तरेषु च राज्ञो विलसितानि सुगूढान्यपि प्रयत्नेनान्विष्य प्रकाशयन्ती मानमस्या वर्धय' इति । पुनरिदमम्बा-

---

अवसायितः समाप्तिं गमितः दिनमुखनियमविधिः प्रातःकालिकनित्यक्रिया येन तथाविधोऽहम् मे मातरं मम धात्रीम् । **अम्बेति** । हे धात्रि ! जाल्मस्य दुष्टस्य । 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः । 'जडो जाल्मश्च निर्बुद्धौ स्तब्धेऽनालोच्यकारिणि' इति वैजयन्ती । कच्चिदित्यनुयोगे । अनवसितवचनेऽसमापितवाक्ये । अङ्गना योषित् । 'विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना' इत्यमरः । प्रत्यदृश्यत प्रत्यक्षाऽभूत् दृशधातोः कर्मणि लङ् । अवेक्ष्य दृष्ट्वा । हर्षाश्रुभिरानन्दवाष्पोदकविन्दुभिः कुण्ठितोऽवरुद्धः कण्ठः कण्ठरवः यस्मिन्कर्मणि तद्यथा तथा । आचष्ट कथयामास । भर्तृदारकं राजकुमारम् । अकृपया निरनुकम्पया । हर्षनिर्भरेणानन्दातिरेकेण निपीडिता व्याप्ता सती । शान्ता विलापादुपरता । राज्ञो विकटवर्मणोऽन्तःपुरवृत्तान्तस्य अवरोधसमाचारस्याख्याने कथने न्ययुज्यत प्रेरिताऽभूत् । तया पुष्करिकया । कुमार हे राजपुत्र । कामरूपेश्वरस्य तदाख्यदेशाधिपतेः । कलासु चतुःषष्टिकलासु । रूपे शरीरकान्तौ च । अप्सरसोऽप्यतिक्रान्ता देवाङ्गना अपि तिरस्कुर्वती । अभिभूय परिभूय । बह्वो अवरोधा अन्तःपुरस्त्रियो यस्य तथाविधोऽपि स विकटवर्मा तदेकवल्लभः सा कल्पसुन्दर्येवैका मुख्या वल्लभा प्रियतमा यस्य तादृशः । 'एके मुख्यान्यकेवलाः' इत्यमरः । 'अवरोधस्तिरोधाने राजदारेषु तद्गृहे' इति मेदिनी । तां पुष्करिकाम् । **उपसर्पेति** । एनां कल्पसुन्दरीम् । मत्प्रयुक्तैर्मया विसृष्टैः । उपजनयोत्पादय । असमानः अयं भर्ता त्वया तुल्यो नास्ति इति दोषकथनेन तन्निन्दया च । द्वेषं विरक्तिम् । अनुरूपभर्तृगामिनीनामनुगुणं भर्तारं प्राप्तवतीनाम् । अनुशयं पश्चात्तापम् । अवरोधनान्तरेषु अन्यासु शुद्धान्तवासिनीषु योषित्सु । 'भूभुजामन्तःपुरं स्यादवरोधनम्' इत्यमरः । विलसितानि शृङ्गारचेष्टितानि । सुगूढान्यपि नितान्तमज्ञेयान्यपि । प्रकाशयन्ती कल्पसुन्दर्याः पुरः कथयन्ती । मानं योषिदन्तरेण सह स्वनायकस्य विलासासहिष्णुताम् । 'दम्पत्योर्भाव एकत्र सतोरप्यनुरक्तयोः । स्वाभीष्टाश्लेषवीक्षादिनिरोधी

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मवोचम्—'इत्थमेव त्वयाप्यनन्यव्यापारया नृपाङ्गनासावुपस्थातव्या । प्रत्यहं च यद्यत्तत्र वृत्तं तदस्मि त्वयैव बोध्यः, मदुक्ता पुनरियमुदर्कस्वादुनोऽस्मत्कर्मणः प्रसाधनाय च्छायेवानपायिनी कल्पसुन्दरीमनुवर्तताम्' इति । ते च तमर्थं तथैवान्वातिष्ठताम् ।

केषुचिद्दिनेषु गतेष्वाचष्ट मां मदम्बा 'वत्स, माधवीव पिचुमन्दाश्लेषिणी यथासौ शोच्यमात्मानं मन्येत तथोपपाद्य स्थापिता । किं भूयः कृत्यम्' इति । पुनरहमभिलिख्यात्मनः प्रतिकृतिम् 'इयममुष्यै नेया । नीतां चैनां निर्वर्ण्य सा नियतमेवं वक्ष्यति । 'नन्वस्ति कश्चिदीदृशाकारः पुमान्' इति । प्रतिब्रूह्येनाम्—'यदि स्यात्ततः किम्' इति । तस्य यदुत्तरं सा दास्यति 'तदहमस्मि प्रतिबोधनीयः' इति । सा 'तथा' इति राजकुलमुपसंक्रम्य प्रतिनिवृत्ता मामेकान्ते न्यवेदयत्—'वत्स, दर्शितोऽसौ चित्रपटस्तस्यै मत्तकाशिन्यै । चित्रीयमाणा चासौ भुवनमिदं सनाथीकृतं यद्देवेऽपि कुसुमधन्वनि नेदृशी वपुःश्रीः संनिधत्ते । चित्रमेतच्चित्रतरम् । न च तमवैमि य ईदृशमिदमिहत्यो निर्मिमीते ।

---

मान उच्यते ॥' इत्युज्ज्वलकोशः । अनन्यव्यापारया कार्यान्तररहितया । नृपाङ्गना राजमहिषी असौ कल्पसुन्दरी । उपस्थातव्या सेवनीया । प्रत्यहमहरहः । तत्र राज्ञोऽन्तःपुरे । अस्मि इत्यहमर्थेऽव्ययम् । एवकारस्यास्मीत्यनेनान्वयः । तेन मत्प्रवृत्तिर्न कस्यचिन्निकटे कथनीयेति भावः । बोध्यः निवेदनीयः । उदर्केण उत्तरकालेऽवश्यं भाविना फलेन । स्वादुनः रमणीयस्य । 'उदर्कः फलमुत्तरम्' इत्यमरः । प्रसाधनाय निष्पादनाय । छायेव प्रतिबिम्बवत् । अनपायिनी अविच्छिन्ना । अनुवर्ततामनुसृत्य तिष्ठतु । ते च तापसीपुष्करिके । तमर्थं मदुक्तं कार्यम् । अन्वातिष्ठतां सम्पादयामासतुः ।

**केषुचिदिति**। कतिपयेषु । गतेष्वतीतेषु सत्सु । माधवी वसन्तकालोद्भवा काचिल्लता 'वासन्ती माधवी लता' इत्यमरः । पिचुमन्दं निम्बवृक्षमाश्लिष्यत्यालिङ्गत्येवंशीला । असौ कल्पसुन्दरी । शोच्यं पश्चात्तापार्हम् । मन्येत विचारयेत । उपपाद्य सहेतुकं पतिदोषाविष्कारं कृत्वा । भूयः पुनरपि । कृत्यमनुष्ठातुमर्हम् । अभिलिख्य चित्रयित्वा । प्रतिकृतिं चित्रपटम् । अमुष्यै कल्पसुन्दर्यै नेया प्रापयितव्या । निर्वर्ण्य सादरमभिवीक्ष्य । नियतमवश्यमेव । वक्ष्यति कथयिष्यति । ईदृशाकारः चित्रपटस्थपुरुषसमानाकारः । **यदि स्यादिति** । अस्य परपुरुषत्वेन स्वोपभोगानर्हत्वान्न किंचित्तव प्रयोजनमिति भावः । इदं च तस्याः कल्पसुन्दर्या मनोगताशयपरिज्ञानार्थमुक्तम् । उत्तरं प्रतिवचनम् । प्रतिबोधनीयः निवेदनीयः । सा ममोपमाता तापसी । उपसंक्रम्योपसृत्य । एकान्ते रहसि । मत्तकाशिन्यै स्त्रीविशेषान्तर्गतायै कल्पसुन्दर्यै । 'वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी' इत्यमरः । चित्रीयमाणा तच्चित्रमद्भुतं मन्यमाना । सनाथीकृतं सार्थकं संपादितम् । कुसुमधन्वनि कामदेवे । वपुःश्रीः शरीरलावण्यम् । संनिधत्ते सन्निहितं वर्तते । चित्रतरमत्याश्चर्यकारकम् । अवैमि जानामि । इहत्यश्चम्पानिवासी भूलोकवासी

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

केनेदमालिखितम्, इत्यादृतवती व्याहृतवती च । मया च स्मेरयोदीरितम्—'देवि, सदृशमाज्ञापयसि । भगवान्मकरकेतुरप्येवंसुन्दर इति न शक्यमेव संभावयितुम् । अथ च विस्तीर्णेयमर्णवनेमिः । क्वचिदीदृशमपि रूपं दैवशक्त्या संभवेत् । अथ तु यद्येवंरूपो रूपानुरूपशिल्पशीलविद्याज्ञानकौशलो युवा महाकुलीनश्च कश्चित्संनिहितः स्यात्, स किं लप्स्यते' इति । तयोक्तम्—'अम्ब, किं ब्रवीमि । शरीरं हृदयं जीवितमिति सर्वमिदमल्पमनर्हं च । ततो न किंचिल्लप्स्यते न चेदयं विप्रलम्भस्तस्यामुष्य दर्शनानुभवेन यथेदं चक्षुश्चरितार्थं भवेत्तथानुग्रहः कार्यः' इति । भूयोऽपि मया दृढतरीकर्तुमुपन्यस्तम्—'अस्ति कोऽपि राजसूनुर्निगूढं चरन् । अमुष्य वसन्तोत्सवे सहसखीभिर्नगरोपवनविहारिणी रतिरिव विग्रहिणी यदृच्छया दर्शनपथं गतासि । गतश्चासौ कामशरैकलक्ष्यतां मामन्ववर्तिष्ट । मया च वामन्योन्यानुरूपैरन्यदुर्लभैराकारादिभिर्गुणातिशयैश्च प्रेर्यमाणया तद्राचितैरेव कुसुमशेखरस्रगनुलेपनादिभिश्चिरमुपासितासि । सादृश्यं च स्वमनेन स्वयमेवाभिलिख्य त्वत्समाधिगाढत्वदर्शनाय प्रेषितम् । एष चेदर्थो निश्चितस्तस्यामुष्यातिमानुषप्राणसत्त्वप्रज्ञाप्रकर्षस्य न किंचिद्दुष्करं नाम । तम-

---

वा । निर्मिमीते संपादयति । आदृतवती आदरान्विता । व्याहृतवती कथितवती । स्मेरया कृतमन्दहास्यया । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इति रप्रत्ययः । उदीरितमभिहितम् । **देवीति** । हे राज्ञि । सदृशं यथायोग्यम् । मकरकेतुर्मदनः । संभावयितुं विचारयितुमपि न शक्यं किं पुनरभिधातुमिति भावः । अर्णवनेमिः समुद्रमेखला पृथिवीत्यर्थः । अथ तु तिष्ठत्वियं वार्तेति भावः । 'तिष्ठत्वित्यभिधेये स्यादास्तामथ तु चाव्ययम्' इत्यजयः । एवं चित्रपटे दृश्यमानतुल्यं रूपं सौन्दर्यं यस्य स एवंरूपः । शिल्पं कार्यसामर्थ्यम् । शीलं सत्स्वभावः । विद्याश्चतुर्दशाष्टादश वा । ज्ञानं व्यवहारज्ञानमेतेषु कौशलो निपुणः । महाकुलीनः महति वंशे उत्पन्नः । 'महाकुलादञ्खञौ' इत्यत्रान्यतरस्यामित्यनुवृत्त्या पक्षे ख इत्युक्त्याऽत्र खप्रत्ययः । संनिहितः उपस्थितः । तया कल्पसुन्दर्या । अनर्हं निर्मूल्यम् । विप्रलम्भः प्रतारणम् । इदं मदीयामित्यर्थः । चरितार्थं सफलम् । दृढतरीकर्तुं कल्पसुन्दर्याश्चित्तवृत्तिं त्वयि निश्चलां विधातुम् । **अस्तीति** । राजसूनुः नृपतिकुमारः । निगूढं प्रच्छन्नं यथा तथा । विग्रहिणी सशरीरा । 'शरीरं वर्ष्म विग्रहः' इत्यमरः । कामशराणां मदनसायकानां लक्ष्यतां शरव्यत्वं गतः प्राप्तः । 'लक्षं लक्ष्यं शरव्यं च' इत्यमरः । मामन्ववर्तिष्ट भवत्याः प्राप्तिविषये मामेव सहायतयोपसृतवान् । वां तव तस्य च । 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इति युष्मच्छब्दस्यैकशेषः । अन्योन्यानुरूपैः परस्परं योग्यैः । प्रेर्यमाणया नियुज्यमानया । तेन राजपुत्रेण राचितैः कृतैः कुसुमशेखरः पुष्पकृत आपीडः शिरोधार्यः । स्रङ्माल्यम् । उपासिताऽऽराधिता । स्वयं निजहस्तेनैव । तव समाधेर्मनोऽभिनिवेशस्य गाढत्वदर्शनाय दार्ढ्यं निर्णेतुम् । एषोऽर्थस्तवाप्यस्मिन्पुरुषे आसक्तिरस्तीत्येवंरूपः । निश्चितस्तेन पुरुषेण निर्धारितः । प्राणो बलम् । सत्त्वं पराक्रमः । प्रज्ञा बुद्धिरेतेषां

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

द्यैव दर्शयेयम् । संकेतो देयः ' इति । तया तु किंचिदिव ध्यात्वा पुनरभिहितम्—' अम्ब, तव नैतदिदानीं गोप्यतमम् । अतः कथयामि । मम तातस्य राज्ञा प्रहारवर्मणा सह महती प्रीतिरासीत् । मातुश्च मे मानवत्याः प्रियवयस्या देवी प्रियंवदासीत् । ताभ्यां पुनरजातापत्याभ्यामेव कृतः समयोऽभूत्—'आवयोः पुत्रमत्याः पुत्राय दुहितृमत्या दुहिता देया' इति । तातस्तु मां जातां प्रनष्टापत्या प्रियंवदेति प्रार्थयमानाय विकटवर्मणे दैवाद्दत्तवान् । अयं च निष्ठुरः पितृद्रोही नाप्युपपन्नसंस्थानः कामोपचारेष्वलब्धवैचक्षण्यः कलासु काव्यनाटकादिषु मन्दाभिनिवेशः शौर्योन्मादी दुर्विकत्थनोऽनृतवादी चास्थानवर्षी । नातिरोचते म एष भर्ता विशेषतश्चैषु वासरेषु यदयमुद्याने मदन्तरङ्गभूतां पुष्करिकामप्युपान्तवर्तिनीमनादृत्य मयि बद्धसापत्न्यमत्सरामनात्मज्ञामात्मनाटकीयां रमयन्तिकां नामापत्यनिर्विशेषं मत्संवर्धितायाश्चम्पकलतायाः

---

प्रकर्षोऽधिकत्वम् । अतिमानुष इतरजनासाधारणः प्राणादिप्रकर्षो यस्य तथाभूतस्य । न किंचिद् दुष्करं नाम किमपि दुःसाध्यं न वर्तते । सर्वमप्ययं शीघ्रमेव साधयिष्यतीति भावः । तं तादृशं युवानम् । अद्यास्मिन्नेव दिने । ध्यात्वा पर्यालोच्य । न गोप्यतममावयोर्घटनोद्युक्तायाम् त्वयि न किमपि प्रच्छादनीयं गोपायने च स्वस्यैव कार्यहानिरिति भावः । अतः त्वत्सन्निधाववश्यं कथनीयत्वात् । **ममेति** । तातस्य जनकस्य कलिन्दवर्मणः । प्रियवयस्याऽऽप्तसखी । अजातापत्याभ्यामेव अनुत्पन्नसन्ततिभ्यां मज्जननात्प्रागेवेत्यर्थः । समयः प्रतिज्ञा ' समयाः शपथाचारकालसिद्धान्तसंविदः ' इत्यमरः । आवयोर्मध्ये पुत्रवत्याः या पुत्रं जनयति तस्याः पुत्राय दुहितृमत्या कन्यामात्रा । प्रनष्टमदृश्यतां गतमपत्यं यस्यास्तादृशी 'णश् अदर्शने' । दैवाद्दत्तवान्मदिच्छां विनैवार्पितवान् । निष्ठुरः क्रूरः । पितृद्रोही पितृतुल्यो यः प्रहारवर्मा पितृव्यस्तद्द्रोही । उपपन्नमनुगुणं संस्थानं गात्रं यस्यैतादृशोऽपि न विकृताङ्ग इति भावः । ' उपपन्नं समृद्धे च संपन्नेऽनुगुणेऽपि च ' इति केशवः । ' संस्थानं मरणे गात्रे संनिवेशे च वर्तते ' इति भागुरिः । कामोपचारेषु रतितन्त्रेषु । अलब्धवैचक्षण्योऽप्राप्तचातुर्यः मन्दबुद्धिरिति यावत् । कलासु चतुःषष्टिसंख्यासु विद्याकलासु । मन्दः स्वल्पोऽभिनिवेश आसक्तिर्यस्य स काव्यादिष्वरसिक इत्यर्थः । दुर्विकत्थनः दुष्ट आत्मश्लाघाकारी ' विकत्थनं स्तवः श्लाघा ' इति हलायुधः । अनृतवादी मिथ्यावादी । अस्थानेऽसत्पात्रे मद्यपद्यूतकारिवाराङ्गनादिषु ददातीत्येवंशीलः । मे मह्यम् । नातिरोचते किंचिदपि प्रीतिकरो न भवति । ' रुच्यर्थानां प्रीयमाणः ' इति म इत्यत्र संप्रदानतायां चतुर्थी । **यदिति** । यस्मात्कारणादयं विकटवर्मा । उद्याने उपवने । ममान्तरङ्गभूतामत्यन्तमाप्तप्रियसखीभूताम् । उपान्तवर्तिनीमासन्नवर्तिनीम् । अनादृत्याविगणय्य । ' अनादरः परिभवः परीभावस्तिरस्क्रिया । रीढाऽवमाननाऽवज्ञा ' इत्यमरः । बद्धः स्थिरीकृतः सापत्न्येन समानपतिकत्वेन जायमानो यो मत्सरो द्वेषो यया तादृशीम् । अनात्मज्ञां स्वयोग्यताविचारशून्याम् । आत्मनो नाटकीयां नृत्तकरीम् । ' नाटकीयो नृत्तकरः ' इत्यजयः । यथा राज्ञा

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

स्वयमवचिताभिः सुमनोभिरलमकार्षीत् । मदुपभुक्तमुक्ते चित्रकूटगर्भवेदिकागते रत्नतल्पे तया सह व्यहार्षीत् । अयोग्यश्च पुमानवज्ञातुं च प्रवृत्तः । तत्किमित्यपेक्ष्यते परलोकभयं चैहिकेन दुःखेनान्तारितम् । अविषह्यं हि योषितामनङ्गशरनिषङ्गीभूतचेतसामनिष्टजनसंवासयंत्रणादुःखम् । अतोऽमुना पुरुषेण ममाद्योद्यानमाधवीगृहे समागमय । तद्वार्ताश्रवणमात्रेणैव हि ममातिमात्रं मनोऽनुरक्तम् । अस्ति चायमर्थराशिः । अनेनामुष्य पदे प्रतिष्ठाप्य तमेवात्यन्तमुपचर्य जीविष्यामि' इति । मयापि तदभ्युपेत्य प्रत्यागतम् । अतः परं भर्तृदारकः प्रमाणम्' इति ।

ततस्तस्या एव सकाशादन्तःपुरनिवेशमन्तर्वंशिकपुरुषस्थान् प्रमदवनप्रदेशा-

---

स्वसन्निधाने नर्तकी काचित्साधारणस्त्री रतिप्रेमास्पदत्वेन न स्वीकार्या तद्वदयोग्याम् इति भावः । अपत्यनिर्विशेषमौरसपुत्रादपि विशिष्टस्नेहेन मया संवार्धितायाः पोषितायाः । स्वयं स्वकरेणैवावचिताभिर्गृहीताभिः सुमनोभिः पुष्पैः । 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्' इत्यमरः । अलमकार्षीद्भूषयामास । मया पूर्वमुपभुक्तेऽनुभूते पश्चान्मुक्ते परित्यक्ते । चित्रकूटो विहारागिरिस्तस्य गर्भे मध्यभागे या वेदिका परिष्कृता भूस्तद्गते तत्र स्थापिते । रत्नतल्पे रत्नपर्यङ्के । तया रमयान्तिकया सह व्यहार्षीत्क्रीडति स्म । अयोग्यः स्वयं योग्यतारहितोऽपि पुमान्मे भर्ताऽवज्ञातुं मामवमन्तुमपि प्रवृत्तः उद्युक्तः ऐहिकेन इह भूलोके भवेन । अन्तारितं दूरीकृतम् । एतादृशभर्त्रा सह निवासो नरकादप्यतिकष्टतर इति मे भातीत्यर्थः । अविषह्यं सोढुमयोग्यम् । अनङ्गशराणां मन्मथबाणानां निषङ्गीभूतं तूणीरमिव तत्परिपूर्णमिति यावत् । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । तादृशं चेतो मनो यासां तथाविधानां योषितां स्त्रीणाम् । 'स्त्री योषिदबला योषा नारी सीमान्तिनी वधूः' इत्यमरः । अनिष्टेनानभीप्सितेन जनेन भर्त्रा साकं यः संवासो निवासः तस्य यन्त्रणया 'अवश्यं यावज्जीवं त्वयाऽनेन साकं वस्तव्यम्' इति नियमनेन जायमानं दुःखम् । **अत इति** । विकटवर्मणा सहवासस्य ममानभीष्टतया । अमुना चित्रे दृश्यमानेन । उद्यानमाधवीगृहे उपवनवर्तिनि वासन्तीलतागृहे । 'वासन्ती माधवीलता', इत्यमरः । समागमय संयोजय । तस्य राजकुमारस्य वार्ताश्रवणमात्रेण वृत्तान्ताकर्णनात्प्रभृत्येव । अतिमात्रं गाढम् । अर्थराशिर्धनपुञ्जः । अमुष्य विकटवर्मणः पदे राजत्वरूपे मद्भर्तृत्वरूपे च स्थाने । तमेव चित्रे दृश्यमानं युवानमेव । उपचर्य सेवां कृत्वा । तद्युवयोः संमेलनमभ्युपेत्य स्वीकृत्य प्रत्यागतं पुनरायातम् । भर्तृदारकः राजकुमारो भवानेव । प्रमाणं कार्यनिर्धारक इति भावः ।

**तत इति** । तस्या एव वृद्धतापस्या एव सकाशान्निकटात् । अन्तःपुरस्यावरोधगृहस्य निवेशं संस्थानम् । अन्तर्वंशिकपुरुषा अवरोधरक्षकाः । 'अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः' इत्यमरः । तादृशपुरुषास्तिष्ठन्ति यत्र तादृशान् प्रमदवनस्य विहारोद्यानस्य प्रदेशान् । 'विज्ञेयं प्रमदवनं पुरोपकण्ठे शुद्धान्तैः सह रमते नृपस्तु यस्मिन्' इति हलायुधः । 'स्यादेतदेव

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

न्नपि विभागेनावगम्य, अस्तगिरिकूटपातक्षुभितशोणित इव शोणीभवति भानुबिम्बे, पश्चिमाम्बुधिपयःपातनिर्वापितपतङ्गाङ्गारधूमसंभार इव भरितनभसि तमसि विजृम्भिते, परदारपरामर्शोन्मुखस्य ममाचार्यकमिव कर्तुमुत्थिते गुरुपरिग्रहश्लाघिनि ग्रहाग्रेसरे क्षपाकरे, कल्पसुन्दरीवदनपुण्डरीकेणेव मद्दर्शनातिरागप्रथमोपनतेन स्मयमानेन चन्द्रमण्डलेन संधुक्ष्यमाणतेजसि भुवनविजिगीषोद्यते देवे कुसुमधन्वनि, यथोचितं शयनीयमभजे। व्यचीचरं च–'सिद्धप्राय एवायमर्थः। किंतु परकलत्रलङ्घनाद्धर्मपीडा भवेत्, साप्यर्थकामयोर्द्वयोरुपलम्भे शास्त्रकारैरनुमतैवेति। गुरुजनबन्धमोक्षोपायसंधिना मया चैष व्यतिक्रमः कृतः, तदपि पापं निर्हृत्य कियत्यापि धर्मकलया मां समग्रयेदिति। अपि त्वेतदाकर्ण्य

---

प्रमदवनमन्तःपुरोचितम्' इत्यमरश्च। विभागेन पृथक्पृथग्विविच्यावगम्य ज्ञात्वा। अस्तगिरेरस्ताचलस्य कूटे शिखरे 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः। पातेन संघट्टेन क्षुभितं निःसृतं शोणितं रक्तं यस्मात्तादृश इव। इवशब्दोऽत्र हेतूत्प्रेक्षायाम्। 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः। शोणीभवति रक्तवर्णतामापन्ने। 'लोहितो रोहितो रक्तः शोणः कोकनदच्छविः' इत्यमरः। भानुबिम्बे सूर्यमण्डले। पश्चिमाम्बुधेः पश्चिमसमुद्रस्य पयसि जले पातेन निपतनेन निर्वापितः निर्ज्वालीकृतः पतङ्गः सूर्य एवाङ्गारः ज्वलत्काष्ठखण्डः तस्मादुत्थितः धूमस्य संभारे पुञ्जे तत्सन्निभे इत्यर्थः। 'पतंगौ पक्षिसूर्यौ च' इत्यमरः। भरितं पूरितं नभ आकाशं येन तादृशे तमस्यन्धकारे विजृम्भिते सर्वतो व्याप्नुवति। परदाराणां परामर्शे दूषणे उन्मुखस्योद्युक्तस्य ममोपहारवर्मणः। आचार्यकं पौरोहित्यम्। 'मन्त्रव्याख्याकृदाचार्यः' इत्यमरः। गुरोः बृहस्पतेः परिग्रहं पत्नीं श्लाघतेऽत्युत्कृष्टतया स्तौति इति गुरुपरिग्रहश्लाघी अनेन च तद्गमनमपि विवक्षितम्। तादृशे ग्रहाणां नवानामग्रेसरे मुख्ये क्षपाकरे चन्द्रे। 'नक्षत्रेशः क्षपाकरः' इत्यमरः। मम दर्शनेऽवलोकनेऽतिरागेणात्यासक्त्या प्रथमं कल्पसुन्दर्यागमनात्प्रागेवोपनतेन मम संनिधिमागतेन स्मयमानेन मन्दहास्यं कुर्वता कल्पसुन्दर्याः वदनपुण्डरीकेण तत्तुल्येन। चन्द्रमण्डलेन चन्द्रबिम्बेन। 'प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम्' इत्यालंकारिकोक्तलक्षणस्यात्र सत्त्वादत्र प्रतीपाख्योऽर्थालंकारः। संधुक्ष्यमाणमुद्दीप्यमानं तेजः पराक्रमो यस्य तादृशे। भुवनानां त्रयाणां विजिगीषया जेतुमिच्छयोद्यते उद्युक्ते कुसुमधन्वनि कामे। यथोचितं यथायोग्यं शैत्यकारीति यावत्। **व्यचीचरमिति**। विचारं कृतवान्। अयमर्थः कल्पसुन्दरीप्राप्तिः शत्रुमारणपूर्वकं स्वराज्यप्राप्तिर्वा। सिद्धप्रायः किंचिन्न्यूनः सिद्धः तमंशमपि सद्यः साधयिष्यामीत्यर्थः। परकलत्रलङ्घनात्परस्त्रीगमनात्। 'कलत्रं श्रोणिभार्ययोः' इत्यमरः। धर्मस्य पीडा हानिः। साऽपि धर्महानिरपि। उपलम्भे प्राप्तौ सत्याम्। शास्त्रकारैर्मन्वादिभिः स्मृतिकारैः। अनुमता संमतैव। गुरुजनयोर्मम मातापित्रोः प्रहारवर्मप्रियंवदयोर्बन्धनान्मोक्षो मुक्तिस्तत्रोपायसंधिना तन्मुक्तिसाधनीभूतोऽयं मार्ग इति बुद्धिना। व्यतिक्रमो धर्मविरुद्धव्यवहारः। तदपि पापं परस्त्रीगमनजन्यं दोषमपि निर्हृत्य दूरीकृत्य कियत्यापि धर्मकलया पितृ-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

देवो राजवाहनः सुहृदो वा किं नु वक्ष्यन्ति' इति चिन्तापराधीन एव निद्रया परामृश्ये । अदृश्यत च स्वप्ने हस्तिवक्त्रो भगवान् । आहस्म च—'सौम्य उपहारवर्मन्, मा स्म ते दुर्विकल्पो भूत् । यतस्त्वमासि मदंशः । शंकरजटाभारलालनोचिता सुरसरिदसौ वरवर्णिनी । सा[1] च कदाचिन्मद्विलोडनासहिष्णुर्मामशपत्—'एहि मर्त्यत्वम्' इति । अशप्यत मया च—'यथेह बहुभोग्या तथा प्राप्यापि मानुष्यकमनेकसाधारणी भव' इति । अभ्यर्थितश्चानया 'एकपूर्वा पुनस्त्वामेवो-

---

मोक्षणजन्येन केनचिद्धर्मांशेन मां समग्रयेद्योजयेत् । केवलम् अर्थकामयोर्द्वयोः प्राप्तावपि अनुमताऽस्ति चेत्सा धर्मपीडा मया विधीयमाना स्वराज्यस्य कल्पसुन्दर्याः पितृमोचनस्य च अर्थकामधर्माणां साधयित्री न दोषावहेति भावः । अपितिवाति । एतन्मम परकलत्रगमनम् । आकर्ण्य श्रुत्वा । सुहृदो मित्राणि । वक्ष्यन्ति कथयिष्यन्ति । चिन्तापराधीनः विचारग्रस्तः । निद्रया परामृश्ये निद्रां गतोऽहामिति भावः । स्वप्ने सुषुप्तिकाले । हस्तिवक्त्रो गजाननः । आह उवाचेत्यर्थे विभक्तिप्रतिरूपकमव्ययम् । ते तव । दुर्विकल्पः 'मम कृत्यमिदं दुष्टमदुष्टं वा' इति दुष्टतासंदेहो माभूत् मा भवतु । समीचीनमेवेति निश्चिनुहीति भावः । यतो यस्मात्कारणात्त्वमुपहारवर्मा ममांशो मम कलयोत्पन्नः । शंकरेण महादेवेन जटाभारे स्वमूर्धनि लालनाय रमयितुमुचिता योग्या तत्र वासिनीत्यर्थः । सुरसरिद्देवनदी गङ्गेति यावत् । असौ वरवर्णिनी इयं कल्पमञ्जरी । 'वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी' इत्यमरः । सा चेति । गङ्गा । मद्विलोडनं मत्कृतजलताडनं न सहते एवंशीला सती । अशपन्ममोपरि शापं दत्तवती । मर्त्यत्वं मनुष्यतामेहि प्राप्नुहि । वस्तुतस्तु सपत्नीतनयत्वमेव कारणं जलताडनं तु व्याजीकृत्य शापो दत्तः । एतच्च टिप्पणीस्थपाठान्तरादवगन्तव्यम् । इह देवलोके । बहुभोग्या बहुभिर्जनैः स्नानपानादिना भोग्या भोक्तुमुचिता । मानुष्यकं मनुष्यभावं प्राप्यापि गत्वा । 'योपधाद्गुरूपोत्तमाद्वुञ्' इति वुञ् । अनेकसाधारणी एकाधिकैः भोग्या । अभ्यर्थितः प्रार्थितोऽनया गङ्गया ।

---

१ 'तां च कदाचिद्गजाननो जलक्रीडां कुर्वन्नतिव्यगाहत । सा च सपत्नीतनयविहितां विलोडनामसहमाना तमशपत'. 'सोऽप्यहेतुकशापप्रदानात्क्रुद्धस्तामशपत' 'ततस्तेन प्रतिशप्ता सा विलक्षेव मामुपसृत्य सगद्गदमगदत्—'स्वामिन्, अहमनवरतभवच्चरणवरिवस्याविधायिनी न शापार्हा' इति । तदाकर्ण्य कृपाक्रान्तमनसा मयोक्तम्—'प्रिये, नास्य शापोऽन्यथा भवितुमर्हति । परं त्वदनुग्रहार्थमहमात्मनोंऽशं द्विधा विभज्य विकटवर्मनृपरूपेण मिथिलापतिप्रहारवर्मात्मजोपहारवर्मात्मना च मर्त्यलोकेऽवतरिष्यामि । त्वं च कामरूपाधिपतेः कलिङ्गवर्मनाम्नः कन्या कल्पसुन्दरी नाम भूत्वा ज्यायसा मदंशेन विकटवर्मणा प्रथममल्पीयांसमनेहसं संगता तस्मिन्विकटवर्मणि मन्मूर्तावेव लयमुपगते पुनरुपहारवर्मात्मकं कनीयांसं मदंशमुपलभ्य तेन साकं विविधसुखोपभोगमनुभविष्यसि । इति पाठान्तरम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पचर्य यावज्जीवं रमेयम्' इति । तदयमर्थो भव्य एव भवता निराशंक्यः' इति । प्रतिबुध्य च प्रीतियुक्तस्तदहरपि प्रियासंकेतव्यतिकरादिस्मरणेनाहमनैषम् ।

अन्येद्युरनन्यथावृत्तिरनङ्गो मय्येवेषुवर्षमवर्षत् । अशुष्यच्च ज्योतिष्मतः प्रभामयं सरः । प्रासरच्च तिमिरमयः कर्दमः । कार्दमिकनिवसनश्च दृढतरपरिकरः खड्गपाणिरुपहृतप्रकृतोपस्करः । स्मरन्मातृदत्तान्यभिज्ञानानि राजमन्दिरपरिखामुदम्भसमुपातिष्ठम् । अथोपखातं मातृगृहद्वारे पुष्करिकया प्रथमसंनिधापितां वेणुयष्टिमादाय तया शायितया च परिखाम्, स्थापितया च प्राकारभित्तिमलङ्घयम् । अधिरुह्य पक्वेष्टकाचितेन गोपुरोपरितलाधिरोहेण सोपानपथेन भुवमवा-

---

एकपूर्वा पूर्वं केनचिदेकेन भुक्ता सती । उपचर्य सेवित्वा । यावज्जीवं जीवकालपर्यन्तम् । अयमर्थः परस्त्रीगमनरूपः । भव्यः कल्याणकृदेव । 'भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्' इत्यमरः । निराशंक्यः नान्यथा विचारणीयः । प्रतिबुध्य निद्राया उत्थाय । प्रियायाः कल्पसुन्दर्याः संकेतस्य तत्स्थानस्य, व्यतिकरस्य तत्र कर्तव्यव्यापारस्य च स्मरणेन चिन्तया । अनैषं यापयामि स्म ।

**अन्येद्युरिति** । परस्मिन्दिवसे संगमार्थं संकेतितदिने इति यावत् । न वर्ततेऽन्यथा मदुपरि बाणवर्षणातिरिक्ता वृत्तिः चेष्टा यस्य सः व्यापारान्तरं सर्वं परित्यज्येत्यर्थः । अनङ्गः कामः । इषुवर्षं बाणवृष्टिम् । अशुष्यन्निर्जलीभूतम् । ज्योतिष्मतः सूर्यस्य प्रभामयं प्रकाशात्मकं सरः कासारः । अस्तगमनकालस्यासन्नत्वान्निस्तेजा जातः सूर्य इत्यर्थः । 'पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः' इत्यमरः । तिमिरमयः अन्धकाररूपः । 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तमिरं तमः' इत्यमरः । तथाविधः कर्दमः पङ्कः प्रासरत्सर्वत्र व्याप्त आसीदित्यर्थः । सरःशोषे यथा कर्दमो बहिर्निस्सरति तथा सूर्ये निष्प्रभेऽन्धकारो निःसृत इति भावः । 'निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः । कर्दमेन पङ्केन रक्तं कार्दमिकम् । 'तेन रक्तं रागात्' इत्यधिकारे 'लाक्षारोचनाट्ठक्' इत्यत्र 'शकलकर्दमाभ्यामुपसंख्यानम्' इतिवार्तिकादत्र ठक् । तादृशं निवसनं वस्त्रं यस्य तथाविधः सन् । दृढतरः परिकरः कच्छबन्धः यस्य तथाभूतः 'कक्षाबन्धः परिकरः' इति वैजयन्ती । उपहृतः स्वीकृतः प्रकृतस्य कार्यस्य स्त्रीसंगरूपस्य उपस्करः तदुपयोगिसामग्री येन तथाभूतः । स्मरन्मनसा पुनःपुनरावर्तयन् । मात्रा धात्र्या तापस्या दत्तानि कथितानि अभिज्ञानानि लक्षणानि । राजमन्दिरस्य राजप्रासादस्य परिखां भागचतुष्टयेऽपि खनितां स्वल्पनदीम् । उदम्भसं परिपूर्णजलाम् । उपातिष्ठं तत्समीपं गतोऽभूवम् । **अथेति** । खातस्य परिखायाः समीपे इत्युपखातमित्यव्ययीभावः । प्रथमं मत्प्रस्थानात्प्रागेव संनिधापितां स्थापिताम् । वेणुयष्टिं वंशकाष्ठम् । शायितया कूलद्वये स्थापितया तया वंशयष्ट्या । स्थापितया भूमौ प्राकाराग्रे च निहितया । प्राकारभित्तिमावरणकुड्यमलंघयमुल्लंघितवान् । 'प्राकारो वरणः सालः' इत्यमरः । पक्वाभिरिष्टकाभिर्मृत्पिण्डविशेषैश्चितेन निर्मितेन । 'इष्टकेषीकमालानां चिततूलभारिषु' इति पूर्वपदस्य ह्रस्वः । गोपुरस्य पुरद्वारस्योपरितले ऊर्ध्वभागे अधिरोहः यस्येति एता-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तरम् । अवतीर्णश्च बकुलवीथीमतिक्रम्य चम्पकावलिवर्त्मना मनागिवोपसृत्योत्तराहि करुणं चक्रवाकमिथुनरवमशृणवम् । पुनरुदीचा पाटलिपथेन स्पर्शलभ्यविशालसौधकुड्योदरेण शरक्षेपमिव गत्वा पुनः प्राचा पिण्डीभाण्डीरषण्डमण्डितोभयपार्श्वेन सैकतपथेन किंचिदुत्तरमतिक्रम्य पुनरवाचीं चूतवीथीमगाहिषि । ततश्च गहनतरमुदरोपरचितरत्नवेदिकं माधवीलतामण्डपमीषद्विवृतसमुद्गकोन्मिषितभासा दीपवर्त्या न्यरूपयम् । प्रविश्य चैकपार्श्वे फुल्लपुष्पनिरन्तरकुरण्टपोतपंक्तिभित्तिपरिगतं गर्भगृहम्, अवनिपतितारुणाशोकलतामयमभिनवकुसुमकोरकपुलकलाञ्छितं प्रत्यग्रप्रवालपटलपाटलं कपाटमुद्घाट्य प्राविक्षम् । तत्र चासी-

---

दृशेन सोपानपथेन मार्गेण। 'पुरद्वारं तु गोपुरम्'। 'आरोहणं स्यात्सोपानं निःश्रेणिस्त्वधिरोहिणी' इत्यमरः। 'ऋक्पूर–' इति अप्रत्ययः। अवातरमवतीर्णवान्। बकुलवीथीं बकुलवृक्षपांक्तिम्। 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी' इत्यमरः। अतिक्रम्यातीत्य। चम्पकावलिवर्त्मना चम्पकवृक्षश्रेण्यावृतमार्गेण। मनागिवोपसृत्य किंचिद्दूरं गत्वा। उत्तराहि उत्तरस्यां दिशि। 'दिक्छब्देभ्यः सप्तमी--' इत्यधिकारे 'उत्तराच्च' इत्याहिप्रत्ययः। करुणं दीनतायुक्तं यथातथा। चक्रवाकयोः कोकपक्षिणोर्मिथुनस्य स्त्रीपुंसयो रवं शब्दम्। 'कोकश्चक्रश्चक्रवाको राथाङ्गाह्वयनामकः' 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः। अशृणवमाकर्णितवान्। उदीचोत्तरदिग्गामिना। स्पर्शलभ्यं हस्तप्राप्यं विशालस्यातिमहतः सौधकुड्यस्य राजगृहभित्तेरुदरं मध्यदेशो यत्र स्थितस्य पुरुषस्यैतादृशेन। 'सौधोऽस्त्री राजसदनमुपकार्योपकारिका' इत्यमरः। 'भित्तिः स्त्री कुड्यमेडूकम्' इति च। शरक्षेपमिव क्षिप्तः शरो यावद्दूरं गच्छेत्तावद्दूरपर्यन्तम्। प्राचा पूर्वदिग्गामिना। पिण्डीनां रक्ताशोकवृक्षाणां भाण्डीराणां मल्लिकालतानां च परस्परं स्त्रीपुंसवद्वेष्टितानां षण्डः समूहः। 'रक्ताशोके तु पिण्डी स्यात्' इति वैजयन्ती। 'भाण्डीरो मल्लिकाबन्धः' इत्यजयः। तेन मण्डितौ उभौ पार्श्वौ यस्यैतादृशेन। सैकतपथेन वालुकामार्गेण। परिष्कृतौ 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः। अवाचीं दक्षिणदिग्गामिनीम्। 'प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः। उत्तरा दिगुदीची स्यात्' इत्यमरः। चूतवीथीं रसालावलिम्। 'आम्रश्चूतो रसालश्च' इत्यमरः। अगाहिषि प्रविष्टवान्। **ततश्चेति**। गहनतरमत्यन्तं निबिडम्। उदरे मध्यदेशे उपरचिता निर्मिता रत्नवेदिका यस्मिन्नेतादृशं माधवीलतानां वासन्तिलतानां मण्डपम्। ईषद्विवृतात् किंचिदुद्घाटितात्संपुटादुन्मिषिता बहिर्निःसृता भाः कान्तिर्यस्यास्तथाविधया दीपवर्त्या दीपकशिखया न्यरूपयमवलोकयम्। एकपार्श्वे कस्मिंश्चिद्भागे। फुल्लपुष्पैर्विकसितप्रसूनैर्निरन्तराणां व्याप्तानां कुरण्टपोतानां बालकुरवकवृक्षाणां पङ्क्त्यैव भित्त्या परिगतमावृतम्। गर्भगृहं निवासगृहम्। 'गर्भागारं वासगृहम्' इत्यमरः। अवनिपतिता भूमिपर्यन्तं लम्बमानाः या अरुणाशोकलतास्तन्मयं तद्रूपम्। अभिनवा नूतना ये कुसुमकोरकाः पुष्पकलिकास्तेषां पुलकैरुद्भेदैर्लाञ्छितं चिह्नितम्। प्रत्यग्राणां नवानां प्रवालानां किसलयानां पटलेन समूहेन पाटलं किंचिद्रक्तवर्णम्। 'श्वेतरक्तस्तु पाटलः' इत्यमरः। कपाटं गृहद्वारपिधानमुद्घाट्या पसार्य।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

त्स्वास्तीर्णं कुसुमशयनम्, सुरतोपकरणवस्तुगर्भाश्च कमलिनीपलाशसंपुटाः, दन्तमयस्तालवृन्तः, सुरभिसलिलभरितश्च भृङ्गारकः। समुपविश्य मुहूर्तं विश्रान्तः परिमलमतिशयवन्तमाघ्रासिषम्। अश्रौषं च मन्दमन्दं पदशब्दम्। श्रुत्वैव संकेतगृहान्निर्गत्य रक्ताशोकस्कन्धपार्श्वव्यवहिताङ्गयष्टिः स्थितोऽस्मि। सा च सुभ्रूः सुषीमकामा शनैरुपेत्य तत्र मामदृष्ट्वा बलवदव्यथिष्ट। व्यसृजच्च मत्तराजहंसीव कण्ठरागवल्गुगद्गदां गिरम्—'व्यक्तमस्मि विप्रलब्धा। नास्त्युपायः प्राणितुम्। अयि हृदय, किमिदमकार्यं कार्यवदध्यवसाय तदसंभवेन किमेवमुत्ताम्यसि। भगवन्पञ्चबाण, कस्तवापराधः कृतो मया यदेवं दहसि, न च भस्मीकरोषि' इति। अथाहमाविर्भूय विवृतदीपभाजनः 'भामिनि, ननु

---

प्राविक्षं प्रविष्टवान्। 'विश प्रवेशने' इत्यतो लुङि 'शल इगुपधादनिटः क्सः' इति क्सः। **तत्र चेति।** गर्भगृहाभ्यन्तरे। कुसुमशयनं पुष्पमयी शय्या। सुरतोपकरणानि रतिकेलिकालोचितानि वस्तूनि गर्भे येषां तथाविधाः कमलिनीपलाशानां नलिनीपत्राणां संपुटा द्रोणाः। तालवृन्तो व्यजनम्। सुरभिणा सुवासितेन जलेन भरितः पूरितः भृङ्गारकः पात्रविशेषः 'भृङ्गारः कनकालुका' इत्यमरः। विश्रान्तः अध्वश्रमहीनः। परिमलं वासनाविशेषम्। 'स्याद्विमर्दे परिमलो गन्धे जनमनोहरे' इति शाश्वतः। आघ्रासिषम् आघ्रातवान्। 'घ्रा गन्धोपादाने' इत्यतो लुङि 'यमरमनमातां सक्च' इतीट्सकौ। **अश्रौषमिति।** आकर्णितवान्। पदशब्दं चरणविन्यासरवम्। श्रुत्वैव तदाकर्णनानन्तरमेव। संकेतगृहात् कल्पसुन्दर्या सह संभोगार्थं नियमितान्माधवीलतामन्दिरात्। निर्गत्य बहिरागत्य। रक्ताशोकस्य स्कन्धपार्श्वे शाखैकदेशे व्यवहिता तिरोभूताऽङ्गयष्टिर्यस्य तथाविधः सन्। सा च सुभ्रूः कल्पसुन्दरी। सुषीमे शैत्योत्पादकस्थले संकेतस्थान इति यावत् कामो यस्याः सा। मद्विरहतप्ता संकेतगृहमागत्य मत्संयोगेनात्मानं शीतलयितुमिच्छन्तीति भावः। 'सुषीमः शिशिरो जडः' इत्यमरः। शनैः हंसवन्मन्दया गत्या। तत्र लतामण्डपे। बलवत्सुतरामव्यथिष्ट खेदं प्राप्तवती। मत्तराजहंसीवोन्मत्तपक्षिविशेषकामिनीव। 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः। कण्ठरागेण वल्गु मनोहराम्। गद्गदां स्वरभङ्गयुक्तां च गिरं वाणीम् असृजत्कथयामासेत्यर्थः। व्यक्तं स्पष्टमेव विप्रलब्धा वृद्धभिक्षुक्या प्रतारिता भवामि। प्राणितुं जीवितुम्। अयि इत्यामन्त्रणे। अकार्यं कर्तुमनुचितमिदं परेण पुरुषेण संगरूपं कार्यवत् कर्तव्येणं तुल्यमध्यवसाय निश्चित्य। तस्य पुरुषान्तरसंयोगस्यासंभवादघटनात्। उत्ताम्यसि विषीदसि। 'तमु कांक्षायाम्'। 'शमामष्टानां दीर्घः श्यनि' इति दीर्घः। **भगवन्निति।** पञ्चबाण हे कामदेव। दहसि पीडयसि। न च भस्मीकरोषि तदा तु मम दुःखाभावात्समीचीनमेव कृतं स्यादिति भावः। **अथेति।** पूर्वोक्तविधिना तस्याः मदासक्तिविशेषद्योतिकां वाणीमाकर्ण्येत्यर्थः। आविर्भूय तस्याः समीपस्थो भूत्वा। विवृतमुद्घाटितं दीपभाजनं दीपकसंपुटो येन तादृशः सन्। भामिनि। इति कुपितायाः नायि-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

बह्वपराद्धं भवत्या चित्तजन्मनो यदमुष्य जीवितभूता रतिराकृत्या कदर्थिता, धनुर्यष्टिर्भ्रूलताभ्याम्, भ्रमरमालामयी ज्या नीलालकद्युतिभिः, अस्त्राण्यपाङ्गवीक्षितवृष्टिभिः, महारजनरञ्जितध्वजपटांशुकं दन्तच्छदमयूखजालैः, प्रथमसुहृन्मलयमारुतः परिमलपटीयसा निःश्वासपवनेन, परभृतोऽतिमञ्जुलैः प्रलापैः, पुष्पमयी पताका भुजयष्टिभ्याम्, दिग्विजयारम्भपूर्णकुम्भमिथुनमुरोजकुम्भयुगलेन, क्रीडासरो नाभिमण्डलेन, संनाह्यरथः श्रोणिमण्डलेन, भवनरत्नतोरणस्तम्भयुगलमूरुयुगलेन, लीलाकर्णकिसलयं चरणतलप्रभाभिः । अतः स्थान एव त्वां दुनोति मीनकेतुः । मां पुनरनपराधमधिकमायासयतीत्येष एव

---

कायाः संबोधनम् । 'कोपना सैव भामिनी' इत्यमरः । बह्वधिकमपराद्धमपराधः कृतः । चित्तजन्मनो मन्मथस्य । तत्कृतानपराधानेवाह—यदित्यादि चरणतलप्रभाभिरित्यन्तम् । अमुष्य कामदेवस्य । जीवितभूता प्राणतुल्या रतिः कामपत्नी । आकृत्या सौन्दर्येण । कदर्थिता तिरस्कृता । भ्रमरमालामयी षट्पदश्रेणीरूपा ज्या मौर्वी । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । नीलानामतिकृष्णवर्णानामलकानां चूर्णकुन्तलानां द्युतिभिः प्रभाभिः । 'स्युः प्रभारुग्रुचिस्त्विड्भाभास्छविद्युतिदीप्तयः' इत्यमरः । अपाङ्गवीक्षितानां कटाक्षदर्शनानां वृष्टिभिर्वर्षैः । महारजनं कुंकुमम् । 'स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि' इत्यमरः । तेन रञ्जितं चित्रितं रक्तवर्णमित्यर्थः । ध्वजपटांशुकं पताकावस्त्रखण्डः । 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः । दन्तच्छदयोरोष्ठयोर्मयूखजालैः किरणसन्दोहैः । मलयमारुतो दक्षिणवायुः । 'समीरमारुतमरुत्' इत्यमरः । परिमलेन सौगन्ध्येन पटीयसा मलयवायुतिरस्कारे समर्थेन । निःश्वासपवनेन श्वासवायुना । परभृतः कोकिलः । 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः । अतिमञ्जुलैरतिमनोहरैः प्रलापैः सुभाषणैः 'कान्तं मनोहरं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः । पताका ध्वजयष्टिः । दिग्विजयारम्भे दिग्विजयार्थं प्रस्थानारम्भकालेऽभिमुखतया स्थाप्यमानं पूर्णकुम्भयोर्मिथुनं युगलम् । उरोजकुम्भयोः घटवत्पीनोन्नतयोः स्तनयोर्युगलेन द्वन्द्वेन । क्रीडासरो जलकेल्यर्थं निर्मिता सरसी । सन्नाह्यरथो दिग्विजयार्थं नियुक्तः स्यन्दनः । भवने कामदेवस्य गृहे तद्द्वारदेशे इत्यर्थः । रत्नयुक्तानां तोरणानां बन्धनार्थं स्थापितौ या स्तम्भौ कदलीकाण्डौ तयोर्युगलम् । लीलायां विहारकाले कर्णकिसलयं श्रवणालंकारीभूतः पल्लवः चरणतलस्यातिरक्तपादाधोभागस्य प्रभाभिः कान्तिभिः । अत्र सर्वत्र पूर्वोक्तस्य 'कदर्थिता' इत्यस्य पदस्य यथायोग्यं लिङ्गवचनविपर्यासेनान्वयो ज्ञेयः । अतः त्वया तं प्रति बहूनामपराधानां कृतत्वात् । स्थाने युक्तमेव । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । दुनोति संतापयति । 'टुदु उपतापे' स्वादिः । मीनो मत्स्यः केतौ ध्वजे यस्य तादृशो मदन इत्यर्थः । एतावतः प्रकरणस्य मन्मथसामप्रीतोऽप्यतिकोमलैरवयवैस्त्वमसि निर्मितेति तत्संतोषार्थं नायिकास्तवने एव तात्पर्यम् । **मां पुनरिति** । अनपराधं नैकोऽप्यपराधो मया कृत एतादृशं मां तु आयासयति पीडयति । एष एवानपराधिनो



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तस्य दोषः । तत्प्रसीद सुन्दरि, जीवय मां जीवनौषधिभिरिवापाङ्गैरनङ्गभुजंगदष्टम्' इत्याश्लिष्टवान् । अरीरमं चानङ्गरागपेशलविशाललोचनाम् । अवसितार्थां चारक्तवलितेक्षणामीषत्स्वेदरेखोद्भेदजर्जरितकपोलमूलामनर्गलकलकलप्रलापिनीमकरुणदशनकररुहार्पणव्यतिकरामत्यर्थपरिश्लथाङ्गीमार्तामिव लक्षयित्वा मानसीं शारीरीं च धारणां शिथिलयन्नात्मानमपि तया समानार्थमापादयम् । तत्क्षणविमुक्तसंगतौ रतावसानिकं विधिमनुभवन्तौ चिरपरिचिताविवातिरूढविश्रम्भौ क्षणमवातिष्ठावहि । पुनरहमुष्णमायतं च निःश्वस्य किंचिद्दीनदृष्टिः सचकितप्रसारिताभ्यां भुजाभ्यामेनामनतिपीडं परिष्वज्य नातिविशदमचुम्बिषम् । अश्रुमुखी तु सा 'यदि प्रयासि नाथ, प्रयातमेव मे जीवितं गणय । नय मामपि । न चेदसौ दासजनो निष्प्रयोजनः' इत्यञ्जलिमवतंसतामनैषीत् । अवादिषं च ताम्—'अयि मुग्धे, कः सचेतनः स्त्रियमभिकामयमानां नाभिनन्दति । यदि मदनुग्रहनिश्चलस्तवाभिसंधिराचराविचारं मदुपदिष्टम् । आदर्शय रहसि राज्ञे मत्सादृश्यगर्भं चित्रपटम् । आचक्ष्व च

---

मम पीडनमेव । प्रसीद मां प्रति प्रसन्नचित्ता भव । जीवनौषधिभिरिव मृतसंजीवनीमूलिकातुल्यैः अपाङ्गैः कटाक्षावलोकनैः । अनङ्गः काम एव भुजङ्गः सर्पस्तेन दष्टम् । इतीत्यनन्तरं कथयन्निति शेषः । आश्लिष्टवान् आलिङ्गितवान् । अरीरमं रमयामि स्म । अनङ्गरागेण कामानुरागेण पेशले मनोज्ञे विशाले दीर्घे च लोचने नयने यस्यास्तादृशीं कल्पसुन्दरीम् । अवसितः समाप्तोऽर्थो वीर्यधारणरूपं प्रयोजनं यस्यास्तथाविधाम् । आरक्ते किंचिदरुणवर्णे । वलिते वक्रीकृते च ईक्षणे नयने यस्यास्ताम् । स्वेदरेखाया घर्मजलधाराया उद्भेदेन निःसरणेन जर्जरितं स्विन्नं कपोलयोर्गण्डयोर्मूलमधस्तलं यस्यास्तथाविधाम् । अनर्गलमप्रतिरुद्धं यथा तथा कलकलप्रलापिनीमव्यक्तमधुरं वदन्तीम् । अकरुणो दयारहितो दशनानां दन्तानां कररुहाणां नखानां च अर्पणव्यतिकरो मत्कृतः क्षतीकरणव्यापारो यस्यास्ताम् । अत्यर्थमत्यन्तं परिश्लथानि दुर्बलीभूतान्यङ्गानि यस्यास्ताम् । आर्तां पीडिताम् । लक्षयित्वा दृष्ट्वा । **मानसीं शारीरीं चेति** । 'शरीरधारणा यत्तु भौतिकं तु निरीक्षणम् । मानसं तु मुनीनां स्यादाश्रमेषु विसर्पणम् । अभ्यासाद्धारयेद्रेतो यावत् स्याच्च्युतिनिर्वृतिः ॥' इति वात्स्यायनोक्तप्रकारां धारणाम् । तया कल्पसुन्दर्या । समानार्थं सदृशम् । रतावसानिकं सुरतावसानकालोचितम् । आतिरूढः नितरां बद्धमूलो विश्रम्भो विश्वासो ययोस्तौ । अवातिष्ठावहि स्थितौ । आयतं दीर्घं यथा तथा । अनतिपीडं न जायेतातिपीडा यस्मिन्कर्मणि तद्यथा तथा । परिष्वज्यालिङ्ग्य । प्रयातमुच्छिन्नप्रायमेव गणय विचारय । नय भवद्वासं मामपि प्रापय । अञ्जलिं पाणियुगलम् । 'पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्' इत्यमरः । अवतंसतां शिरोभूषणताम् । सचेतनः विचारशाली । अभिकामयमानां स्वयमेव पुरुषाभिमुखमेत्य प्रार्थयमानाम् । नाभिनन्दति न श्लाघते न स्वीकुर्यादिति भावः । व्यञ्जितमिदं कालिदासेन शाकुन्तले 'लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो जनः' इत्यनेनार्द्धेन । अभिसंधिराशयः । आचर विधेहि । अविचारं न विचारं कृत्वैव राज्ञे विकटवर्मणे । मत्सादृश्यं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

किमियमाकृतिः पुरुषसौन्दर्यस्य पारमारूढा न वा ' इति । ' बाढमारूढा ' इति नूनमसौ वक्ष्यति । ब्रूहि भूयः—' यद्येवम्, अस्ति कापि तापसी देशान्तरभ्रमणलब्धप्रागल्भ्या मम च मातृभूता'। तयेदमालेख्यरूपं पुरस्कृत्याहमुक्ता—' सोऽस्ति तादृशो मन्त्रो येन त्वमुपोषिता पर्वणि विविक्तायां भूमौ पुरोहितैर्हुतमुक्ते सप्तार्चिषि नक्तमेकाकिनी शतं चन्दनसमिधः, शतमगुरुसमिधः कर्पूरमुष्टीः पट्टवस्त्राणि च प्रभूतानि हुत्वा भविष्यस्येवमाकृतिः । अथ चालयिष्यसि घण्टाम् । घण्टापुटक्वणिताहूतश्च भर्ता भवत्यै सर्वरहस्यमाख्याय निमीलिताक्षो यदि त्वामालिङ्गेत्, इयमाकृतिरमुमुपसंक्रामेत् । त्वं तु भविष्यसि यथापुराकारैव यदि भवत्यै भवत्प्रियाय चैवं रोचेत, न चास्मिन्विधौ विसंवादः कार्यः' इति । ' वपुश्चेदिदं तवाभिमतं सह सुहृन्मन्त्रिभिरनुजैः पौरजानपदैश्च संप्रधार्य तेषामप्यनुमते कर्मण्यभिमुखेन स्थेयम् ' इति । स नियतमभ्युपैष्याति । पुनरस्यामेव प्रमदवनवाटीशृङ्गाटिकायामाथर्वणिकेन विधिना संज्ञपितपशुनाभिहुत्य

---

मम प्रतिकृतिर्गर्भे मध्ये यस्य तथाविधम् । आचक्ष्व वक्ष्यमाणविधया प्रश्नं च कुरु । पारमुपरितनीं सीमाम् । आरूढा प्राप्ता । बाढं नूनम् । आरूढा पुरुषलावण्यस्य परां काष्ठां प्राप्ता । असौ विकटवर्मा । वक्ष्यति कथयिष्यति । ब्रूहीति । विकटवर्माणं पुनः कथय । एवं सर्वसौन्दर्यातिशायिनी चेत् । देशान्तरभ्रमणेन नानादेशपर्यटनेन लब्धं प्रागल्भ्यं चातुर्यं तथाविधा । मातृभूता मातृवद्विश्वासयोग्या । आलेख्यरूपं चित्रपटम् । पुरस्कृत्य मम सन्निधौ निधाय । सः प्रसिद्धः । उपोषिता निराहारा सती । ' उपवासः स विज्ञेयः सर्वाहारविवर्जितः' इति स्मृतिः । पर्वण्यमावास्यादिवसे । विविक्तायां निर्जनायां विशुद्धायां च । ' विविक्तौ पूतविजनौ' इत्यमरः । पुरोहितैर्वैदिकब्राह्मणैः । पूर्वं हुतः पश्चान्मुक्तः हुतमुक्तः । ' पूर्वकालैकसर्वजरत्—' इति समासः । एतादृशे सप्तार्चिषि वह्नौ । ' सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ' इत्यमरः । नक्तं रात्रौ । एकाकिनी असहायवती । ' एकादाकिनिच्चासहाये ' इत्याकिनिच्प्रत्ययः । चन्दनसमिधः चन्दनदारूणि ' काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम्' इत्यमरः । कर्पूरमुष्टीः मुष्टिपरिमितकर्पूरान् । ' मुष्टिर्बद्धकरे ' इति विश्वः । पट्टवस्त्राणि क्षौमवसनानि । प्रभूतानि बहुलानि । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' इत्यमरः। हुत्वाऽग्निसात्कृत्वा । एवमाकृतिरेवं चित्रे दृश्यमानाकृतिसदृशी आकृतिः स्वरूपं यस्याः सा । क्वणितेन शब्देनाहूत आकारितः। आख्याय कथयित्वा । निमीलिताक्षो मुद्रितलोचनः । अमुं विकटवर्माणं तव भर्तारम् । उपसंक्रामेत् संक्रान्ता भवेत् । पुरा यथा आकार आसीत्तद्वदेवेदानीमपि जात आकारो यस्याः सा यथापुराकारा । भवत्प्रियाय तव पत्ये च । ' रुच्यर्थानां प्रीयमाणः ' इति संप्रदानता । रोचेत प्रीतिकरं स्यात् । विसंवादोऽन्याथाभावः । एवमेव वैजयन्ती । वपुः शरीरम् । अभिमतमिष्टम् । संप्रधार्य निर्णयं कृत्वा । अभिमुखेन भवतोद्युक्तेन स्थेयं वर्तितव्यम् । स ते पूर्वभर्ता विकटवर्मा । अभ्युपैष्यत्यङ्गीकरिष्यति । प्रमदवनवाटया अन्तःपुरविहारवनस्य शृङ्गाटिकायां

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मुक्ते हिरण्यरेतसि धूमपटेन संप्रविष्टेन मयास्मिन्नेव लतामण्डपे स्थातव्यम् । त्वं पुनः प्रगाढायां प्रदोषवेलायामालपिष्यसि कर्णे कृतनर्मस्मिता विकटवर्माणम्—'धूर्तोऽसि त्वमकृतज्ञश्च । मदनुग्रहलब्धेनापि रूपेण लोकलोचनोत्सवायमानेन मत्सपत्नीरभिरमयिष्यसि । नाहमात्मविनाशाय वेतालोत्थापनमाचरेयम्' इति । श्रुत्वेदं त्वद्वचः स यद्वादिष्यति तन्मह्यमेकाकिन्युपागत्य निवेदयिष्यसि ततः परमहमेव ज्ञास्यामि । मत्पदचिह्नानि चोपवने पुष्करिकया प्रमार्जय' इति । सा 'तथा' इति शास्त्रोपदेशमिव मदुक्तमादृत्यातृप्तसुरतरागैव कथंकथमप्यगादन्तःपुरम् । अहमपि यथाप्रवेशं निर्गत्य स्वमेवावासमयासिषम् ।

अथ सा मत्तकाशिनी तथा तमर्थमन्वतिष्ठत् । अतिष्ठच्च तन्मते स दुर्मतिः । अभ्रमच्च पौरजानपदेष्वियमद्भुतायमाना वार्ता—'राजा किल विकटवर्मा देवीमंत्रबलेन देवयोग्यं वपुरासादयिष्यति । नूनमेष विप्रलम्भो नातिकल्याणः । कैव

---

संकुचिते चतुष्पथे । 'शृङ्गाटकचतुष्पथे' इत्यमरः । 'ह्रस्वे' इति कन् । आथर्वणिकेन पुरोहितेन । 'आथर्वणः पुरोधाः स्याच्छान्तिपुष्टिकरो द्विजः' इति कामन्दकीयः । विधिना विधिमनुसृत्य । संज्ञपितेन हतेन । 'संज्ञपितं विशसितं समालब्धम्' इति वररुचिः । मुक्ते पुरोधसा परित्यक्ते ॥ हिरण्यरेतस्यग्नौ । धूम इव कृष्णवर्णः पटो यस्य तेन स्थातव्यं स्थातुमुचितम् । प्रगाढायामतिदृढायाम् । 'गाढबाढदृढानि च' इत्यमरः । प्रदोषवेलायां रात्र्यारम्भकाले । आलपिष्यसि कर्णे गुप्तं यथा तथा कथयिष्यसि । कृतं नर्मस्मितं परिहासहास्यं यया तादृशी सती । 'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च' इत्यमरः । **धूर्तोऽसीति** । वञ्चकस्त्वमित्यर्थः । 'पापो धूर्तस्तु वञ्चकः' इत्यमरः । न च कृतमुपकारं निरतिशयसौन्दर्यप्रापणरूपं जानासीत्येवंशीलश्च त्वमसि । तदेव स्पष्टयति । ममानुग्रहेण कृपया लब्धेन प्राप्तेन । लोकलोचनानां जनदृष्टीनामुत्सवायमानेनाश्चर्यकारिणा रूपेण लावण्येन अभिरमयिष्यसि सन्तोषयिष्यसि । अस्माद्धेतोरहमात्मनो ममैव विनाशाय हानये वेतालोत्थापनं भूताविशेषप्रकटनं नाचरेयं नैव करिष्यामीत्यर्थः । स विकटवर्मा । उपागत्य मन्निकटमागत्य । ज्ञास्यामि यथोचितं विचार्य करिष्यामीति भावः । मम पदचिह्नानि चरणन्यासलक्षणानि । प्रमार्जय निष्कासय । अन्यथा रहस्यमावयोः प्रकटीभविष्यतीति भावः । सा कल्पसुन्दरी । आदृत्यादरेण श्रुत्वा । यथाप्रवेशं यथापूर्वं लतागृहं प्रविष्टस्तेन मार्गेणेति यावत् । स्वमेवावासं मम निवासस्थानं भिक्षुकीगृहमिति भावः । अयासिषं गतवान् ।

**अथेति** । पूर्वोक्तप्रकारेण कल्पसुन्दरीमुपभुज्येतिकर्तव्यतां चोपदिश्य मयि गृहं गते सति । सा मत्तकाशिनी वरवर्णिनी कल्पसुन्दरी । तमर्थं मदुपदिष्टं कार्यमन्वतिष्ठच्चकार । स दुर्मतिर्विकटवर्मा तस्याः मतेऽभिप्रायेऽतिष्ठदासक्तो जातः । अद्भुतायमानाऽऽश्चर्यकारिणी । मन्त्रबलेन मन्त्रसामर्थ्येन । देवयोग्यममरोचितमतिसुन्दरमिति यावत् । वपुः शरीरमासादयिष्यति प्राप्स्यति ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कथा प्रमादस्य। स्वस्मिन्नेवान्तःपुरोपवने स्वाग्रमहिष्यैव संपाद्यः किलायमर्थः। तथाहि बृहस्पतिप्रतिमबुद्धिभिर्मन्त्रिभिरप्यभ्यूह्यानुमतः। यद्येवं भावि नान्यदतः-परमस्ति किंचिदद्भुतम्। अचिन्त्यो हि मणिमंत्रौषधीनां प्रभावः' इति प्रस्तुतेषु लोकप्रवादेषु प्राप्ते पर्वदिवसे, प्रगाढायां प्रौढतमासि प्रदोषवेलायामन्तःपुरोद्याना-दुदैरयद्धूर्जटिकण्ठधूम्रो धूमोद्गमः। क्षीराज्यदधितिलगौरसर्षपवसामांसरुधिराहु-तीनां च परिमलः पवनानुसारी दिशिदिशि प्रावात्सीत्। प्रशान्ते च सहसा धूमोद्गमे तस्मिन्नहमविशम्। निशान्तोद्यानमगाच्च गजगामिनी। आलिंग्य च मां सस्मितं समभ्यधत्त—'धूर्त, सिद्धं ते समीहितम्। अवसितश्च पशुरसौ। अमुष्य प्रलोभनाय त्वदादिष्टया दिशा मयोक्तम्—'कितव, न साधयामि ते सौन्दर्यम्। एवं सुन्दरो हि त्वमप्सरसामपि स्पृहणीयो भविष्यसि, किमुत मानुषीणाम्। मधु-कर इव निसर्गचपलो यत्र क्वचिदासज्जति भवादृशो नृशंसः' इति। तेन तु मे पादयोर्निपत्याभिहितम्—'रम्भोरु, सहस्व मत्कृतानि दुश्चरितानि। मनसापि न चिन्तयेयमितःपरमितरनारीम्। त्वरस्व प्रस्तुते कर्मणि' इति। तदहमीदृशेन वैवा-हिकेन नेपथ्येन त्वामभिसृतवती। प्रागपि रागाग्निसाक्षिकमनङ्गेन गुणरूपा दत्तैव

---

विप्रलम्भो वञ्चनात्मकः। अतिकल्याणः श्रेयस्करो न भवति। प्रमादस्यानवधानतायाः। 'प्रमा-दोऽनवधानता' इत्यमरः। अन्तःपुरस्योपवने क्रीडोद्याने। स्वस्याग्रमहिष्या प्रधानराज्ञ्या कल्प-सुन्दर्यैव। संपाद्यः साधनीयः। अयमर्थः निरतिशयरूपप्राप्तिरूपः। बृहस्पतिप्रतिमा तत्तुल्या बुद्धिर्येषां तैः मन्त्रिभिः सचिवैरपि। 'मन्त्री धीसचिवोऽमात्यः'। अभ्यूह्य सम्यग्विचारं कृत्वा। एवमुक्तप्रकारेण भावि यदि भविष्यति चेत्। अचिन्त्यो इयत्तया निर्णेतुमशक्यः प्रभावो महिमा। लोकप्रवादेषु जनानां भाषणेषु। प्रौढतमासि गाढान्धकारयुतायां प्रदोषवेलायां रजनी-मुखसमये उदैरयत्समुत्थितोऽभूत्। धूर्जटेः शिवस्य कण्ठवत् धूम्रः नीलरक्तः। धूमोद्गमः। प्रसरः। गौरसर्षपः श्वेतवर्णः सिद्धार्थः। 'सिद्धार्थस्त्वेष धवलः' इत्यमरः। वसा वपा। 'हृन्मेदस्तु वपा वसा' इत्यमरः। मांसमामिषम्। 'पिशितं तरसं मांसं पललं क्रव्यमामिषम्' इत्य-मरः। रुधिरमसृक्। परिमलो गन्धः। पवनानुसारी वायुमनुसृत्य गच्छन्। दिशिदिशि प्रतिदि-शम्। प्रावात्सीत्प्रसरति स्म। सहसा शीघ्रमेव धूमस्योद्गमे पटले प्रशान्ते उत्सन्ने सति। तस्मिन् लतामण्डपे। निशान्तोद्यानं गृहोपवनम्। गजवद्गच्छतीति गजगामिनी। समभ्यधत्ताचचक्षे। धूर्त हे वञ्चनापटो! समीहितं वाञ्छितम्। असौ विकटवर्मात्मकः पशुरवसित आसन्नमरणो वर्तत इत्यर्थः। प्रलोभनाय वञ्चनार्थः। त्वयाऽऽदिष्टया दिशा कथितया रीत्या। कितवेति। साध-यामि संपादयिष्यामि। अप्सरसां देवकन्यानामपि स्पृहणीयोऽभिलषणीयः। मानुषीणां मनुष्य-स्त्रीणाम्। मधुकरः षट्पदः। निसर्गचपलः स्वभावादेव चलचित्तः। यत्रक्वचिद्यत्रकुत्रापि। नृशंसः क्रूरः। अभिहितं कथितम्। मया कृतान्याचरितानि दुश्चरितानि दुष्कृत्यानि। इतरनारीं त्वद्व्यतिरिक्तां स्त्रियम्। त्वरस्व शीघ्रतामवलम्बस्व। वैवाहिकेन विवाहयोग्येन नेपथ्येन वेषेण।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तुभ्यमेषा जाया। पुनरपीमं जातवेदसं साक्षीकृत्य स्वहृदयेन दत्ता इति प्रपदेन चरणपृष्ठे निष्पीड्योत्क्षिप्तपादपार्ष्णीरितरेतरव्यातिषक्तकोमलांगुलिदलेन भुजलताद्वयेन कंधरां ममावेष्ट्य सलीलमाननमानमय्य स्वयमुन्नामितमुखकमला विभ्रान्तविशालदृष्टिरसकृदभ्यचुम्बत्। अथैनाम् 'इहैव कुरण्टकगुल्मगर्भे तिष्ठ यावदहं निर्गत्य साधयेयं साध्यं सम्यक्' इति विसृज्य तामुपसृत्य होमानलप्रदेशमशोकशाखावलम्बिनीं घण्टामचालयम्। अकूजच्च सा तं जनं कृतान्तदूतीवाह्वयन्ती। प्रावर्तिषि चाहमगुरुचन्दनप्रमुखानि होतुम्। आयासीच्च राजा यथोक्तं देशम्। शङ्कापन्नमिव किंचित्सविस्मयं विचार्य तिष्ठन्तमब्रवम्—'ब्रूहि सत्यं भूयोऽपि मे भगवन्तं चित्रभानुमेव साक्षीकृत्य। न चेदनेन रूपेण मत्स-

---

अभिसृतवती प्राप्ताऽस्मि। पुरैव पूर्वमेव। रागोऽनुराग एवाग्निः साक्षी साक्षाद्द्रष्टा यस्मिन् कर्मणि यथा तथा। गुरुणाऽऽचार्यस्थानापन्नेनानङ्गेन कामदेवेन। जाया पत्नी। इमं पुरोवर्तिनं जातवेदसमग्निं साक्षीकृत्य साक्षित्वेन स्थापयित्वा 'साक्षाद्द्रष्टरि संज्ञायाम्' इति इनिप्रत्ययान्तात् च्विः। स्वहृदयेन ममैव मनसा। दत्ता अर्पिता। **प्रपदेनेति**। स्वकीयपादाग्रेण। 'पादाग्रं प्रपदम्' इत्यमरः। चरणपृष्ठे मदीयपादोपरिभागे। उत्क्षिप्तौ ऊर्ध्वं धृतौ पादयोः पार्ष्णी पादाधोभागौ यया तादृशी सती। 'पुमान्पार्ष्णिस्तयोरधः' इत्यमरः। इतरेतरमन्योन्यं व्यतिषक्तानि योजितानि कोमलानि मृदूनि अतएवांगुलयो दलानि किसलयानीव यस्य तथाविधेन एककरांगुलीरन्यकरांगुलिभिः संवेष्टयेत्यर्थः। भुजौ लते इव भुजलते। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः। तयोर्द्वयेन युग्मेन। कन्धरां ग्रीवाम्। 'अथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः। आवेष्ट्याश्लिष्य। आननमानमय्य मदीयं मुखं किंचिन्नम्रीकृत्य। स्वयं चोन्नामितमूर्ध्वीकृतं मुखं कमलमिव यया तादृशी सती। असकृत्पुनः पुनः। अभ्यचुम्बच्चुम्बितवती। 'चुबि वक्त्रसंयोगे'। **अथेति**। एनां कल्पसुन्दरीम्। कुरण्टकानां श्वेतवर्णकुरबकानां गुल्मस्य स्तम्बस्य गर्भे मध्यदेशे। 'तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः' 'अप्रकाण्डस्तम्बगुल्मौ' इत्यमरः। साध्यं कर्तव्यं कर्म। सम्यक् साधु यथा तथा। उपसृत्य तत्समीपमेत्य। अचालयं नादितवानित्यर्थः। अकूजत् शब्दमुत्पादयामास। 'कूज अव्यक्ते शब्दे'। तं जनं विकटवर्माणम्। कृतान्तदूतीव यमकिंकरीवत्। 'कृतान्तो यमुनाभ्राता शमनो यमराड्यमः' इत्यमरः। आह्वयन्त्याकारयन्ती। प्रावर्तिषि उद्युक्तोऽभूवम्। होतुमग्नौ प्रक्षेप्तुम्। आयासीदागत्य स्थितः। 'या प्रापणे'। 'यमरमनमातां सक् च' इति सगिटौ। यथोक्तं पूर्वसंकेतितम्। **शङ्कापन्नमिवेति**। नूतनं रूपं प्राप्ता कल्पसुन्दरीवेयमन्या काचिदिति मामालोक्य संदेहं कुर्वन्तमिव। सविस्मयं कथं मन्माहिष्येवंरूपा जाताऽहो महानयं मन्त्राणां महिमेति आश्चर्ययुक्तम्। ब्रूहि सत्यं यथावत् सर्वं कथय। चित्रभानुं साक्षीकृत्याग्निसाक्षिकमित्यर्थः। 'सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः' इत्यमरः। अनेन रूपेण मया

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पत्नीरभिरमयिष्यसि, ततस्त्वयीदं रूपं संक्रामयेयम्' इति । स तदैव 'देव्येवेयम्, नोपाधिः' इति स्फुटोपजातसंप्रत्ययः प्रावर्तत शपथाय । स्मित्वा पुनर्मयोक्तम्—'किं वा शपथेन । कैव हि मानुषी मां परिभविष्यति । यद्यप्सरोभिः संगच्छसे, संगच्छस्व कामम् । कथय कानि ते रहस्यानि । तत्कथनान्ते हि त्वत्स्वरूपभ्रंशः' इति । सोऽब्रवीत्—'अस्ति बद्धो मत्पितुः कनीयान्भ्राता प्रहारवर्मा । तं विषान्नेन व्यापाद्याजीर्णदोषं ख्यापयेयमिति मन्त्रिभिः सहाध्यवसितम् । अनुजाय विशालवर्मणे दण्डचक्रं पुण्ड्रदेशाभिक्रमणाय दित्सितम् । पौरवृद्धश्च पाञ्चालिकः परित्रातश्च सार्थवाहः खनतिनाम्नो यवनाद्वज्रमेकं वसुंधरामूल्यं लघीयसार्घेण लभ्यामिति ममैकान्तेऽमन्त्रयेताम् । गृहपतिश्च ममान्तरङ्गभूतो जनपदमहत्तरः शतहलिरलीकवादशीलमवलेपवन्तं दुष्टग्रामण्यमनन्तसीरं जनपदकोपेन घातयेयामिति दण्डधरानुद्धारकर्मणि मत्प्रयोगान्नियोक्तुम-

---

संपाद्यमानेन । अभिरमयिष्यसि संतोषयिष्यसि । ततस्तर्हीत्यर्थः । संक्रामयेयं संलग्नं करिष्यामि । स विकटवर्मा । तदैव मद्वचनानन्तरमेव । देव्येव मदीयाग्रमहिष्येव । नोपधिर्नात्र कश्चन कपटोऽस्ति । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । स्फुटं व्यक्तमुपजातसंप्रत्ययः समुत्पन्नविश्वासः । प्रावर्तत शपथाय शपथान्कर्तुमुद्युक्तो जातः । स्मित्वा किंचिद्विहस्य । मानुषी मनुष्याङ्गना । परिभविष्यत्यवमानयिष्यति । अप्सरोभिः सुराङ्गनाभिरुर्वशीप्रमुखाभिः। संगच्छसे संगतो भवसि। 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदम्। कामं स्वेच्छया। रहसि भवानि रहस्यानि गुप्तकार्याणि । तत्कथनान्ते रहस्याभिधानावसाने । तव स्वरूपस्य विकृताकारस्य भ्रंशः परिवृत्तिः । स विकटवर्मा । अस्ति बद्धः पादौ निगडय्य कारागृहे निक्षिप्तो वर्तते । मत्पितुः संहारवर्मणः कनीयान्भ्राता कनिष्ठसहोदरः । विषान्नेन विषमिश्रितभोज्येन । व्यापाद्य मारयित्वा । अजीर्णदोषं ख्यापयेयम् 'अजीर्णज्वरेण मृतो मम पितृव्यः प्रहारवर्मा' इति लोके प्रसिद्धिं कुर्याम् । मन्त्रिभिः सहामात्यैः सार्धमध्यवसितं निश्चयः कृतो मया । दण्डचक्रं सैन्यजातम् । 'दण्डो यमे मानभेदे लगुडे दमसैन्ययोः' इति विश्वः । पुंड्रदेशस्य तन्नामकस्य राष्ट्रस्य अभिक्रमणाय बलादाक्रमणं कर्तुम् । दित्सितं दातुं निश्चितम् । पाञ्चालिकस्तदाख्यः कश्चन पौरमुख्यः । परित्रातः कस्माच्चित्संकटान्मया परिरक्षितः । सार्थवाहः एतदाख्यः कश्चन व्यापारी । यवनात्तुरुष्कात् । वज्रं हीरकरत्नम् । वसुन्धरा भूमिरेव मूल्यं प्रतिदानं यस्य भुवः संपूर्णायाः प्रतिदानेऽप्यलभ्यम् । लघीयसाऽर्घेण स्वल्पेन मूल्येन । अमन्त्रयेतां गुप्तमुक्तवन्तौ । 'मन्त्रि गुप्तपरिभाषणे' गृहपतिर्ग्रामाधिकारी । 'ग्रामाध्यक्षो गृहपतिः' इति विश्वः । अन्तरंगभूतः प्रियतमः । जनपदमहत्तरो देशमुख्यः । शतहलिरेतन्नामकः । अलीकवादशीलमसत्यभाषिणमवलेपवन्तं गर्विष्ठम् । दुष्टं दुष्टत्वेन ममाभिमतं ग्रामण्यं ग्रामाध्यक्षम् । अनन्तसीरमेतन्नामधेयकम् । जनपदकोपेन नगरवासिनां कोपं तस्मिन्नुत्पाद्येत्यर्थः । घातयेयं विनाशयिष्यामि । दण्डधरांश्चमूनायकान् । उद्धारकर्माणि तस्यानन्तसीरस्य राज्यान्नि-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

भ्युपागमत्। इत्थमिदमाचिरप्रस्तुतं रहस्यम्।' इत्याकर्ण्य–तम् 'इयत्तवायुः। उपपद्यस्व स्वकर्मोचितां गतिम्' इति च्छुरिकया द्विधाकृत्य कृत्तमात्रं तस्मिन्नेव प्रवृत्तस्फीतसर्पिषि हिरण्यरेतस्यजूहवम्। अभूच्चासौ भस्मसात्। अथ स्त्रीस्वभावादीषद्विह्वलां हृदयवल्लभां समाश्वास्य हस्तकिसलयेऽवलम्ब्य गत्वा तद्गृहमनुज्ञयास्याः सर्वाण्यन्तःपुराण्याहूय सद्य एव सेवां दत्तवान्। साविस्मितविलासिनीसार्थमध्ये कंचिद्विहृत्य कालं विसृष्टावरोधमण्डलस्तामेव संहतोरूमूरूपपीडं भुजोपपीडं चोपगुह्य तल्पेऽभिरमयन्नल्पामिव तां निशामत्यनैषम्। अलभे च तन्मुखात्तद्राजकुलस्य शीलम्। उषसि स्नात्वा कृतमङ्गलो मन्त्रिभिः सह समगच्छे। तांश्चाब्रवम्––'आर्याः, रूपेणैव सह परिवृत्तो मम स्वभावः। य एष विषान्नेन हन्तुं चिन्तितः पिता मे स मुक्त्वा स्वमेतद्राज्यं भूय एव ग्राह-

---

र्यातनकार्ये। मन्त्रियोगान्ममाज्ञया। नियोक्तुं प्रेषयितुमभ्युपागमदङ्गीचकार। इत्थं पूर्वोक्तप्रकारेण। अचिरप्रस्तुतं समीपकाले प्रकृतम्। आकर्ण्य श्रुत्वा। तं विकटवर्माणम्। तव आयुर्जीवितकाल इयदेतावत्पर्यन्तमेव नेतोऽप्यवशिष्टमस्तीति भावः। उपपद्यस्व प्राप्नुहि। स्वकर्मोचितां निजदुष्कर्मयोग्याम्। छुरिकया शस्त्रेण। द्विधाकृत्वा छित्त्वा। कृत्तमात्रं तन्मस्तकच्छेदानन्तरमेवेति भावः। प्रवृत्तं हुतं स्फीतं बहुलं सर्पिराज्यं यस्मिन्नेतादृशे हिरण्यरेतसि वह्नौ। 'हिरण्यरेता हुतभुग्दहनो हव्यवाहनः' इत्यमरः। अजूहवं प्रक्षिप्तवानित्यर्थः। असौ विकटवर्मा भस्मसाद्भस्मप्रायो जातः। स्त्रीस्वभावादबलास्वभावतः। ईषद्विह्वलां किंचिद्भयाक्रान्ताम्। हृदयवल्लभां मन्मनःप्रियां कल्पसुन्दरीं समाश्वास्य सान्त्वयित्वा। हस्तकिसलये पल्लवसदृशे तस्याः करे अवलम्ब्य गृहीत्वा। सेवां दत्तवान् 'सर्वा अपि यूयमस्याः कल्पसुन्दर्याः परिचर्यामद्यारभ्य कुरुत' इत्याज्ञापितवान्। साविस्मितानामाश्चर्ययुक्तानां विलासिनीनां कामिनीनां सार्थः संघस्तस्य मध्ये। विहृत्य क्रीडां कृत्वा। विसृष्टं परित्यक्तमवरोधमण्डलमितरान्तःपुरवासिकामिनीचक्रं येन तादृशः सन्। तामेव कल्पसुन्दरीमेकां केवलम्। संहतौ परस्परं श्लिष्टौ ऊरू यस्यास्तादृशीम्। 'संहतशफलक्षणवामादेश्च' इत्यूङ् स्त्रीप्रत्ययः। ऊर्वोः उपपीड्य मर्दयित्वोरूपपीडम्। भुजाभ्यामुपपीड्य भुजोपपीडम्। 'सप्तम्यां चोपपीडरुधकर्षः' इति सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल्। उपगुह्याश्लिष्य। तल्पे मञ्चे। अभिरमयंस्तस्याः प्रीतिमुत्पादयन्। अल्पामिव नानाविधविलासैः शीघ्रमेव सा रात्रिर्व्यतीताऽभूदिति भावः। अनैषं यापितवान्। **अलभे इति**। ज्ञातवानित्यर्थः। तन्मुखात्कल्पसुन्दरीवक्त्रात्। शीलं स्वभावम्। उषसि प्रातःकाले। 'प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि' इत्यमरः। कृतमङ्गलोऽनुष्ठितनित्यकर्मा। समगच्छे संमिलितोऽभूवम्। आर्या हे श्रेष्ठाः। रूपेणैव सह ममरूपं यथा परिवृत्तं जातं तद्वदिति यावत्। परिवृत्तो विनिमितः। मम क्रूरस्वभावो गत इदानीं सौम्यस्वभावश्चागतो ममेति भावः। पिता मे मम पितृतुल्यः पितृव्य इत्यर्थः। मुक्त्वा

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

यितव्यः। पितृवदमुष्मिन्वयं शुश्रूषयैव वर्तामहे। न ह्यस्ति पितृवधात्परं पातकम्' इति। भ्रातरं च विशालवर्माणमाहूयोक्तवान्—'वत्स, न सुभिक्षाः सांप्रतं पुण्ड्राः। ते दुःखमोहोपहतास्त्यक्तात्मानो राष्ट्रं नो न समृद्धमभिद्रवेयुः। अतो मुष्टिवधः सस्यवधो वा यदोत्पद्यते तदाभियास्यसि, नाद्य यात्रा युक्ता' इति। नगरवृद्धावप्यलापिषम्—'अल्पीयसा मूल्येन महार्हं वस्तु मास्तु मे लभ्यं धर्मरक्षायै, तदनुगुणेनैव मूल्येनादः क्रीयताम्' इति। शतहलिं च राष्ट्रमुख्यमाहूयाख्यातवान्—'योऽसावनन्तसीरः प्रहारवर्मणः पक्ष इति निनाशयिषितः, सोऽपि पितरि मे प्रकृतिस्थे किमिति नाश्येत, तत्त्वयापि तस्मिन्संरम्भो न कार्यः' इति। त इमे सर्वमाभिज्ञानिकमुपलभ्य 'स एवायम्' इति निश्चिन्वाना विस्मयमानाश्च मां महादेवीं च प्रशंसन्तो मन्त्रबलानि चोद्घोषयन्तो बन्धनात्पितरौ निष्क्रामय्य स्वं राज्यं प्रत्यपादयन्। अहं च तया मे धात्र्या सर्वमिदं ममाचेष्टितं रहसि पित्रोरवगमय्य प्रहर्षकाष्ठाधिरूढयोस्तयोः

---

बन्धनान्मोचयित्वा। ग्राहयितव्यः ग्राहयितुमुचितः। पितृवज्जनके इव। 'तत्र तस्येव' इति वतिप्रत्ययः। शुश्रूषयैव परिचारकवृत्त्यैव। वर्तामहे तिष्ठामः। परं पातकमुत्कटं पापम्। सुभिक्षाः सुभिक्षयुक्ताः। सांप्रतमिदानीम्। दुःखमोहाभ्यामुपहताः पीडिताः। त्यक्तात्मानः दौर्भिक्ष्येणात्मधारणेऽप्यशक्ताः। नोऽस्माकम्। अभिद्रवेयुः पीडयेयुः। अतोऽस्मात्कारणात्। मुष्टिवधः यस्मिन्काले सस्यबीजानि मुष्टिनोत्क्षिप्य वपन्ति कृषकाः स कालः। सस्यवधः पक्वसस्यच्छेदकालः। शत्रून्प्रति अभियानकालश्च याज्ञवल्क्येनाभिहितः। 'यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत्' इति। अभियास्यसि युद्धाय गमिष्यसि। यात्रा युद्धाय प्रयाणम्। **नगरवृद्धाविति**। पाञ्चालिकसार्थवाहाख्यौ नागरिकमुख्यौ। अलापिषमुक्तवान्। अल्पीयसा स्वल्पतरेण मूल्येन निष्क्रयेण, महानर्हो मूल्यद्रव्यं यस्यैतादृक्। धर्मरक्षायै धर्मपालनाय। तदनुगुणेन तद्योग्येन। अदो वज्राख्यं रत्नम्। क्रीयतां स्वीक्रियताम्। पक्ष इति पक्षपातीति मत्वा। 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती। निनाशयिषितं नाशयितुं निर्धारितः। प्रकृतिस्थे पूर्वप्रकृतिं गते राजनि सतीत्यर्थः। किमिति नाश्येत किमर्थं नाशनीय इत्यर्थः। तस्मिन् शतहलौ। संरम्भोऽमर्षो न कार्यः कर्तव्यः। **त इम इति**। मन्त्रिणः विकटवर्मणः। आभिज्ञानिकं 'विकटवर्मैवायं रूपान्तरं प्राप्तः' इति विश्वासजनकं वाक्यम्। स्वार्थे ठक्। उपलभ्याकर्ण्य। स एवायं विकटवर्मैवायम्। निश्चिन्वानाः निश्चयं कुर्वन्तः। विस्मयमानाः। कथमेतादृशं सुन्दरं रूपमापन्नो विकटवर्मा इति आश्चर्यं प्राप्ताः सन्तः। प्रशंसन्तः स्तुवन्तः। मन्त्रबलानि मन्त्रप्रभावानुद्घोषयन्तः प्रकाशयन्तः। पितरौ मम जनकौ प्रियंवदाप्रहारवर्माणौ। निष्क्रामय्य मोचयित्वा। प्रत्यपादयन्प्रत्यर्पयामासुः। 'इदमाचेष्टितं न विकटवर्माऽहं किन्तु भवतोः पुत्रः उपहारवर्मा, मया चोपायेन स विकटवर्मा मारितो, लब्धं राज्यमपि' इत्येतच्चरितम्। अवगमय्य बोधयित्वा। प्रहर्षस्यानन्दस्य काष्ठां परां सीमामाधिरूढयोः प्राप्तयोः।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पादमूलमभजे । अभज्ये च यौवराज्यलक्ष्म्या तदनुज्ञातया । प्रसाधितात्मा देवपादविरहदुःखदुर्भगान्भोगान्निर्विशन्भूयोऽस्य पितृसखस्य सिंहवर्मणो लेख्याच्चण्डवर्मणश्चम्पाभियोगमवगम्य 'शत्रुवधो मित्ररक्षा चोभयमपि करणीयमेव' इत्यलघुना लघुसमुत्थानेन सैन्यचक्रेणाभ्यसरम् । अभवं च भूमिस्त्वत्पादलक्ष्मीसाक्षात्क्रियामहोत्सवानन्दराशेः' इति ।

श्रुत्वैतद्देवो राजवाहनः सस्मितमवादीत्—'पश्यत पारतल्पिकमुपधियुक्तमपि गुरुजनबन्धव्यसनमुक्तिहेतुतया दुष्टामित्रप्रमापणाभ्युपायतया राज्योपलब्धिमूलतया च पुष्कलावर्थधर्मावप्यरीरधत् । किं हि बुद्धिमत्प्रयुक्तं नाभ्युपैति शोभाम्' इति। अर्थपालमुखे निधाय स्निग्धदीर्घां दृष्टिम् 'आचष्टां भवानात्मीयचरितम्' इत्यादिदेश । सोऽपि बद्धाञ्जलिरभिदधे ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उपहारवर्मचरितं नाम तृतीय उच्छ्वासः ॥ ३ ॥

---

पादमूलमभजे पितृचरणसेवया कालं नीतवान् । तदनुज्ञातया पितृसंमतया । प्रसाधितः कार्येण सफलीकृतः आत्मा बुद्धिः यस्य तथाविधः । 'आत्मा यत्नो धृतिर्बुद्धिः' इत्यमरः । देवस्य राज्ञो राजवाहनस्य तव पादयोर्विरहदुःखेन वियोगखेदेन दुर्भगान्निरर्थकतया मम भासमानान् ॥ निर्विशन्ननुभवन् । 'निर्वेशो भृतिभोगयोः' इत्यमरः । पितृसखस्य पितुर्मित्रस्य । 'राजाहःसखिभ्यष्टच्' इति टच् । लेख्यात्पत्रिकायाः । चण्डवर्मणस्तत्कर्तृकं चम्पाभियोगं चम्पाराजधानीनिरोधम् । अवगम्य ज्ञात्वा । करणीयं कर्तुमुचितमेव । अलघुना बहुलेन । लघु शीघ्रमेव समुत्थानं शत्रून्प्रति गमनं यस्यैतादृशेन । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । अभ्यसरम् सिंहवर्मणः साहाय्यदानार्थमाभिमुख्येनागतवान् । भूमिः स्थानम् । तव राजवाहनस्य पादलक्ष्म्याः साक्षात्क्रिया प्रत्यक्षदर्शनमेव महोत्सवस्तस्मादुत्पन्नो य आनन्दराशिः सन्तोषसंदोहस्तस्य ।

श्रुत्वेति । एतत्संपूर्णमुपहारवर्मणश्चरितम् । सस्मितं किंचिद्धासयुक्तं यथा तथा । इदं वक्ष्यमाणम् । पश्यत विलोकयत । हे सुहृदः । इति शेषः । पारतल्पिकं परस्त्रीगमनं कर्तृ । उपाधियुक्तं कपटाचारसहितम् । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । गुरुजनस्य मातापित्रोः बन्धव्यसनात्कारागृहनिवाससंकटान्मुक्तेरुद्धारस्य हेतुतयोपायत्वेन । दुष्टस्यामित्रस्य शत्रोः प्रमापणे मारणेऽभ्युपायतया हेतुत्वेन । 'द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रवः' 'प्रमापणं विशसनं मारणं प्रतिघातनम्' इत्यमरः । राज्यस्योपलब्धेः पुनः प्राप्तेमूलतया मूलकारणत्वेन च । पुष्कला समग्रौ । अरीरधत्साधयामास । 'राध साध संसिद्धौ' । हि यस्मात्कारणाद्बुद्धिमता प्रयुक्तं कृतं किंवा शोभां नाभ्युपैति प्राप्नोति बुद्धिमत्कृतं सर्वमपि शोभत एवेत्यर्थः । निधाय निक्षिप्य । आदिदेशाज्ञापितवान् । सोऽप्यर्थपालश्च । अभिदधे कथितवान् ॥

इति श्रीदशकुमारचरितव्याख्यायां मनोरमाख्यायामुत्तरपीठिकायां तृतीय उच्छ्वासः ॥३॥

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

# चतुर्थोच्छ्वासः ॥ ४ ॥

देव, सोऽहमप्योभिरेव सुहृद्भिरेककर्मोर्मिमालिनेमिभूमिवलयं परिभ्रमन्नुपासरं कदाचित्काशीपुरीं वाराणसीम् । उपस्पृश्य मणिभङ्गनिर्मलाम्भसि मणिकर्णिकायामविमुक्तेश्वरं भगवन्तमन्धकमथनमभिप्रणम्य प्रदक्षिणं परिभ्रमन्पुरुषमेकमायामवन्तमायसपरिघपीवराभ्यां भुजाभ्यामाबध्यमानपरिकरमविरतरुदितोच्छूनताम्रदृष्टिमद्राक्षम् । अतर्कयं च–'कर्कशोऽयं पुरुषः, कार्पण्यमिव वर्षति क्षीणतारं चक्षुः, आरम्भश्च साहसानुवादी, नूनमसौ प्राणनिःस्पृहः किमपि कृच्छ्रं प्रियजनव्यसनमूलं प्रतिपत्स्यते । तत्पृच्छेयमेनम् । अस्ति चेन्ममापि कोऽपि साहाय्यदानावकाशस्तमेनमभ्युपेत्येत्यपृच्छम्–'भद्र, संनाहोऽयं साहसमवगमयति ।

---

## अथ चतुर्थ उच्छ्वासः ॥ ४ ॥

अधुनाऽऽज्ञप्तो राजवाहनेन स्वकथामभिधातुमुपक्रान्तवानर्थपालः–**देव, सोऽहमपीति** । सुहृद्भिरेककर्मा सुहृदो यथा भवन्तमन्वेषितवन्तस्तद्वदहमपि भवन्तमन्विष्यन्नित्यर्थः । ऊर्मिमाली समुद्रो नेमिरवधिर्यस्याः समुद्रपर्यन्ताया इत्यर्थः । तादृश्या भूमेर्वलयं मण्डलम् । 'नेमिस्तु चक्रधारायां सीमधर्मव्यवस्थयोः' इत्यजयः । परिभ्रमन्नटन् । उपासरं प्राप्तवान् । वाराणसीम् वरणाऽसीति प्रसिद्धयोर्द्वयोर्नद्योरदूरभवं कंचन पुण्यस्थलविशेषम् । 'अदूरभवश्च' इत्यण् । पृषोदरादित्वात्साधुता । 'वरणाऽसीति नद्यौ द्वे पुण्ये पापहरे उभे । तयोरन्तर्गता भूमिर्बुधैर्वाराणसी स्मृता ॥' इति पुराणेषु स्पष्टम् । उपस्पृश्याचमनं कृत्वा । मणिभङ्गवद्रत्नशकलवन्निर्मलं स्वच्छमम्भो जलं यत्र तादृश्यां मणिकर्णिकायां तदाख्यया प्रसिद्धे नद्यवतरणमार्गविशेषे । अविमुक्तेश्वरमेतन्नाम्ना विख्यातम् । अन्धकमथनमन्धकासुरसंहारकं महादेवमित्यर्थः । अभिप्रणम्य नमस्कृत्य । आयामवन्तमतिदीर्घकायम् । आयसपरिघवल्लोहार्गलवत्पीवरौ पुष्टौ ताभ्याम् । 'अर्गलः स्यात्तु परिघः' इति वैजयन्ती । आबध्यमानः सज्जीक्रियमाणः परिकरः मरणार्थं कक्षाबन्धो येन तथाविधम् । 'कक्षाबन्धः परिकरः' इति वैजयन्ती । अविरतमनिशं रुदितेन रोदनेनोच्छूने वृद्धिंगते ताम्रे रक्तवर्णे च दृष्टी लोचने यस्य तथाविधम् अद्राक्षमालोकितवानहम् । 'सततानारताश्रान्तसन्तताविरतानिशम्' इत्यमरः । **अतर्कयमिति** । वक्ष्यमाणप्रकारेण विचारं च कृतवान् । कर्कशः क्रूरस्वभावः । 'कर्कशं कठिनं क्रूरम्' इत्यमरः । कार्पण्यं दीनस्वभावं वर्षतीव प्रकटयतीवेत्यर्थः । क्षीणा ग्लानिं गता तारा कनीनिका यस्यैतादृशं चक्षुर्लोचनम् । 'तारकाऽक्ष्णः कनीनिका' इत्यमरः । आरम्भः प्रयत्नः । साहसानुवादी साहसस्य तुल्यः । 'सदृक्सदृशसंवादिसजातीयानुवादिनः' इति दण्डी । नूनं निश्चयेन । प्राणनिःस्पृहः जीवितेच्छाशून्यः । किमपि निर्वक्तुमशक्यं मरणरूपमित्यर्थः । कृच्छ्रं कष्टम् । 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः । प्रियजनानामाप्तलोकानां यद् व्यसनं दुःखं तदेव मूलं निदानकारणं यस्य तथाविधम् । प्रतिपत्स्यते लप्स्यते । पृच्छेयं प्रश्नं करोमीत्यर्थः । साहाय्यदानाय सहायतां दातुमवकाशः समयः । एनमभ्युपेत्यास्य समीपं गत्वा । सन्नाहोऽयं कक्षाबन्धनोद्योगः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

न चेद्रोप्यमिच्छामि श्रोतुं शोकहेतुम् ' इति । स मां सबहुमानं निर्वर्ण्य ' को दोषः, श्रूयताम् ' इति । कचित्करवीरतले मया सह निषण्णः कथामकार्षीत्— ' महाभाग, सोऽहमस्मि पूर्वेषु कामचरः पूर्णभद्रो नाम गृहपतिपुत्रः । प्रयत्न-संवर्धितोऽपि पित्रा दैवच्छन्दानुवर्ती चौर्यवृत्तिरासम् । अथास्यां काशीपुर्यामर्यवर्यस्य कस्यचिद्गृहे चोरयित्वा रूपाभिग्राहितो बद्धः । वध्ये च मयि मत्तहस्ती मृत्युविजयो नाम हिंसाविहारी राजगोपुरोपरितलाधिरूढस्य पश्यतः कामपाल-नाम्न उत्तमामात्यस्य शासनाज्जनकण्ठरवद्विगुणितघण्टारवो मण्डलितहस्तकाण्डं समभ्यधावत् । अभिपत्य च मया निर्भयन निर्भर्त्सितः परिणमन्दारुखण्डसुषि-रानुप्रविष्टोभयभुजदण्डघटितप्रतिमानो भीतवन्न्यवर्तिष्ट । भूयश्च नेत्रा जातसं-रम्भेण निकामदारुणैर्वागंकुशपादपातैरभिमुखीकृतः । मयापि द्विगुणाबद्धमन्युना

---

साहसं जीवनेऽनासक्त्या क्रियमाणं कर्म । अवगमयति प्रकटयति । शोकहेतुं मन्युकारणम् । सबहुमानमादरेण सह । निर्वर्ण्य वीक्ष्य । करवीरतले वृक्षविशेषाधोभागे ' प्रतिहासशतप्रासचण्डातहयमारकाः । करवीरे ' इत्यमरः । निषण्ण उपविष्टः सन् । कथामकार्षीदात्मनः शोककारणीभूतं चरितमुक्तवान् । पूर्वेषु पूर्वदिग्वर्तिदेशेषु कामचरो यथेच्छं गमनशीलः । अथवा ' पूर्वेषु काम ' इति प्रसिद्धे देशविशेषे चरतीति तादृशः । गृहपतेर्ग्रामाध्यक्षस्य पुत्रः । प्रयत्नेन महताऽऽयासेन संवर्धितः पोषितः । दैवच्छन्दं भाग्यवशमनुवर्ततेऽनुसृत्य करोतीति तादृशः । भाग्यवशादित्यर्थः । ' अभिप्रायवशौ छन्दौ ' इत्यमरः । चौर्यवृत्तिः स्तेयकारीत्यर्थः । अर्यवर्यस्य वैश्यवरस्य । ' अर्यः स्वामिवैश्ययोः ' इति निपातः । रूपेण मुषितेन नाणकेन सह अभिग्राहितः गृहीतो नागरिकैरिति शेषः । ' रूपमाकारसौन्दर्ये नाणकश्लोकयोरपि ' इति शाश्वतः । वध्ये वधोचिते । मत्तहस्ती मत्तो गजः । हिंसाविहारी जनहिंसैव विहारो यस्यैवंभूतः । राजगोपुरस्य राजगृहद्वारस्योपरितलमुपरितनीं भूमिमाधिरूढस्य प्राप्तस्य । ' पुरद्वारं तु गोपुरम् ' इत्यमरः । उत्तमामात्यस्य प्रधानमन्त्रिणः । ' मन्त्री धीसचिवोऽमात्यः ' इत्यमरः । शासनादाज्ञया । जनानां प्रेक्षकलोकानां कण्ठरवेण कण्ठनादेन द्विगुणितः द्विरावृत्तो बृंहित इत्यर्थः । तादृशः घण्टायाः रवः यस्यैवंभूतः सन् । मण्डलितः वक्रीकृतः हस्तकाण्डः शुण्डादण्डो यस्मिन् कर्मणि तद्यथा तथा । समभ्यधान्मां प्रति शीघ्रं धावति स्म । अभिपत्याभिमुख्येन धावित्वा । निर्भर्त्सितस्तर्जितः परिणमन् तिर्यग्दन्तप्रहारं कुर्वन् । ' तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः ' इति वैजयन्ती । दारुखण्डस्य वृक्षखण्डस्य सुषिरे रंध्रे अनुप्रविष्टौ संलग्नौ उभौ भुजदण्डौ यस्य तादृशः । घटितं संघृष्टं दारुखण्डेनेत्यर्थात् प्रतिमानं दन्तद्वयमध्यं यस्यैतादृशश्च सन् । ' दन्तयोरुभयोर्मध्यं प्रतिमानं प्रचक्षते ' इति वैजयन्ती । भीतवदुद्विग्न इव । न्यवर्तिष्ट पराऋत्य गतः । नेत्रा हस्तिपालेन । जातसंरम्भेण स्वाज्ञालंघनात् जातकोपेन । निकामदारुणैरतिकठोरैः । वाक् तर्जनरूपा वाणी । अंकुशः हस्तिशासनदण्डविशेषः ' अंकुशोऽस्त्री सृणिः स्त्रियाम् ' इत्यमरः । पादपातः कर्णमूले पादाभ्यां घट्टनम् । अभिमुखीकृतः मम सम्मुखतयाऽऽनीतः । **मयाऽपीति** । द्विगुणं यथा तथाऽऽबद्धः मन्युः कोपो येन तादृशेन । 'मन्यु-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

निर्भर्त्स्याभिहतो निवृत्यापाद्रवत् । अथ मयोपेत्य सरभसमाकृष्टो रुष्टश्च यन्ता 'हन्त, मृतोऽसि कुञ्जरापसद' इति निशितेन वारणेन वारणं मुहुर्मुहुरभिघ्नन्निर्याणभागे कथमपि मदभिमुखमकरोत् । अथावोचम्–'अपसरतु द्विपकीट एषः । अन्यः कश्चिन्मातङ्गपतिरानीयताम् । येनाहं मुहूर्तं विहृत्य गच्छामि गन्तव्यां गतिम्' इति । दृष्ट्वैव स मां रुष्टमुद्गर्जन्तमुत्क्रान्तयन्तृनिष्ठुराज्ञः पलायिष्ट । मन्त्रिणा पुनरहमाहूयाभ्यधायिषि–'भद्र, मृत्युरेवैष मृत्युविजयो नाम हिंसाविहारी । सोऽयमपि तावत्त्वयैवंभूतः कृतः । तद्विरम्य कर्मणोऽस्मान्मलीमसात्किमलमासि प्रतिपद्यास्मानार्यवृत्त्या वर्तितुम्' इति । 'यथाज्ञापितोऽस्मि' इति विज्ञापितोऽयं मया मित्रवन्मय्यवर्तिष्ट । पृष्टश्च मयैकदा रहसि जातविश्रम्भेणाभाषत स्वचरितम्—'आसीत्कुसुमपुरे राज्ञो रिपुंजयस्य मन्त्री धर्मपालो नाम विश्रुतधीः श्रुतऋषिः । अमुष्य पुत्रः सुमित्रो नाम पित्रैव समः प्रज्ञागुणेषु । तस्यास्मि द्वैमातुरः कनीयान्भ्राताहम् । वेशेषु विलसन्तं मामसौ विनयरुचि-

---

दैन्ये क्रतौ क्रुधि' इत्यमरः । अभिहतस्ताडितः । निवृत्त्य पराङ्मुखो भूत्वा । अपाद्रवत्पलायितवान् । सरभसं सकोपम् । आकृष्टो निन्दितः रुष्टः क्रुद्धः । यन्ता हस्तिपालः । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः । हन्तेति खेदे । कुञ्जरापसद गजाधम । 'निहीनोऽपसदो जाल्मः' 'कुञ्जरो वारणः करी' इत्यमरः । निशितेन तीक्ष्णेन वारणेनांकुशेन वारणं गजम् । 'वारणस्तु गजे प्रोक्तो वारणं तन्निवारणे' इत्यजयः । मुहुर्मुहुः पुनः पुनः । अभिघ्नंस्ताडयन् । निर्याणभागेऽपाङ्गभागे । 'अपाङ्गदेशो निर्याणम्' इत्यमरः । कथमपि महता परिश्रमेण । **अपसरत्विति** । दूरं नीतो भवतु । द्विपकीटः क्रिमितुल्यो गजः । मातङ्गपतिरुत्तमो हस्ती । आनीयतां मद्वधायोपस्थाप्यतां नास्य मद्वधे शक्तिरस्तीति यावत् । विहृत्य क्रीडां कृत्वा । गन्तव्यां गतिं मरणमित्यर्थः । स गजः । उद्गर्जन्तमाक्रोशं कुर्वन्तम् । उत्क्रान्तोल्लंघिता यन्तुराधोरणस्य निष्ठुरा क्रूराऽऽज्ञा येनैवंभूतः सन् पलायिष्ट पलायितवान् । मन्त्रिणा कामपालाख्येन सचिवेन । अभ्यधायिष्युक्तः । भद्रे हे सौम्य । मृत्यरेव यमतुल्य इति यावत् । एवंभूतः कृतः पराजित इत्यर्थः । तत् तस्मात्कारणात्तव शौर्ययुक्तत्वादिति भावः । विरम्योपरतो भूत्वा । मलीमसान्मालिनादस्मात्कर्मणश्चौर्यरूपादित्यर्थः । अस्मान्प्रतिपद्याश्रित्य । आर्यवृत्त्या सभ्यवृत्त्या । वर्तितुं स्थातुं किमलमासि शक्तो भवासि । यथाऽऽज्ञापितोऽस्मि भवता यथाऽहमाज्ञापितस्तथैव वर्तिष्यामि इति मित्रवदाप्ततुल्यतया । अवर्तिष्ट स्थितः । **पृष्ट इति** । स्वचरितवर्णनाय मया प्रेरितः । रहस्येकान्ते । जातेनोत्पन्नेन विस्रम्भेण विश्वासेन । कुसुमपुरे पुष्पपुरीति नाम्नाऽधुना प्रसिद्धे । रिपुञ्जयस्य राजहंसपितुर्नामेदम् । विश्रुतधीः प्रख्यातबुद्धिः । श्रुतोऽधीतः ऋषिर्वेदो येन तादृशः । 'ऋषिस्तु वेदे भृग्वादौ ज्ञानवृद्धे दिगम्बरे' इति वैजयन्ती । अमुष्य धर्मपालस्य । पित्रैव समः पितृसदृशः । प्रज्ञागुणेषु 'शुश्रूषा ग्रहणं चैव श्रवणं चावधारणम् । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः' इति कामन्दकीयोक्तबुद्धिगुणेषु । द्वयोर्मात्रोरपत्यं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

रवारयत् । अवार्यदुर्नयश्चाहमपसृत्य दिङ्मुखेषु भ्रमन्यदृच्छयास्यां वाराणस्यां प्रमदवने मदनदमनाराधनाय निर्गत्य सहसखीभिः कन्दुकेनानुक्रीडमानां काशीभर्तुश्चण्डसिंहस्य कन्यां कान्तिमतीं नाम चकमे । कथमपि समगच्छे च । अथ छन्नं च विहरता कुमारीपुरे सा मयासीदापन्नसत्त्वा । कंचित्सुतं च प्रसूतवती । मृतजात इति सोऽपविद्धो रहस्यनिर्भेदभयात्परिजनेन क्रीडाशैले । शबर्या च श्मशानाभ्याशं नीतः । तयैव निवर्तमानया निशीथे राजवीथ्यामारक्षिकपुरुषैरभिगृह्य तर्जितया दण्डपारुष्यभीतया निर्भिन्नप्रायं रहस्यम् । राजाज्ञया निशीथेऽहमाक्रीडनगिरिदरीगृहे विश्रब्धप्रसुप्तस्तयोपदर्शितो यथोपपन्नरज्जुबद्धः श्मशानमुपनीय मातङ्गोद्यतेन कृपाणेन प्राजिहीर्ष्ये । नियतिबलाल्लूनबन्धस्तमसिमा-

---

द्वैमातुरः । 'तस्यापत्यम्' इत्यधिकारे 'मातुरुत्संख्यासंभद्रपूर्वायाः' इत्युदादेशोऽण्प्रत्ययश्च । सुमित्रस्य यः पिता धर्मपालस्तस्मात्पत्न्यन्तरे जात इत्यर्थः । वेशेषु गणिकागृहेषु । विलसन्तं विलासशीलम् । असौ सुमित्रः । विनयरुचिर्विनयोत्सुकस्तद्युक्त इति यावत् । अवारयत्प्रतिरुणद्धि स्म । अवार्यो निरोद्धुमशक्यो दुर्नयो दुर्व्यवहारो यस्यैतादृशोऽहम् । अपसृत्य गृहाद्बहिरागत्य । यदृच्छया दैववशात् । वाराणस्यां काशीपुर्याम् । प्रमदवने विहारोद्याने । 'स्यादेतदेव प्रमदवनमन्तःपुरोचितम्' इत्यमरः । मदनदमनस्य मन्मथशत्रोः शिवस्याराधनायोपासनार्थम् । कन्दुकेन केल्युपकरणविशेषेण । 'गेन्दुकः कन्दुकः' इत्यमरः । अनुक्रीडमानां विहरन्तीम् । 'क्रीडोऽनुसंपरिभ्यश्च' इत्यात्मनेपदस्य विहितत्वादत्र शानच् । काशीभर्तुः काशीराजस्य । चकमे प्राप्तुमिच्छामकरवम् । 'कमु कान्तौ' इत्यस्माणिङभावपक्षे रूपम् । कथमपि केनाप्युपायेन । समगच्छे संगतोऽभुवम् । 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदम् । छन्नं गुप्तं यथा तथा । विहरता कान्तिमत्या सह नानाविधाः क्रीडाः कुर्वता । सा कान्तिमती । आपन्नसत्त्वा गर्भवती । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । सुतं बालकम् । सुतवती सुषुवे । मृतजातः पूर्वमुदर एव मृतः ततोऽन्तरं जातः इति भ्रमात् । अपविद्धः । कुत्राचित्त्यक्तः । रहस्यस्य गोप्यस्य निर्भेदात्प्रकटीभावाद्यद्भयं तस्मात् । क्रीडाशैले केलिपर्वते । शबर्या कयाचित्पुलिन्दस्त्रिया । श्मशानस्य शवदाहस्थलस्य अभ्याशं समीपं नीतः प्रापितः । 'श्मशानं स्यात्पितृवनम्' इत्यमरः । निवर्तमानया प्रत्यागच्छन्त्या तयैव शबराङ्गनयैव । निशीथेऽर्धरात्रे । अभिगृह्य गृहीत्वा तर्जितया भीषितया । दण्डपारुष्याच्छिक्षाक्रौर्याद्भीतया भयमापन्नया । रहस्यं 'कामपालनाम्नः कस्यचित्सकाशाद्राजकन्यायां कान्तिमत्यां गूढं कश्चित्पुत्रो जातस्तमिदानीं पितृभूमिं नीत्वाऽऽगच्छामि' इत्येवंरूपं सर्वं निर्भिन्नप्रायं प्रायशः कथितमेवाभूत् । राज्ञश्चण्डसिंहस्य आज्ञया निदेशेन । आक्रीडनगिरेः क्रीडाशैलस्य दरीगृहे गृहतुल्ये कन्दरे 'दरीतु कन्दरो वा स्त्री' इत्यमरः । विस्रब्धं निःशङ्कं यथा तथा प्रसुप्तो निद्रितः । तया शबर्या । उपदर्शितः 'अयमेव स कामपालः' इति निर्दिष्टः । यथोपपन्नाभिर्यथासौकर्यं मिलिताभिः रज्जुभिः पाशैर्बद्धः । श्मशानं पितृवनम् । मातङ्गोद्यतेन चण्डालधृतेन । 'चण्डालप्लवमातङ्गदिवाकीर्ति-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

च्छिद्यान्त्यजं तमन्यांश्च कांश्चित्प्रहृत्यापासरम् । अशरणश्च भ्रमन्नटव्यामेकदाश्रुमुख्या कयापि दिव्याकारया सपरिचारया कन्ययोपास्थायिषि । सा मामञ्जलिकिसलयोत्तंसितेन मुखविलोलकुन्तलेन मूर्ध्ना प्रणम्य मया सह वनवटद्रुमस्य कस्यापि महतः प्रच्छायशीतले तले निषण्णा, 'कासि वासु, कुतोऽस्यागता, कस्य हेतोरस्य मे प्रसीदसि' इति साभिलाषमाभाषिता मया वाङ्मयं मधुवर्षमवर्षत्—'आर्य, नाथस्य यक्षाणां मणिभद्रस्यास्मि दुहिता तारावली नाम । साहं कदाचिदगस्त्यपत्नीं लोपामुद्रां नमस्कृत्यापावर्तमाना मलयगिरेः परेतावासे वाराणस्याः कमपि दारकं रुदन्तमद्राक्षम् । आदाय चैनं तीव्रस्नेहान्मम पित्रोः संनिधिमनैषम् । अनैषीच्च मे पिता देवस्यालकेश्वरस्यास्थानीम् । अथाहमाहूयाज्ञप्ता हरसखेन, 'बाले बालेऽस्मिन्कीदृशस्ते भावः' इति । 'औरस इवास्मिन्वत्से वत्सलता' इति मया विज्ञापितः 'सत्यमाह वराकी' इति तन्मूलामतिमहतीं कथामकरोत् । तत्रैतावन्मयावगतम् 'त्वं किल शौनकः शूद्रकः कामपालश्चाभिन्नः । बन्धुमती विनयवती कान्तिमती चाभिन्ना । वेदिमत्यार्यदासी सोमदेवी चैकैव । हंसावली शूरसेना सुलोचना चानन्या । नन्दिनी

---

जनंगमाः' इत्यमरः । कृपाणेन खड्गेन । प्राजिहीर्ष्ये प्रहर्तुं चिन्तितः । **नियतीति** । दैवप्रबलतया । लूनबन्धश्छिन्नबन्धः । असिं खड्गम् आच्छिद्य चण्डालहस्ताद्बलादाकृष्य । अन्त्यजं चण्डालम् । प्रहृत्य मारयित्वाऽपासरं पलायिषि । अशरणोऽनाथो गृहरहितो वा 'शरणं गृहरक्षित्रोः' इत्यमरः । अटव्यामरण्ये । अश्रुमुख्या रोदनाजलव्याप्ताननया । उपास्थायिषि उपस्थितः । अञ्जलिकिसलयेन पल्लववदतिमृदुना करयुगलेनोत्तंसितेन भूषितेन । मुखे विलोलाश्चञ्चलाः कुन्तलाश्चूर्णकुन्तला यस्यैतादृशेन मूर्ध्ना मस्तकेन । महतोऽतिविस्तृतस्य । प्रकृष्टा छाया यस्मिन्नेतादृशेऽत एव शीतले शिशिरिते । तलेऽधोदेशे । निषण्णोपविष्टा । वासु हे बाले । प्रसीदसि प्रसादं करोषि । साभिलाषं सस्पृहम् । आभाषिता पृष्टा । वाङ्मयं वाणीरूपम् । **आर्येति** । हे पूज्य पुरुष । यक्षाणां नाथस्य देवयोनिविशेषाधिपस्य । 'विद्याधराप्सरोयक्षरक्षोगन्धर्वकिंनराः । पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इत्यमरः । दुहिता कन्या । अपावर्तमाना प्रत्यागच्छन्ती । परेतावासे श्मशानभूमौ । दारकं कुमारम् । अद्राक्षं दृष्टवती । तीव्रस्नेहात्प्रचुरवात्सल्यात् । सन्निधिं समीपम् । अलकेश्वरस्य यक्षराजधानीपतेः कुबेरस्य । आस्थानीं सभामण्डपम् । 'कैलासः स्थानमलका पूर्विमानं तु पुष्पकम्' इत्यमरः । 'आस्थानी क्लीबमास्थानम्' । इति च । हरसखेन कुबेरेण । 'कुबेरस्त्र्यम्बकसखः' इत्यमरः । भावश्चित्तवृत्तिः । **औरस इवेति** । यथा स्वस्यैवोदराज्जाते पुत्रे मातुश्चित्तवृत्तिः स्यात्तथैव ममास्मिन्बाले इति भावः । वत्सलता स्नेहः । वराकी दयनीया । तन्मूलां पुत्रमूलाम् । एतावदियदेव । अवगतं ज्ञातम् । त्वं किलेति तारावल्याः कामपालं मां प्रत्युक्तिः । किलेति निश्चयार्थेऽव्ययम् । न भिन्नोऽभिन्नः एक एवेत्यर्थः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

रङ्गपताकेन्द्रसेना चापृथग्भूता । या किल शौनकावस्थायामग्निसाक्षिकमात्मसात्कृता गोपकन्या सैव किलार्यदासी पुनश्चाद्य तारावलीत्यभूवम् । बालश्च किल शूद्रकावस्थे त्वय्यार्यदास्यवस्थायां मय्युदभूत् । अवर्ध्यत च विनयवत्या स्नेहवासनया । स तु तस्यां कान्तिमत्यवस्थायामद्योदभूत् । एवमनेकमृत्युमुखपरिभ्रष्टं दैवान्मयोपलब्धं तमेकपिङ्गादेशाद्वने तपस्यतो राजहंसस्य देव्यै वसुमत्यै तत्सुतस्य भाविचक्रवर्तिनो राजवाहनस्य परिचर्यार्थं समर्प्य गुरुभिरभ्यनुज्ञाता कृतान्तयोगात्कृतान्तमुखभ्रष्टस्य ते पादपद्मशुश्रूषार्थमागतास्मि ' इति । श्रुत्वा तामनेकजन्मरमणीमसकृदाश्लिष्य हर्षाश्रुमुखो मुहुर्मुहुः सान्त्वयित्वा तत्प्रभाव-

---

एवमेवोत्तरत्र । अपृथग्भूतैकैव । अग्निसाक्षिकमाग्निं साक्षित्वेन स्थापयित्वाऽऽत्मसात्कृता विवाहिता । स्नेहवासनया वात्सल्यसंस्कारेण । उदभूत्समुत्पन्नः । अत्रत्यप्रकरणबोधार्थमिदं चक्रमत्रोल्लिख्यते--

| शौनकावस्थायां | शूद्रकावस्थायां | कामपालावस्थायां |
|---|---|---|
| बन्धुमती | विनयवती × | कान्तिमती * |
| वेदमती | आर्यदासी | सोमदेवी |
| हंसावली | शूरसेना | सुलोचना |
| नन्दिनी | रङ्गपताका | इन्द्रसेना |
| गोपकन्या | आर्यदासी × | तारावली * |

शूद्रकावस्थायां द्वितीयजन्मनि विनयवत्या प्रसूतः पुत्र आर्यदास्या पोषितः । तृतीयजन्मनि कामपालावस्थायां कान्तिमत्या प्रसूतः पुत्रः तारावल्या वसुमत्यै दत्तः पोषणाय ।

**एवम्** पूर्वोक्तविधया । अनेकेभ्यो नानाप्रकारेभ्यो मृत्युमुखेभ्य आपद्भ्य इति यावत्परिभ्रष्टं दैववशान्मुक्तम् । उपलब्धं प्राप्तम् । तं बालकमर्थपालनामानम् । एकपिङ्गः यक्षः ' यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः ' इत्यमरः । तस्यादेशादाज्ञया । तपस्यतस्तपस्यां कुर्वतः । 'तपसः परस्मैपदं च ' इति वार्तिकेण क्यङन्ताच्छता । देव्यै अग्रमहिष्यै । तत्सुतस्य राजहंसपुत्रस्य । भाविचक्रवर्तिनः सार्वभौमतया भविष्यतः । परिचर्यायै सेवनार्थम् । समर्प्य दत्त्वा । गुरुभिर्मातपित्रादिभिः अभ्यनुज्ञाता संमता सती । कृतान्तयोगाद्दैवयोगात्कृतान्तमुखभ्रष्टस्य यमाननात्प्रच्युतस्य । ' कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ' इत्युभयत्र विश्वः । ते कामपालं प्रत्युक्तिरियं तारावल्याः । पादपद्मयोश्चरणपङ्कजयोः शुश्रूषार्थं परिचरणमुद्दिश्य । आगताऽस्मि आयाताऽस्मि । श्रुत्वेति । अनेकेषु जन्मसु रमणीं ममैव भार्याम् । असकृत्पुनः पुनः आश्लिष्यालिङ्ग्य । हर्षाश्रु आनन्दबाष्पो मुखे यस्यैतादृशः सन् । मुहुर्मुहुरसकृत् । सान्त्वयित्वा

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

दर्शिते महति मन्दिरेऽहर्निशं भूमिदुर्लभान्भोगानन्वभूवम् । द्वित्राणि दिनान्यतिक्रम्य मत्तकाशिनीं तामवादिषम्—'प्रिये, प्रत्यपकृत्य मत्प्राणद्रोहिणश्चण्डसिंहस्य वैरनिर्यातनसुखमनुबुभूषामि ' इति । तया सस्मितमभिहितम्—'एहि कान्त, कान्तिमतीदर्शनाय नयामि त्वाम् ' इति । स्थितेऽर्धरात्रे राज्ञो वासगृहमनीये । ततस्तच्छिरोभागवर्तिनीमादायासियष्टिं प्रबोध्यैनं प्रस्फुरन्तमब्रवम्—' अहमस्मि भवज्जामाता । भवदनुमत्या विना तव कन्याभिमर्शी । तमपराधमनुवृत्त्या प्रमार्ष्टुमागतः' इति । सोऽतिभीतो मामभिप्रणम्याह—'अहमेव मूढोऽपराद्धः यस्तव दुहितृसंसर्गानुग्राहिणो ग्रहग्रस्त इवोत्क्रान्तसीमा समादिष्टवान् वधम् । तदास्तां कान्तिमती राज्यमिदं मम च जीवितमप्यद्यप्रभृति भवदधीनम्' इत्यवादीत् । अथापरेद्युः प्रकृतिमण्डलं संनिपात्य विधिवदात्मजायाः पाणिमग्राहयत् । अश्रावयच्च तनयवार्तां तारावली कान्तिमत्यै, सोमदेवीसुलोचनेन्द्रसे-

---

समाधाय । तस्या मत्प्रियायास्तारावल्याः प्रभावेण महिम्ना स्वस्य यक्षिणीत्वाद्दर्शिते मन्दिरे भवने । अहर्निशमहोरात्रम् । भूमौ मर्त्यलोके दुर्लभान्दुरासदान् । द्वे वा त्रीणि वा द्वित्राणि । 'संख्ययाऽव्ययासन्न–' इति समासे 'बहुव्रीहौ संख्येये डजबहुगणात् ' इति डच् । अतिक्रम्य यापयित्वा । मत्तकाशिनीमुत्तमाङ्गनाम् । 'वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ' इत्यमरः । अवादिषमुक्तवान् । प्रिये हे वल्लभे । प्रत्यपकृत्य प्रत्यपकारं विधाय । मम प्राणद्रोहिणः केवलं कन्यासंगमरूपेऽपराधे प्राणशिक्षां विहितवतः । चण्डसिंहस्य तदाख्यस्य काशीभर्तुः । वैरनिर्यातनेन वैरप्रतीकाराचरणेन यत्सुखं तत् । 'वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ' इत्यमरः । अनुबुभूषाम्यनुभवितुमिच्छामि । तया तारावल्या । अभिहितमुक्तम् । एहि मया सहागच्छ । अर्धरात्रे निशीथसमये । राज्ञश्चण्डसिंहस्य वासगृहं गर्भागारम् । 'गर्भागारं वासगृहम् ' इत्यमरः । अनीये नीतः । तस्य चण्डसिंहस्य शिरोभागे वर्तत एवंभूतामासियष्टिं खड्गम् । प्रबोध्योत्थाप्य । प्रस्फुरन्तं कम्पमानम् । भवतो जामाता कन्याभर्ता । 'जामाता दुहितुः पतिः ' इत्यमरः । भवतोऽनुमत्या विना संमतिमन्तरैव । 'पृथग्विनानानाभि–' इति तृतीया । कन्याभिमर्शी कन्यास्पर्शी । तमपराधं कन्यास्पर्शजन्यमपराधम् । अनुवृत्त्याऽनुचरवृत्त्या प्रमार्ष्टुं दूरीकर्तुम् । **स इति** । चण्डसिंहः । अतिभीतः नितरां त्रस्तः सन् । अभिप्रणम्य नमस्कृत्य । अपराद्धः कृतापराधः । दुहितृसंसर्गरूपेण कन्यास्वीकाररूपेण कार्येण अनुग्राहिणोऽनुग्रहं कृतवतः । अनुग्रहश्च कन्यापितुः वरान्वेषणादिक्लेशमन्तरैव योग्यवरलाभात् । ग्रहग्रस्तः पिशाचाविष्ट इव । उत्क्रान्तसीमोल्लंघितमर्यादः स्वल्पेऽपराधे प्राणदण्डविधानात् । वधं चित्रवधम् । कान्तिमती तन्नामिका मदीया कन्या । राज्यमिदं वाराणसीपुरी । भवतोऽधीनमायत्तमास्तां भवतु । 'आस उपवेशने ' । अपरेद्युः परस्मिन्नहनि । प्रकृतिमण्डलं राज्याङ्गचक्रम् । संनिपात्यैकत्रीकृत्य । विधिवद्विधानपूर्वकम् । आत्मजायाः स्वकन्यायाः कान्तिमत्याः । पाणिमग्राहयद्विवाहं कारयामास । अश्रावयच्छ्रावयामास । तनयस्य पुत्रस्यार्थपालस्य वार्तां कथाम्



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

नाभ्यश्च पूर्वजातिवृत्तान्तम् । इत्थमहं मंत्रिपदापदेशं यौवराज्यमनुभवान्विहरामि विलासिनीभिः' इति । स एवं मादृशेऽपि जन्तौ परिचर्यानुबन्धी बन्धुरेकः सर्वभूतानामलसकेन स्वर्गते श्वशुरे, ज्यायसि च श्याले चण्डघोषनाम्नि स्त्रीष्वतिप्रसङ्गात्प्रागेव क्षयक्षीणायुषि, पञ्चवर्षदेशीयं सिंहघोषनामानं कुमारमभ्यषेचयत् । अवर्धयच्च विधिनैनं स साधुः । तस्याद्य यौवनोन्मादिनः पैशुन्यवादिनो दुर्मन्त्रिणः कतिचिदासन्नन्तरङ्गभूताः । तैः किलासावित्थमग्राह्यत—'प्रसह्यैव स्वसा तवामुना भुजङ्गेन संगृहीता । पुनः प्रसुप्ते राजनि प्रहर्तुमुद्यतासिरासीत् । तेनास्मै तत्क्षणप्रबुद्धेन भीत्यानुनीय दत्ता कन्या । तं च देवज्येष्ठं चण्डघोषं विषेण हत्वा बालोऽयमसमर्थ इति त्वमद्यापि प्रकृतिविश्रम्भणायोपेक्षितः । क्षिणोति च पुरा स कृतघ्नो भवन्तम् । तमेवान्तकपुरमभिगमयितुं यतस्व' इति ।

---

' मृतजात इति अपविद्धोऽपि वस्तुतोऽमृतो मयोपलभ्य वसुमतीहस्ते गुप्तं यथा तथा रक्षणाय समर्पितोऽस्ति ' इत्येवंरूपाम् । पूर्वजातिवृत्तान्तं 'पूर्वमस्यैव कामपालस्य पत्न्यो यूयम्, अतोऽस्मिन्नपि जन्मनि तस्मिन्कामपाले भर्तृवदाचरत ' इत्येवंरूपां वार्ताम् । मन्त्रिपदापदेशममात्याधिकारव्याजेन । विलासिनीभिः कामिनीभिः पूर्वोक्ताभिः पञ्चभिः । **स इति** । कामपालः । मादृशेऽपि जन्तौ मत्सदृशेऽपि प्राणिनि । परिचर्यानुबन्धी सेवानुबन्धा । बन्धुराप्तमित्रम् । सर्वभूतानामखिलप्राणिनाम् । अलसकेन क्षयरोगेण । ' क्षयस्त्वलसको मतः ' इति वैजयन्ती । स्वर्गते । देवलोकमासादितवति मृते इत्यर्थः । श्वशुरे जायापितरि चण्डसिंहे । श्याले पत्नीभ्रातरि । 'श्यालाः स्युर्भ्रातरः पत्न्याः' इत्यमरः । अतिप्रसङ्गान्नितरां सेवनात् । प्रागेव पितृमरणात्पूर्वमेव । क्षयेण अतिप्रसक्तिजनितालसकेन क्षीणमायुर्यस्यैतादृशि । पञ्चवर्षदेशीयमीषदसमाप्तपञ्चवर्षवयस्कम् । ' ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ' इति देशीयर्प्रत्ययः । कुमारं बालकम् । अभ्यषेचयद्राजस्थानेऽभिषिच्य स्थापितवान् । अवर्धयदपोषयच्च । एनं सिंहघोषम् । स कामपालः । साधुः कपटरहितः । **तस्येति** । सिंहघोषस्य । अद्यास्मिन्काले । यौवनेन तारुण्येन उन्मादिनः उन्मत्तस्य कृतघ्नस्येति यावत् । पैशुन्यवादिनः पिशुनः खलोऽयं ते मन्त्री कामपाल इति कामपालोपरि दुष्टत्वं मिथ्यैवारोप्य कथयन्तः । ' पिशुनो दुर्जनः खलः ' इत्यमरः । दुर्मन्त्रिणो दुष्टामात्याः । अन्तरङ्गभूता अत्याप्ता इत्यर्थः । तैः दुर्मन्त्रिभिः असौ सिंहघोषः । इत्थं वक्ष्यमाणप्रकारेण अग्राह्यत बोधितोऽभूत् । प्रसह्यैव बलात्कारेणैव । स्वसा भगिनी । अमुना कामपालेन । भुजङ्गेन धूर्तेन । ' भुजङ्गो विटसर्पयोः ' इत्यमरः । संगृहीता स्वायत्तीकृता । न तु कन्यया स्वानुरागेण वृतोऽसौ, न वा राज्ञा तद्गुणादितुष्टेन कन्या दत्तेति भावः । पुनः अथ कस्मिंश्चिद्दिने । प्रहर्तुं मारयितुमुद्यतासिर्गृहीतखड्गः । तेन राज्ञा । अस्मै कामपालाय । प्रबुद्धेन जागरितेन । भीत्या मारयिष्यति मामिति साध्वसेन । अनुनीय समाधानं कृत्वा । देवस्य भवतो ज्येष्ठं ज्येष्ठभ्रातरम् । विषेण गरलेन । अयं बालः सिंहघोषः । असमर्थो न क्षमः । प्रकृतिविश्रम्भणाय प्रजाविश्वासाय । उपेक्षितः परित्यक्तोऽसि । क्षिणोति च पुरा हिंसिष्यती-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

स तथा दूषितोऽपि यक्षिणीभयान्नामुष्मिन्पापमाचरितुमशकत् । एषु किल दिवसेष्वयथापूर्वमाकृतौ कान्तिमत्याः समुपलक्ष्य राजमहिषी सुलक्षणा नाम सप्रणयमपृच्छत्–'देवि, नाहमायथातथ्येन विप्रलम्भनीया । कथय तथ्यं केनेदमयथापूर्वमाननारविन्दे तवैषु वासरेषु' इति । सा त्ववदीत्–'भद्रे, स्मरसि किमद्याप्यायथातथ्येन किंचिन्मयोक्तपूर्वम् । सखी मे तारावली सपत्नी च किमपि कलुषिताशया रहसि भर्त्रा मद्गोत्रापदिष्टा प्रणयमभ्युपेक्ष्य प्रणम्यमानाप्यस्माभिरुपोढमत्सरा प्रावसत् । अवसीदति च नः पतिः । अतो मे दौर्मनस्यम्' इति । तत्प्रायेणैकान्ते सुलक्षणया कान्ताय कथितम् । 'अथासौ निर्भयोऽद्य प्रियतमाविरहपाण्डुभिरवयवैर्धैर्यस्तम्भिताश्रुपर्याकुलेन चक्षुषोष्मश्वासशोषिताभिरिवानतिपेशलाभिर्वाग्भिर्वियोगं दर्शयन्तम्, कथमपि राजकुले कार्याणि कारयन्तम्, पूर्वसंकेतितैः पुरुषैरभिग्राह्यावन्धयत् । तस्य किल स्थाने स्थाने

---

त्यर्थः । 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् । तं कामपालमेव अन्तकपुरं यमनगरीम् । 'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः' इत्यमरः । अभिगमयितुं प्रापयितुं यतस्वोद्योगं विधेहि । **स इति** । सिंहघोषः । तथा पूर्वोक्तविधया दूषितो दुष्टतां प्रापितः । यक्षिणी यक्षकन्या तारावली तद्भयात्सा किंचिदनिष्टं करिष्यतीति भयेन । अमुष्मिन्कामपाले । पापं हिंसाकर्म । नाशकन्न शक्तो बभूव । अयथापूर्वं पूर्वस्मात्किंचिद्विपरीतम् । समुपलक्ष्य दृष्ट्वा । राजमहिषी सिंहघोषराजपत्नी । सप्रणयं सस्नेहम् । अयाथातथ्येनासत्येन । विप्रलम्भनीया वञ्चनीया । तथ्यं वास्तवम् । अयथापूर्वं पूर्वविपरीतम् । आननारविन्दं मुखपद्मम् । वासरेषु दिनेषु । सा कान्तिमती । अयाथातथ्येनासत्यतया । पूर्वमुक्तमुक्तपूर्वम् । समानः पतिर्यस्याः सा सपत्नी । 'नित्यं सपत्न्यादिषु' इति ङीप् नुक् सभावश्च निपातितः । किमपि निष्कारणम् । कलुषिताशयाऽप्रसन्नचित्ता । खण्डिता भूत्वेत्यर्थः । 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति च तल्लक्षणम् । रहस्येकान्ते । भर्त्रा पत्या कामपालेन । मम गोत्रेण नाम्नाऽपदिष्टाऽऽहूता । 'गोत्रं नाम्न्यचले कुले' इति वैजयन्ती । प्रणयं स्नेहम् । प्रणम्यमाना नमस्क्रियमाणा । उपोढमत्सरा वृद्धवैरा । प्रावसत्प्रवासं गता । अवसीदति दुःखितो भवति । नः पतिः कामपालः । दौर्मनस्यं प्रसन्नताभावः । तत् यक्षिणीप्रवसनादिकम् । कान्ताय भर्त्रे सिंहघोषाय । **अथेति** । यक्षिणीप्रवासश्रवणानन्तरमसौ सिंहघोषः । निर्भयो भयरहितः । प्रियतमायाः तारावल्याः विरहेण पाण्डुभिः श्वेतवर्णैः अवयवैरङ्गैः । धैर्येण स्तम्भितमपरित्यक्तं यदश्रु रोदनजलं तत्पर्याकुलेन तद्व्याप्तेन । ऊष्मश्वासेनोष्णनिश्वासवायुना शोषिताभिः शुष्कतां प्रापितैरिव । अनतिपेशलाभिर्नातिमनोहराभिः । वाग्भिर्वाणीभिः । वियोगं विरहं तारावल्याः । दर्शयन्तं प्रकटयन्तम् । कथमपि महताऽऽयासेन । पूर्वसंकेतितैः पूर्वोक्तैः । पुरुषैर्दुर्मन्त्रिभिः । अभिग्राह्य ग्राहयित्वा । अवन्धयद्बन्धनालये स्थापयामास । तस्य कामपालस्य । स्थानेस्थाने सर्वत्रे-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

दोषानुद्घोष्य तथोद्धरणीये चक्षुषी यथा तन्मूलमेवास्य मरणं भवेत्' इति। अतोऽत्रैकान्ते यथेष्टमश्रु मुक्त्वा तस्य साधोः पुरः प्राणान्मोक्तुकामो बध्नामि परिकरम्' इति। मयापि तत्पितृव्यसनमाकर्ण्य पर्यश्रुणा सोऽभिहितः–'सौम्य, किं तव गोपायित्वा। यस्तस्य सुतो यक्षकन्यया देवस्य राजवाहनस्य पादशुश्रूषार्थं देव्या वसुमत्या हस्तन्यासः कृतः सोऽहमस्मि। शक्ष्यामि सहस्रमपि सुभटानामुदायुधानां हत्वा पितरं मोचयितुम्। अपि तु संकुले यदि कश्चित्पातयेत्तदङ्गे शस्त्रिकां सर्व एव मे यत्नो भस्मानि हुतमिव भवेत्' इति। अनवसितवचन एव मयि महानाशीविषः प्राकाररन्ध्रेणोदैरयच्छिरः। तमहं मंत्रौषधबलेनाभिगृह्य पूर्णभद्रमत्रवम्–'भद्र, सिद्धं नः समीहितम्। अनेन तातमलक्ष्यमाणः संकुले यदृच्छया पतितेन नाम दंशयित्वा तथा विषं स्तम्भयेयं यथा मृत इत्युदास्येत। त्वया तु मुक्तसाध्वसेन माता मे बोधयितव्या–'या यक्ष्या वने देव्या वसुमत्या हस्तार्पितो युष्मत्सूनुः सोऽनुप्राप्तः पितुरवस्थां मदुपलभ्य बुद्धिबलादित्थमाचरिष्यति। त्वया तु मुक्तत्रासया राज्ञे प्रेषणीयम्–'एष खलु क्षात्रधर्मो यद्बन्धुरबन्धुर्वा दुष्टः स निरपेक्षं निग्राह्य इति। स्त्रीधर्मश्चैष यद्दुष्टस्य दुष्टस्य वा भर्तुर्गतिर्गन्तव्येति। तदहममुनैव सह चिताग्निमारोक्ष्यामि। युवति-

---

त्यर्थः। दोषानपराधान्। उद्घोष्य डिण्डिमादिवाद्येन घोषयित्वा। उद्धरणीये निष्कासनीये। तन्मूलं नयनोत्पाटननिमित्तकमेव। अस्य कामपालस्य। अतोऽस्माद्धेतोः। एकान्ते विजने। अश्रु रोदनसलिलम्। साधोर्निरपराधिनः। पुरः तन्मृतेः पूर्वमेवेत्यर्थः। मोक्तुकामः त्यक्तुमिच्छुः। परिकरं कक्षाबन्धम्। **मयापीति**। पितृव्यसनं पितुरापदम्। आकर्ण्य श्रुत्वा। पर्यश्रुणाऽश्रुमुखेन। स पूर्णभद्रः। अभिहितः कथितः। गोपायित्वाऽकथयित्वा। हस्ते न्यासो निक्षेपः। शक्ष्यामि समर्थोऽस्मि। उदायुधानां गृहीतशस्त्राणाम्। संकुले जनबाहुल्ये। तस्य मत्पितुः कामपालस्य। शस्त्रिकां खड्गम्। अनवसितवचनेऽसमापितवाक्ये एव। आशीविषः सर्पः। 'आशीविषो विषधरश्चक्री व्यालः सरीसृपः' इत्यमरः। प्राकाररन्ध्रेण प्राकारबिलेन। उदैरयदुद्गमयति स्म। तं सर्पम्। अभिगृह्य स्ववशीकृत्य। समीहितमभीष्टम्। अनेन सर्पेण। तातं पितरम्। अलक्ष्यमाणः न दृश्यमानः। संकुले जनसंबाधे। यदृच्छया दैवगत्या। तथा तेन प्रकारेण। स्तम्भयेयं स्तम्भितं कुर्याम्। उदास्येत राजपुरुषैरुपेक्षितो भवेत्। मुक्तसाध्वसेन त्यक्तभयेन। मे माता कान्तिमती। देव्या राजहंसमहिष्याः। युष्माकं सूनुः पुत्रः। अनुप्राप्तः समीपमागतः। पितुः कामपालस्यावस्थामापद्दशाम्। मत्तो मत्सकाशादुपलभ्य श्रुत्वा। मुक्तत्रासया वीतसाध्वसया। क्षत्रधर्मः क्षत्रियजातिधर्मः। निरपेक्षं निर्विचारं निग्राह्यो दण्डनीयः। स्त्रीधर्मः पतिव्रताकुलधर्मश्च। गन्तव्याऽनुसरणीया। अमुनैव पत्या सहैव। चिताग्निं दाहाग्निम्। 'चिता चित्या चितिः स्त्रियाम्' इत्यमरः। आरोक्ष्यामि प्रवेक्ष्यामि। युवति-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

जनानुकूलः पश्चिमो विधिरनुज्ञातव्यः' इति । स एवं निवेदितो नियतमनुज्ञास्यति । ततः स्वमेवागारमानीय काण्डपटीपरिक्षिप्ते विविक्तोद्देशे दर्भसंस्तरणमधिशाय्य स्वयं कृतानुमरणमण्डनया त्वया च तत्र संनिधेयम् । अहं च बाह्यकक्षागतस्त्वया प्रवेशयिष्ये । ततः पितरमुज्जीव्य तदभिरुचितेनाभ्युपायेन चेष्टिष्यामहे' इति । स 'तथा' इति हृष्टतरस्तूर्णमगमत् । अहं तु घोषणस्थाने चिञ्चावृक्षं घनतरविपुलशाखमारुह्य गूढतनुरतिष्ठम् । आरूढश्च लोको यथायथमुच्चैःस्थानानि । उच्चावचप्रलापाः प्रस्तुताः । तावन्मे पितरं तस्करमिव पश्चाद्बद्धभुजमुद्धुरध्वनि महाजनानुयातमानीय मदभ्याश एव स्थापयित्वा मातङ्गस्त्रिरघोषयत्—'एष मंत्री कामपालो राज्यलोभाद्भर्तारं चण्डसिंहम्, युवराजं चण्डघोषं च विषान्नेनोपांशु हत्वा पुनर्देवोऽपि सिंहघोषः पूर्णयौवन इत्यमुष्मिन्पापमाचरिष्यन्विश्वासाद्रहस्यभूमौ पुनरमात्यं शिवनागमाहूय स्थूणमङ्गारवर्षं च राजवधायोपजप्य तैः स्वामिभक्त्या विवृतगुह्यो राज्यकामुकस्यास्य ब्राह्मणस्यान्धतम-

---

जनानुकूलस्तरुणीजनयोग्यः । पाश्चिमो विधिरन्त्यः संस्कारोऽनुगमनरूपः । 'अन्तो जघन्यं चरममन्त्यपाश्चात्त्यपश्चिमाः' इत्यमरः । अनुज्ञातव्यो भवता संमन्तुमुचितः । स राजा सिंहघोषः । नियतमवश्यमेव । अनुज्ञास्यति संमंस्यते । अगारं गृहम् । काण्डपटीपरिक्षिप्ते तिरस्करिण्यावृते । 'अपटी काण्डपटः स्यात्प्रतिसीरा जवन्यपि । तिरस्करिणी' इति हैमः । विविक्तोद्देशे जनशून्यस्थले । दर्भसंस्तरणं कुशशय्याम् । अधिशाय्य शाययित्वा । कृतम् अनुमरणाय सहगमनाय मण्डनमलंकरणं ययैवंभूतया । संनिधेयं संनिहितया भवितव्यम् बाह्यकक्षागतो बहिःप्रकोष्ठं प्रविष्टः सन् । 'कक्षा प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इत्यमरः । त्वया पूर्णभद्रेण । प्रवेशयिष्ये प्रवेशितो भविष्यामि । उज्जीव्य जीवयित्वा । तदभिरुचितेन पितृसंमतेन । चेष्टिष्यामहे राजनिग्रहार्थं यतिष्यामहे । स पूर्णभद्रः । तूर्णमाशु । अगमन्मातरं कान्तिमतीं प्रति सर्वं कथयितुं गतः । घोषणास्थाने डिण्डिमवादनस्थले । चिञ्चावृक्षमम्लतरुम् । 'तिन्तिडी चिञ्चाऽम्लिका' इत्यमरः । घनतरा निविडा विपुला विस्तृताश्च शाखा यस्मिन्नेतादृशम् । गूढतनुरलक्षितगात्रः । आरूढ आरुह्य स्थितः । यथायथं यथालाभम् । उच्चैःस्थानानि उन्नतप्रदेशान् । उच्चावचप्रालापा नानाविधभाषणानि । प्रस्तुता आरब्धाः । मे पितरं कामपालम् । तस्करं चोरमिव । पश्चात्पृष्ठभागे बद्धौ निगडितौ भुजौ यस्यैवंविधम् । उद्धुरध्वनि विशृंखलनादसहितं यथा तथा । 'उद्धुरं तु विशृंखलम्' इति हैमः । महाजनैर्मान्यपुरुषैरनुयातमनुसृतम् । ममाभ्याशे समीपे । मातङ्गश्चण्डालः । 'चण्डालप्लवमातङ्ग–' इत्यमरः । त्रिर्वारत्रयम् । 'द्वित्रिचतुर्भ्यः सुच्' । इति क्रियाभ्यावृत्तिगणने सुच् । अघोषयद्घोषणां कृतवान् । राज्यस्य लोभात्प्राप्तीच्छया । भर्तारं राजानम् । उपांशु रहसि । पूर्णयौवनस्तारुण्यं प्राप्तः । अमुष्मिन् सिंहघोषेऽपि । पापं हिंसाकर्माचरिष्यन् विधास्यन् । शिवनागस्थूणाङ्गारवर्षा अमात्याः । उपजप्य अन्तः कलहं विधाय । 'उपजापः कृतो भेदः' इत्यमरः । तैः शिवनागादिभिः । स्वामिभक्त्या राजविश्वासात् । विवृतगुह्यः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

सप्रवेशो न्याय्य इति प्राड्विवाकवाक्यादक्ष्युद्धरणाय नीयते। पुनरन्योऽपि यदि स्यादन्यायवृत्तिस्तमप्येवमेव यथार्हेण दण्डेन योजयिष्यति देवः' इति। श्रुत्वैतद्बद्धकलकले महाजने पितुरङ्के प्रदीप्तशिरसमाशीविषं व्याक्षिपम्। अहं च भीतो नामावप्लुत्य तत्रैव जनादनुलीनः क्रुद्धव्यालदष्टस्य तातस्य विहितजीवरक्षो विषं क्षणादस्तम्भयम्। अपतच्चैव भूमौ मृतकल्पः। प्रालपं च 'सत्यमिदं राजावमानिनं दैवो दण्ड एव स्पृशतीति। यदयमक्षिभ्यां वित्तावनिपेन चिकीर्षितः, प्राणैरेव वियोजितो विधिना' इति। मदुक्तं च केचिदन्वमन्यन्त,अपरे पुनर्निनिन्दुः। दर्वीकरस्तु तमपि चण्डालं दृष्ट्वा रूढत्रासद्रुतलोकदत्तमार्गः प्राद्रवत्।

अथ मदम्बा पूर्णभद्रबोधितार्था तादृशेऽपि व्यसने नातिविह्वला कुलपरिजनानुयाता पङ्क्यामेव धीरमागत्य मत्पितुरुत्तमाङ्गमुत्सङ्गेन धारयन्त्यासित्वा राज्ञे समादिशत्–'एष मे पतिस्तवापकर्ता न वेति दैवमेव जानाति। न मेऽनयास्ति चिन्तया फलम्। अस्य तु पाणिग्राहकस्य गतिमननुप्रपद्यमाना भवत्कुलं कलङ्कयेयम्'। अतोऽनुमन्तुमर्हसि भर्त्रा सह चिताधिरोहणाय माम्' इति। श्रुत्वा चैतत्प्रीतियुक्तः समादिक्षत्क्षितीश्वरः–'क्रियतां कुलोचितः संस्कारः। उत्सवो

---

प्रकाशितरहस्यः। राज्यस्य कामुकोऽभिलाषी। 'कमेरनिषेधः' इति प्रतिप्रसवात् 'न लोका–' इति षष्ठीनिषेधो न। अन्धतमसे गाढान्धकारे प्रवेशः। अन्धं तमोऽन्धतमसम्। 'अवसमन्धेभ्यस्तमसः' इति समासान्तोऽच्प्रत्ययः। न्याय्यो न्यायप्राप्तः। 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः। प्राड्विवाकानां न्यायाधीशानां वाक्यात्। 'द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ' इत्यमरः। अक्ष्युद्धरणाय नेत्रोत्पाटनाय। अन्यायवृत्तिरन्यायाचरणशीलः। देवो राजा सिंहघोषः। **श्रुत्वेति**। बद्धकलकले कृतकोलाहले। आशीविषं सर्पम्। भीतो नाम भीत इव। अवप्लुत्य नीचैः पतित्वा। जनादनुलीनः व्यवहितः 'अन्तर्धौ येनादर्शनमिच्छति' इत्यपादानता। व्यालदष्टस्य सर्पदष्टस्य। 'चक्री व्यालः सरीसृपः' इत्यमरः। तातस्य पितुः। विहितजीवरक्षः कृतप्राणरक्षः। अस्तम्भयं निरोधितवान्। मृतकल्पो मृततुल्यः। अवनिपेन राज्ञा। चिकीर्षितः कर्तुमिष्टः। विधिना दैवेन। अन्वमन्यन्तान्वमोदन्त। दर्वीकरः सर्पः। 'दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः' इत्यमरः। चण्डालं मातङ्गम्। रूढत्रासो जातभयोऽत एव द्रुतः पलायितो यो लोकस्तेन दत्तमार्गो दत्तसरणिः सन्। प्राद्रवत् कुत्रचिद्गतोऽभूत्। 'द्रु गतौ'।

**अथेति**। ममाम्बा माता कान्तिमती। पूर्णभद्रेण बोधितार्थाऽवगमितवृत्तान्ता। व्यसने संकटे। न अतिविह्वला कातरा। धीरं मन्दम्। उत्तमाङ्गं शिरः। 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः। उत्सङ्गेनाङ्केन। आसित्वा स्थित्वा। 'आस उपवेशने'। समादिशन्निवेदनं चकार। अपकर्ताऽपकारी। चिन्तया विचारेण। पाणिग्राहकस्य पत्युः गतिं मरणरूपाम्। अननुप्रपद्यमानाऽप्राप्नुवन्ती। कलङ्कयेयं दूषितं कुर्याम्। चिताधिरोहणाय चितिमारोढुम्। समादिक्षदाज्ञां कृतवान्। 'दिश अतिसर्जने' 'शल इगुपधादनिटः क्सः' इति क्सः। क्षितीश्वरो राजा

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

त्तरं च पाश्चिमं विधिसंस्कारमनुभवतु मे भगिनीपतिः ' इति । चण्डाले तु मत्प्रतिषिद्धसकलमंत्रवादिप्रयासे संस्थिते ' कामपालोऽपि कालदष्ट एव' इति स्वभवनोपनयनममुष्य स्वमाहात्म्यप्रकाशनाय महीपतिरन्वमंस्त । आनीतश्च पिता मे विविक्तायां भूमौ दर्भशय्यामधिशाय्य स्थितोऽभूत् ।

अथ मदम्बा मरणमण्डनमनुष्ठाय सकरुणं सखीरामन्त्र्य, मुहुरभिप्रणम्य भवनदेवता यत्ननिवारितपरिजनाक्रन्दिता पितुर्मे शयनस्थानमेकाकिनी प्राविक्षत् । तत्र च पूर्वमेव पूर्णभद्रोपस्थापितेन च मया वैनतेयतां गतेन निर्विषीकृतं भर्तारमैक्षत । हृष्टतमा पत्युः पादयोः पर्यश्रुमुखी प्रणिपत्य मां च मुहुर्मुहुः प्रस्नुतस्तनी परिष्वज्य सहर्षबाष्पगद्गदमगदत्–'पुत्र, योऽसि जातमात्रः पापया मया परित्यक्तः, स किमर्थमेवं मामतिनिर्घृणामनुगृह्णासि । अथवैष निरपराध एव ते जनयिता । युक्तमस्य प्रत्यानयनमन्तकाननात् । क्रूरा खलु तारावली या त्वामुपलभ्यापि तत्त्वतः कुबेरादसमर्प्य मह्यमर्पितवती देव्यै वसुमत्यै सैव वा सदृशकारिणी । नहि तादृशाद्भाग्यराशेर्विना मादृशो जनोऽल्पपुण्यस्तवार्हति कलप्रलापामृतानि कर्णाभ्यां पातुम् । एहि, परिष्वजस्व' इति भूयोभूयः शिरसि जिघ्र-

---

सिंहघोषः । कुलोचितः कुलाचारयोग्यः । उत्सवोत्तरमुत्सवप्रधानम् । पश्चिमं चरमम् । भगिनीपतिरावुत्तः । चण्डाले मत्पितृचक्षुरुत्पाटनाय नियुक्ते मातङ्गे । मया प्रतिषिद्धाः सकलानां मन्त्रवादिनां मान्त्रिकाणां प्रयासा विषावरोपणक्लेशा यस्यैतादृशे । संस्थिते मृते । ' परेतप्रेतसंस्थिताः ' इत्यमरः । कालदष्टो यमदष्टो मृत एवेति विचार्येति शेषः । स्वभवनोपनयनं स्वगृहं प्रति प्रापणम् । अमुष्य मत्पितुः कामपालस्य प्रकाशनाय प्रकटीकरणाय । महीपती राजा सिंहघोषः । अन्वमंस्तानुज्ञातवान् । विविक्तायां जनान्तररहितायाम् । दर्भशय्यां कुशास्तरणम् । अधिशाय्य शाययित्वा ।

**अथेति** । पितुः कामपालस्य स्वगृहानयनानन्तरम् । मरणमण्डनमनुमृत्युचितभूषणम् । अनुष्ठाय धारयित्वेत्यर्थः । सकरुणं सदयम् । यत्नेनायासेन निवारितं परिजनानामाक्रन्दितं रोदनं यया तादृशी सती । एकाकिन्यसहाया । प्राविक्षदासादितवती । 'विश प्रवेशने' इत्यतः ' शल इगुपधा–' इति क्सः । पूर्णभद्रेणोपस्थापितः प्रवेशितस्तेन । वैनतेयतां गतेन गरुडतामापन्नेन । निर्विषीकृतं विषमवरोप्य निरुपद्रवतया स्थापितं भर्तारं पतिं कामपालम् । प्रणिपत्य नमस्कृत्य । प्रस्नुतस्तनी क्षरत्पयःस्तनी । **पुत्रेति** । जातमात्र उत्पन्न एव । पापया दुराचारया । किमर्थं कमुपकारं मया मात्रा कृतमुद्दिश्य । अतिनिर्घृणां निरनुकम्पाम् । जनयिता पिता । अन्तकाननात्कालमुखात्प्रत्यानयनं पुनरुज्जीवनम् । उपलभ्य तत्त्वतो मत्पुत्रत्वेन विदित्वाऽपि । वा पक्षान्तरे । सदृशकारिणी युक्तकारिणी । तादृशाद्वसुमतीभाग्यसदृशात् । अल्पपुण्यः स्वल्पपुण्यः । कलान्यव्यक्तमधुराणि प्रलापामृतानि वचनपीयूषाणि । पातुमाकर्णयितुमित्यर्थः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

न्त्यङ्कमारोपयन्ती, तारावलीं गर्हयन्त्यालिङ्गयन्त्यश्रुभिरभिषिञ्चती चोत्कम्पिताङ्गयष्टिरन्यादृशीव क्षणमजनिष्ट। जनयितापिमे नरकादिव स्वर्गम्, तादृशाद्व्यसनात्तथाभूतमभ्युदयमारूढः पूर्णभद्रेण विस्तरेण यथावृत्तान्तमावेदितो भगवतो मघवतोऽपि भाग्यवन्तमात्मानमजीगणत्। मनागिव च मत्संबन्धमाख्याय हर्षविस्मितात्मनोः पित्रोरकथयम्—'आज्ञापयतं काद्य नः प्रतिपत्तिः' इति। पिता मे प्राब्रवीत्—'वत्स, गृहमेवेदमस्मदीयमतिविशालप्राकारवलयमक्षय्यायुधस्थानम्। अलङ्घ्यतमा च गुप्तिः। उपकृताश्च मयातिबहवः सन्ति सामन्ताः। प्रकृतयश्च भूयस्यो न मे व्यसनमनुरुध्यन्ते। सुभटानां चानेकसहस्रमस्त्येव ससुहृत्पुत्रदारम्। अतोऽत्रैव कतिपयान्यहानि स्थित्वा बाह्याभ्यन्तरकोपानुत्पादयिष्यामः। कुपितांश्च संगृह्य प्रोत्साह्यास्य प्रकृत्यमित्रानुत्थाप्य सहजांश्च द्विषः, दुर्दान्तमेनमुच्छेत्स्यामः' इति। 'को दोषः, तथास्तु' इति तातस्य मतमन्वमंसि।

तथास्मासु प्रतिविधाय तिष्ठत्सु राजापि विज्ञापितोदन्तो जातानुतापः पारम्रा-

---

अङ्कमुत्सङ्गम्। गर्हयन्ती निन्दन्ती। अश्रुभिरानन्दवाष्पकणैः। अन्यादृशीवान्येव। 'त्यदादिषु दृशोऽनालोचने कञ्च' इति सूत्रे 'समानान्ययोश्चेति वक्तव्यम्' इति वार्तिकात्कञ्। 'आ सर्वनाम्नः। इत्यात्वम्। 'टिड्ढाणञ्—' इति ङीप् च। व्यसनान्नयनोत्पाटनसंकटात्। अभ्युदयं कल्याणम्। आरूढः प्राप्तः आवेदितो बोधितः। मघवतो देवेन्द्रादपि। अजीगणद्गणयामास। 'गण संख्याने' इति चौरादिरदन्तः। तस्मात् लुङि 'ई च गणः' इतीत्वम्। मनागल्पम्। हर्षेण सन्तोषेण विस्मितात्मनोरद्भुतायमानचेतसोः। प्रतिपत्तिः कर्तव्यता। अस्माकमिदमस्मदीयम्। 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः' इति छः। अतिविशालो नितरां विस्तृतः प्राकारवलयः सालवलयो यस्यैवंभूतम्। न क्षेतुं शक्यानि अक्षय्याणि 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेशः। तादृशानामायुधानां शस्त्राणां स्थानं निधानभूमिः अलंध्यतमाऽनुत्क्रमणीया गुप्तिर्भूगर्तः। 'गुप्तिः कारागृहे प्रोक्ता भूगर्ते रक्षणे यमे' इति विश्वः। सामन्ता अधीश्वराः। समीपवर्तिनो राजानः। 'सामन्तः स्यादधीश्वरः' इत्यमरः। भूयस्योऽनेकाः। अनुरुध्यन्ते कांक्षन्ते। 'अनो रुध कामे'। ससुहृत्पुत्रदारं मित्रपुत्रकलत्रसहितम्। कतिपयान्यहानि कानिचिद्दिनानि। प्रोत्साह्य तेषामुत्साहं जनयित्वा। अस्य सिंहघोषस्य। प्रकृत्यमित्रान् स्वभावत एव वैरिणः। उच्छेत्स्यामो विनाशं प्रापयिष्यामः। तातस्य पितुः। अन्वमंसि अनुमोदितवानहम्। 'मनु अवबोधने'।

**तथेति**। पूर्वोक्तप्रकारेण। प्रतिविधाय तन्निर्मूलनोपायं कृत्वा। तिष्ठत्सु वर्तमानेषु। विज्ञापितोदन्तः पूर्वोक्तदुर्मन्त्रिभिर्विज्ञापितः 'नासौ कामपालो मृतः किन्तु तत्साहाय्याय तत्पुत्रोऽर्थपालोऽप्यागतोऽस्ति' इति वृत्तान्तो यस्मै सः। जातानुतापः 'कथं सर्पदष्टो मृतः स्यादि-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मिकान्प्रयोगान्प्राय: प्रायुङ्क्त । ते चास्माभिः प्रत्यहमहन्यन्त । अस्मिन्नेवावकाशे पूर्णभद्रमुखाच्च राज्ञः शय्यास्थानमवगम्य तदैव स्वोदवासितभित्तिकोणादारभ्योरगास्येन सुरङ्गामकार्षम् । गता च सा भूमिस्वर्गकल्पमनल्पकन्यकाजनं कमप्युद्देशम् । अव्यथिष्ट च दृष्ट्वैव स मां नारीजनः । तत्र काचिदिन्दुकलेव स्वलावण्येन रसातलान्धकारं निह्नुवाना, विग्रहिणीव देवी विश्वंभरा, हरगृहिणीवासुरविजयायावतीर्णा, पातालमागता गृहिणीव भगवतः कुसुमधन्वनः, राजलक्ष्मीरिवानेकदुर्नृपदर्शनपरिहाराय महीविवरं प्रविष्टा, निष्टप्तकनकपुत्रिकेवावदातकान्तिः कन्यका, चन्दनलतेव मलयमारुतेन, मद्दर्शनेनोदकम्पत । तथाभूते च तस्मिन्नङ्गनासमाजे, कुसुमितेव काशयष्टिः, पाण्डुशिरसिजा स्थविरा काचिच्चरणयोर्मे निपत्य त्रासदीनमब्रूत—'दीयतामभयदानमस्मा अनन्यशरणाय स्त्रीजनाय । किमसि देवकुमारो दनुजयुद्धतृष्णया रसातलं विविक्षुः । आज्ञापय-

---

त्युपेक्षितोऽस्माभिः' इति जातपश्चात्तापः । पारग्रामिकान्परराष्ट्रे कर्तव्यान् 'उपरुन्ध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । दूषयेच्चास्य सततं यवसान्नोदकेन्धनम्॥' इत्युक्तरूपान् । प्रायः बहुलान् । 'प्रायो वयसि बाहुल्ये' इति वैजयन्ती । प्रायुङ्क्त प्रयुक्तवान् । अहन्यन्त प्रतिरुध्यन्ते स्म । अवकाशेऽवसरे । अवगम्य ज्ञात्वा । स्वोदवसितभित्तिकोणान्निजगृहकुड्यैकदेशात् । 'गृहं गेहोदवसितवेश्मसद्मनिकेतनम्' 'भित्तिः स्त्री कुड्यमेडूकम्' इत्यमरः । उरगास्येन सर्पमुखाकृतिना खननोपकरणविशेषेण । सुरङ्गां गुप्तबिलद्वारम् । सा सुरङ्गा । भूमिस्वर्गकल्पं भुवि स्वर्गसमानम् । अनल्पो बहुलः कन्यकाजनो यत्रैतादृशम् । अव्यथिष्ट भीतिं प्राप्तः । इन्दुकला शीतरश्मिकला । स्वस्यात्मनो लावण्येन 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इत्युक्तलक्षणेन सौन्दर्यविशेषेण । रसातलान्धकारं पातालवर्ति तमो निह्नुवाना दूरीकुर्वती । विग्रहिणी मूर्तिमती । 'शरीरं वर्ष्म विग्रहः' इत्यमरः । विश्वंभरा भूमिः । हरगृहिणी महादेवपत्नी कालीव । असुरविजयाय शुम्भादिदानवसंहारार्थमवतीर्णा कृतावतारा । कुसुमधन्वनो गृहिणी कामपत्नी रतिः । अनेकेषां दुर्नृपाणां दर्शनस्य परिहाराय तत्परिहर्तुमित्यर्थः । महीविवरं भूमिच्छिद्रम् । निष्टप्तकनकपुत्रिका वह्निशुद्धस्वर्णपुत्तलिकेव । अवदातकान्तिः स्वच्छकान्तिः । मलयमारुतेन मलयानिलवायुना । उदकम्पत कम्पयुक्ताऽभूत् । **तथाभूत इति** । तादृशीमवस्थामापन्ने । अङ्गनासमाजे स्त्रीसमुदाये । कुसुमिता पुष्पिता काशयष्टिर्वेतसलता । पाण्डुशिरसिजा जरापलितकेशी । स्थविरा वृद्धा । त्रासदीनं भयकातरं यथातथा । अस्मा अनन्यशरणायेत्यत्र 'एचोऽयवायावः' इत्यायादेशे 'लोपः शाकल्यस्य' इति यकारलोपः । पुनः सवर्णदीर्घस्तु न भवति 'पूर्वत्रासिद्धम्' इति सवर्णदीर्घे कर्तव्ये यलोपस्यासिद्धत्वात् । अनन्यशरणाय रक्षकान्तररहिताय । दनुजैरसुरैः साकं युद्धतृष्णया रणाभिलाषेण । रसातलं पातालं विविक्षुः गन्तुकामः । 'अधोभुवनपातालबलिसद्मरसातलम्' इत्यमरः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कोऽसि । कस्य हेतोरागतोऽसि' इति । सा तु मया प्रत्यवादि–'सुदत्यः, मास्म भवत्यो भैषुः । अहमास्मि द्विजातिवृषात्कामपालाद्देव्यां कान्तिमत्यामुत्पन्नोऽर्थपालो नाम । सत्यर्थे निजगृहान्नृपगृहं सुरङ्गयोपसरन्निहान्तरे वो दृष्टवान् । कथयत क्व स्थ यूयम् । कथमिह निवसथ' इति । सोदञ्जलिरुदीरितवती–'भर्तृदारक, भाग्यवत्यो वयम्, यास्त्वामेभिरेव चक्षुर्भिरनघमद्राक्ष्म । श्रूयताम् । यस्तव मातामहश्चण्डसिंहः, तेनास्यां देव्यां लीलावत्यां चण्डघोषः कान्तिमतीत्यपत्यद्वयमुदपादि । चण्डघोषस्तु युवराजोऽत्यासङ्गादङ्गनासु राजयक्ष्मणा सुरक्षयमगादन्तर्वत्न्यां देव्यामाचारवत्याम् । अमुया चेयं मणिकर्णिका नाम कन्या प्रसूता । अथ प्रसववेदनया मुक्तजीविताचारवती पत्युरान्तिकमगमत् । अथ देवश्चण्डसिंहो मामाहूयोपह्वरे समाज्ञापयत्–'ऋद्धिमति, कन्यकेयं कल्याणलक्षणा । तामिमां मालवेन्द्रनन्दनाय दर्पसाराय विधिवद्वर्धयित्वा दित्सामि । बिभेमि च कान्तिमतीवृत्तान्तादारभ्य कन्यकानां प्रकाशावस्थापनात् । अत इयमरातिव्यसनाय कारिते महति भूमिगृहे कृत्रिमशैलगर्भोत्कीर्णनानामण्डपप्रेक्षागृहे प्रचुरपरिबर्हया भवत्या संवर्ध्यताम् । अस्त्यत्र भोग्यवस्तु वर्षशतेनाप्यक्षय्यम्' इति । स तथोक्त्वा निजवासगृहस्य द्व्यंगुलभित्तावर्धपादं किष्कुविष्कम्भमुद्धृत्य तेनैव द्वारेण

---

सा तु वृद्धा । प्रत्यवादि प्रत्युक्ता । सुदत्यो हे शोभनदन्तवत्यः । 'वयसि दन्तस्य दतृ' इति दत्रादेशः । द्विजातिवृषाद्द्विजवर्यात् । सत्यर्थे प्रयोजने कस्मिंश्चिद्वर्तमाने । उपसरन् गच्छन् । अन्तरे मध्ये । वो युष्मान् । सा वृद्धा । उदीरितवत्युक्तवती । अनघं निष्पापम् । अद्राक्ष्म दृष्टवत्यः । मातामहो मातुः पिता । अपत्यद्वयं पुत्रयुगलम् । उदपाद्युत्पादितम् । अत्यासङ्गादतिविषयासक्तेः । अङ्गनासु स्त्रीषु । सुरक्षयं देवलोकम् । अगाद्गतः । अन्तर्वत्न्यां गर्भवत्याम् । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । 'अन्तर्वत्पतिवतोर्नुक्' इति नुक् ङीप् च । अमुयाऽऽचारवत्या चण्डघोषमहिष्या । मुक्तजीविता त्यक्तप्राणा । पत्युश्चण्डघोषस्यान्तिकं समीपं स्वर्गलोकमित्यर्थः । उपह्वरे एकान्ते । समाज्ञापयन्निर्दिष्टवान् । कल्याणलक्षणा शुभलक्षणा । मालवेन्द्रो मालवदेशाधीशो मानसारस्तन्नन्दनाय तत्पुत्राय । दित्सामि दातुमिच्छामि । कान्तिमत्या मत्कन्याया वृत्तान्तात् 'कुतश्चिदागतं कामपालं नाम कंचन पुरुषमाश्रितवती' इत्येवंरूपसमाचारदर्शनादारभ्य । प्रकाशावस्थापनात् बहिः स्थापनात् । अरातिव्यसनाय शत्रुरक्षायै । कारिते निर्मिते । कृत्रिमशैलस्य विहारार्थं निर्मितस्य पर्वतस्य गर्भे मध्यदेशे उत्कीर्णानि निर्मितानि नानामण्डपाः प्रेक्षागृहाणि नृत्यशालाश्च यत्रैतादृशे । 'प्रेक्षा नृत्येक्षणं प्रज्ञा' इति हैमः । प्रचुरपरिबर्हया बहूपभोग्यवस्तुयुक्तया । 'परिच्छदो नृपार्हेऽर्थे परिबर्हः' इत्यमरः । संवर्ध्यतां पोष्यताम् । भोग्यवस्तूपभोग्यसामग्री । अक्षय्यं क्षेतुमशक्यम् । 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेशः । स चण्डसिंहः । निजवासगृहस्य स्वकीयगर्भागारस्य । द्व्यंगुलभित्तौ अंगुलिद्वयपरि-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

स्थानमिदमस्मानवीविशत् । इह च नो वसन्तीनां द्वादशसमाः समत्ययुः । इयं च वत्सा तरुणीभूता । न चाद्यापि स्मरति राजा । काममियं पितामहेन दर्पसाराय संकल्पिता । त्वदम्बया कान्तिमत्या चेयं गर्भस्थैव द्यूताजिता स्वमात्रा तवैव जायात्वेन समकल्प्यत । 'तदत्र प्राप्तरूपं चिन्त्यतां कुमारेणैव' इति । तां पुनरवोचम्—'अद्यैव राजगृहे किमपि कार्यं साधयित्वा प्रतिनिवृत्तो युष्मासु यथार्हं प्रतिपत्स्ये' इति । तेनैव दीपदर्शितविलपथेन गत्वा स्थितेऽर्धरात्रे तदर्धपादं प्रत्युद्धृत्य वासगृहं प्रविष्टो विस्रब्धसुप्तं सिंहघोषं जीवग्राहमग्रहीषम्।आकृष्य च तमहिमिवाहिशत्रुः स्फुरन्तममुनैव भित्तिरन्ध्रपथेन स्त्रैणसंनिधिमनैषम् । आनीय च स्वभवनमायसनिगडसंदितचरणयुगलमवनामितमालिनवदनमश्रुबहुलरक्तचक्षुषमेकान्ते जनयित्रोरदर्शयम् । अकथयं च विलकथाम् । अथ पितरौ प्रहृष्टतरौ तं निकृष्टाशयं निशाम्य बन्धने नियम्य तस्या दारिकाया यथार्हेण कर्मणा मां पाणिमग्राहयेताम् । अनाथकं च तद्राज्यमस्मदायत्तमेव जातम् । प्रकृ-

---

च्छिन्नकुडये । 'तत्पुरुषस्यांगुलेः संख्याव्ययादेः' इति समासान्तोऽच् । अर्धपादं पाषाणविहितपिधानकम् । किष्कुः परिमाणविशेषः । 'किष्कुर्हस्ते वितस्तौ च' इत्यमरः । किष्कुर्हस्तपरिमितो विष्कम्भः परिणाहः विशालतेतियावद्यस्य तादृशम् । 'परिणाहस्तु विष्कम्भः' इति वैजयन्ती । 'परिणाहो विशालता'इत्यमरश्च । उद्धृत्योद्घाटय । अवीविशत्प्रवेशयामास । नोऽस्माकम् । वसन्तीनां निवासं कुर्वतीनाम् । समा वत्सराः । 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः'इत्यमरः । समत्ययुः समतीता अभूवन् । तरुणीभूता यौवनं प्राप्ता । कामं यथेच्छम् । इयं मणिकर्णिका । पितामहेन पितुःपित्रा चण्डसिंहेन । संकल्पिता दातुं निश्चिता । त्वदम्बया तव मात्रा । गर्भस्थोदरवर्तिन्येव । द्यूतजिता द्यूतक्रीडायां जिता । स्वमात्राऽऽचारवत्या । जायात्वेन पत्नीभावेन । समकल्प्यत संकल्पिताऽभूत् । प्राप्तरूपं युक्तियुक्तम् । तांवृद्धामृद्धिमतीम् । अद्यैवेदानीमेव । साधयित्वा विधाय । प्रतिनिवृत्तः प्रत्यागतः । यथार्हं यथोचितम् । प्रतिपत्स्ये करिष्यामि । बिलपथेन सुरङ्गामार्गेण । अर्धपादं शिलाच्छादनम् । विश्रब्धसुप्तं विश्वस्तनिद्रितम् । जीवग्राहं जीवेन सह गृहीत्वा । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः, इति णमुल् । अग्रहीषं गृहीतवान् । अहिं सर्पम् । 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इत्यमरः । अहिशत्रुर्गरुडः । स्त्रैणसन्निधिं स्त्रीसमुदायसमीपम् । 'तस्य समूहः' इत्यर्थे 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ् प्रत्ययः । अनैषं प्रापितवान् । आयसनिगडेन लोहशृंखलया संदितं बद्धं चरणयुगलं यस्यैवंविधम् । 'बद्धं निगडितं दितम्' इति वैजयन्ती । अवनमितं मलिनं च मुखं यस्यैतादृशम् । अश्रुबहुले अस्रव्याकुले रक्ते लोहितवर्णे च चक्षुषी यस्यैवंभूतम् । जनयित्रोः पित्रोः कान्तिमतीकामपालयोः । बिलकथां बिलवर्तिकन्यावृत्तान्तम् । निकृष्टाशयं दुष्टचेतोवृत्तिम् । निशाम्य विलोक्य । बन्धने कारागारे नियम्य स्थापयित्वा । दारिकायाः कन्याया मणिकर्णिकायाः । यथार्हेण यथोचितेन । पाणिमग्राहयेतां विवाहं कारितवन्तौ । अना-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तिकोपभयात्तु मन्मात्रा मुमुक्षितोऽपि न मुक्त एव सिंहघोषः । तथास्थिताश्च वयमङ्गराजः सिंहवर्मा देवपादानां भक्तिमान्कृतकर्मा चेत्यमित्राभियुक्तमेनमभ्यसराम । अभूवं च भवत्पादपङ्कजरजोऽनुग्राह्यः । स चेदानीं भवच्चरणप्रणामप्रायश्चित्तमनुतिष्ठतु सर्वदुश्चारितक्षालनमनार्यः सिंहघोषः' इत्यर्थपालः प्राञ्जलिः प्रणनाम । देवोऽपि राजवाहनः 'बहु पराक्रान्तम्, बहूपयुक्ता च बुद्धिः, मुक्तबन्धस्ते श्वशुरः पश्यतु माम्' इत्याभिधाय भूयः प्रमतिमेव पश्यन्प्रीतिस्मेरः 'प्रस्तूयतां तावदात्मीयं चरितम्' इत्याज्ञापयत् ।

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽर्थपालचरितं नाम चतुर्थ उच्छ्वासः ।

## पञ्चमोच्छ्वासः ।

सोऽपि प्रणम्य विज्ञापयामास—'देव देवस्यान्वेषणाय दिक्षु भ्रमन्नभ्रंकपस्यापि विन्ध्यपार्श्वरूढस्य वनस्पतेरधः, परिणतपतङ्गबालपल्लवावतंसिते पश्चिमदिगङ्ग-

---

थकं राजहीनम् । अस्मदायत्तमस्माकमधीनम् । प्रकृतिकोपभयात् प्रकृतयः कुपिता भविष्यन्तीति भीतेः । मुमुक्षितो मोक्तुमिष्टोऽपि । कृतकर्मा कृतोपकारः । अमित्रेण शत्रुणा चण्डवर्मणाऽभियुक्तमुपद्रुतम् । एनं सिंहवर्माणम् । अभ्यसराम साहाय्यार्थमागताः । 'अनुप्लवः सहायश्चानुसरोऽभिसरः समाः' इत्यमरः । भवतो राजवाहनस्य पादपङ्कजरजोभिश्चरणकमलधूलिभिरनुग्राह्योऽनुकम्पितुमुचितः । **स चेति** । सिंहघोषः । भवतश्चरणप्रणामरूपं पादवन्दनात्मकं प्रायश्चित्तमनुतिष्ठतु आचरतु । सर्वेषां दुश्चरितानां दुराचरितानामस्मान्प्रति कृतानामपराधानां च क्षालनं दूरीकरणम् । अनार्योऽसाधुः । प्रणनाम नमस्कारं कृतवान् । पराक्रान्तं पराक्रमः कृतः । श्वशुरः श्वशुरानुज इति भावः । पत्नीसंबन्धादयं श्वशुरानुजः । मातृसंबन्धात्तु मातुल इत्यवगन्तव्यम् । अभिधायोक्त्वा । प्रीत्या स्मेरः मन्दस्मितयुक्तः । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इति रप्रत्ययः । प्रस्तूयतामुपक्रम्यताम् । आज्ञापयदाज्ञां दत्तवान् ।

इति श्रीदशकुमारचरितव्याख्याने मनोरमाख्याने चतुर्थ उच्छ्वासः समाप्तः ॥ ४ ॥

### अथ पञ्चम उच्छ्वासः ॥ ५ ॥

इदानीमात्मनश्चरितवर्णनायोपक्रमते प्रमतिः—**देव, देवस्येति** । देवस्य राजकुमारस्य भवतो राजवाहनस्यान्वेषणाय गवेषणार्थम् । भ्रमन्पर्यटन् । अभ्रंकषणस्याकाशव्यापिनो मेघमण्डलातिक्रामिणो वा । 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्' 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः' इत्युभयत्रामरः । 'सर्वकूलाभ्रकरीषेषु कषः' इति खचि 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । विन्ध्यपार्श्वे रूढस्य समुत्पन्नस्य । वनस्पतेर्वृक्षविशेषस्य । 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः' इत्यमरः । अधोऽधोभागे । परिणतो वृद्धावस्थां प्राप्तः अस्तं गमिष्यन्निति भावः । अतएव रक्तवर्णसाम्यात्पतङ्गः सूर्य एव बालपल्लवो नूतनः किसलयः 'पतङ्गौ पक्षिसूर्यौ च' 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । तेनावतंसितेऽलंकृते

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

नामुखे पल्वलाम्भस्युपस्पृश्योपास्य संध्याम्, तमःसमीकृतेषु निम्नोन्नतेषु गन्तुमक्षमः क्षमातले किसलयैरुपरचय्य शय्यां शिशयिषमाणः, शिरसि कुर्वन्नञ्जलिम्, 'यस्मिन्वनस्पतौ वसति देवता सैव मे शरणमस्तु शरारुचक्रचारभीषणायां शर्वगलश्यामशार्वरान्धकारपूराध्मातगभीरगह्वरायामस्यां महाटव्यामेककस्य प्रसुप्तस्य ' इत्युपधाय वामभुजमशयिषि । ततः क्षणादेवावनिदुर्लभेन स्पर्शेनासुखायिषत किमपि गात्राणि, आह्लादयिषतेन्द्रियाणि, अभ्यमनायिष्ट चान्तरात्मा, विशेषतश्च हृषितास्तनूरुहाः, पर्यस्फुरन्मे दक्षिणभुजः । ' कथंन्विदम् ' इति मन्दमन्दमुन्मिषन्नुपर्यच्छचन्द्रातपच्छेदकल्पं शुक्लांशुकवितानमैक्षिषि । वामतश्चलितदृष्टिः समया सौधभित्तिं चित्रास्तरणशा-

---

सति पश्चिमदिगेवाङ्गना स्त्री तस्या मुखे । पल्वलाम्भसि स्वल्पसरःस्थितजले । ' वेशन्तः पल्वलं चाल्पसरः ' ' अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ' इत्यमरः । उपस्पृश्याचम्य । तमसान्धकारेण समीकृतेषु निम्नोन्नतभागाक्रमणेन समतामापादितेषु । क्षमातले भूप्रदेशे । किसलयैर्नूतनदलैः । उपरचय्य संपाद्य । शिशयिषमाणः शयनं कर्तुमिच्छुः । अञ्जलिं करयुग्मम् । ' तौ युतावञ्जलिः पुमान् ' इत्यमरः । शरणं रक्षयित्री । शरारुचक्रस्य सिंहव्याघ्रादिहिंसकजन्तुवर्गस्य चारेणेतस्ततः संचारेण भीषणायामतिभयानकायाम् । ' शरारुर्घातुको हिंस्रः' इत्यमरः । शर्वगलवन्महादेवकण्ठवत् श्यामेन कृष्णवर्णेन शर्वर्या रात्र्या अयं शार्वर एतादृशेनान्धकारपूरेण तमोनिवहेनाध्मातानि पूरितानि गभीराणि गह्वराणि गिरिबिलानि यत्रैतादृश्यां महाटव्यां महति वने । ' अटव्यरण्यं विपिनं गहनं काननं वनम् ' इत्यमरः । एककस्यासहायस्य ' एकादाकिनिच्चासहाये ' इति चात्कन् । ' एकाकी त्वेक एककः ' इत्यमरः । प्रसुप्तस्य निद्रां गतस्य । इति प्रार्थयेति शेषः । उपधायोपधानतया स्थापयित्वा । **तत इति** । शयनानन्तरम् । असुखायिषत सुखितान्यभूवन् । ' सुखादिभ्यः कर्तृवेदनायाम् ' इति क्यङ् । गात्राण्यङ्गानि । आल्हादयिषताल्हादं प्राप्तानि । 'ह्लादी सुखे च' इत्यात्मनेपदिनो धातोर्लुङ् । अभ्यमनायिष्ट नितरां सुतुष्टो जातः ' कर्तुः क्यङ् सलोपश्च ' इति क्यङ्सलोपौ अडागमस्तु पृथक्कृतयोपसर्गं मध्ये प्रवृत्तः । अन्तरात्माऽन्तःकरणम् । हृषिता उत्थितास्तनूरुहा रोमाणि ' हृषेर्लोमसु' इतीडागमः। पर्यस्फुरत् स्फुरितोऽभूत् । भुजस्पन्दश्चेष्टप्राप्तिसूचकस्तदुक्तं वसन्तराजेन । 'स्पन्दो भुजस्येष्टसमागमाय' इति । तत्र दक्षिणस्फुरणात्पुंसां वामस्फुरणात्स्त्रीणां चाभीष्टसिद्धिरिति प्राहुः पुराविदः ।तथैव च वर्णितं कालिदासेन । 'तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत् । वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद' इति । **कथंन्विति** । इदं स्पर्शविशेषादिकं दक्षिणभुजस्फुरणं च । मन्दमन्दं शनैः शनैः, उन्मिषन्नेत्रे उन्मीलयन् । उपरि सुप्तस्य ममोपरिभागे । अच्छो निर्मलो यश्चन्द्रातपच्छेदश्चन्द्रिकाखण्डस्तत्कल्पं तत्तुल्यम् । ' ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ' इति कल्पप्प्रत्ययः । शुक्लांशुकवितानं शुभ्रवर्णवस्त्रोल्लोचम् । ' अस्त्री वितानमुल्लोचः' इत्यमरः । ऐक्षिषि विलोकितवान् । वामतो वामभागे चलितदृष्टिः प्रसारितनयनः । समया

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

यिनमतिविश्रब्धप्रसुप्तमङ्गनाजनमलक्ष्यम् । दक्षिणतो दत्तचक्षुरागलितस्तनांशुकाम्, अमृतफेनपटलपाण्डुरशयनशायिनीम्, आदिवराहदंष्ट्रांशुजाललग्नाम्, अंसस्रस्तदुग्धसागरदुकूलोत्तरीयाम्, भयसाध्वसमूर्च्छितामिव धरणिम्, अरुणाधरकिरणबालकिसलयलास्यहेतुभिराननारविन्दपरिमलोद्वाहिभिर्निःश्वासमातरिश्वभिरीश्वरेक्षणदहनदग्धं स्फुलिङ्गशेषमनङ्गमिव संधुक्षयन्तीम्, अन्तःसुप्तषट्पदमम्बुजमिव जातनिद्रमामीलितलोचनेन्दीवरमाननं दधानाम्, ऐरावतमदावलेपलूनापविद्धामिव नन्दनवनकल्पवृक्षरत्नवल्लरीं कामपि तरुणीमालोकयम् । अतर्कयं च—'क गता सा महाटवी, कुत इदमूर्ध्वाण्डसंपुटोल्लेखि शक्तिध्वज-

---

सौधभित्तिं सौधभित्तेः समीपे । 'समयाऽन्तिकदूरयोः' इत्यमरः । 'अभितःपरितःसमया' इति तद्योगे द्वितीया च । दक्षिणतो दक्षिणभागे । आगलितमीषत्स्रस्तं स्तनांशुकं कञ्चुकपदवाच्यं कुचोत्तरीयं यस्या एवंविधाम् । अमृतस्य देवासुरैर्मथितस्य यत्फेनपटलं डिण्डीरसमुच्चयस्तद्वत्पाण्डुरे श्वेतवर्णे शयने पर्यङ्के शेते एवंशीलाम् । 'डिण्डीरोऽब्धिकफः फेनः' 'शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डुराः' 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः । आदिवराहस्य वराहरूपधारिणो विष्णोर्दंष्ट्रायास्तीक्ष्णदन्तविशेषस्यांशुजाले प्रभापटले लग्नामासक्ताम् । अंसात्स्कन्धदेशात्स्रस्तं विगलितं क्षीरसागरः क्षीरार्णव एव दुकूलोत्तरीयं क्षौमांशुककृतस्तनावरणं यस्या एवंविधाम् । 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः । भयं विष्णावनुरागः 'भयं भीत्यनुरागयोः' इति कोशः । साध्वसं भीतिर्दानवात् ताभ्यां मूर्च्छितां मूर्च्छां प्राप्तामिव धरणिमवनिम् । 'धरा धरित्री धरणिः' इत्यमरः । अरुणा रक्तवर्णा येऽधरस्याधरोष्ठस्य किरणा प्रभास्त एव बालकिसलयानि नूतनपत्राणि तेषां लास्ये नर्तने हेतुभिर्निमित्तभूतैः नात्यायतैरिति यावत् । आननारविन्दस्य मुखकमलस्य परिमलं सौरभ्यविशेषमुद्वहन्तीत्येवंशीलैः । निश्वासमातरिश्वभिर्निश्वासपवनैः । 'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः' इत्यमरः । ईश्वरस्य त्र्यक्षणस्येक्षणदहनेन तृतीयलोचनाग्निना दग्धं भस्मीकृतम् । स्फुलिङ्गशेषं कृतेऽपि भस्मीकारे स्फुलिङ्गता ज्वलत्काष्ठखण्डरूपता शेषो यस्यैतादृशमनङ्गं मन्मथं संधुक्षयन्तीमिव पुनरुज्जीवयन्तीमिव स्थिताम् । अन्तर्मध्यभागे सुप्तौ निद्रांगतौ षट्पदौ भ्रमरमिथुनं यत्रैवंभूतं तदेव जातनिद्रं संकुचितं यदम्बुजं कमलं तद्वत् स्थितमामीलिते ईषन्निमीलिते लोचने इन्दीवरे इव यस्मिन्नेतादृशमाननमास्यं दधानां धारयन्तीम् । ऐरावतस्य सुरराजवाहनस्य गजस्य मदावलेपेन गर्वातिरेकेण लूनां छिन्नां पुनरपविद्धां भूमौ पातितामिव । नन्दनवने इन्द्रोद्याने स्थितस्य कल्पवृक्षस्य कल्पतरोः संबन्धिनी तदाश्रयिणीति यावत् । या रत्नवल्लरी रत्नमञ्जरी तामिव वर्तमानाम् । 'वल्लरी मञ्जरी स्त्रियौ' इत्यमरः । तरुणीं युवतिम् आलोकयं विलोकितवानहम् । **अतर्कयं चेति** । पर्यालोचितवान् । ऊर्ध्वाण्डमुपरितनं कपालमाकाश इति भावः । 'अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशु-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

शिखरशूलोत्सेधं सौधमागतम्, क च तदरण्यस्थलीसमास्तीर्ण पल्लवशयनम्, कुतस्त्यं चेदमिन्दुगभस्तिसंभारभासुरं हंसतूलदुकूलशयनम्, एष च को नु शीतरश्मिकिरणरज्जुदोलापरिभ्रष्टमूर्च्छित इवाप्सरोगणः स्वैरसुप्तः सुन्दरीजनः, का चेयं देवीवारविन्दहस्ता शारदशशाङ्कमण्डलामलदुकूलोत्तरच्छदमधिशेते शयनतलम् । न तावदेषा देवयोषा, यतो मन्दमन्दमिन्दुकिरणैः संवाह्यमाना कमलिनीव संकुचति । भग्नवृन्तच्युतरसबिन्दुशबलितं पाकपाण्डु चूतफलमिवोद्भिन्नस्वेदरेखं गण्डस्थलमालक्ष्यते, अभिनवयौवनविदाहनिर्भरोष्मणि कुचतटे वैवर्ण्यमुपैति वर्णकम् । वाससी च परीभोगानुरूपं धूसरिमाणमदर्शयतः, तदेषा

---

समप्रभम् ॥ तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः । नखैर्हिरण्यगर्भः स तदण्डं विभिदे समम् ॥ ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ' इति स्मृतिकारमनुवचनात् । तदेव संपुटस्तदुल्लेखि व्योमपर्यन्तमुन्नतमित्यर्थः । शक्तिध्वजः कुमारस्वामी । ' सेनानीः क्रौञ्चशत्रुश्च कुमारः शक्तिकेतनः ' इत्यजयः । तस्य शिखरमालयाग्रभागस्तत्र स्थापितं यच्छूलं तस्यैवोत्सेध औन्नत्यं यस्यैतादृशम् । सौधं राजगृहम् । ' सौधोऽस्त्री राजसदनमुपकार्योपकारिका ' इत्यमरः । अरण्यस्थल्यामकृत्रिमवनोद्देशे । ' जानपदकुण्डगोणस्थल–' इति ङीष् । आस्तीर्णं विस्तारितम् । कुत आगतं कुतस्त्यम् । ' अमेहक्वतसित्रेभ्य एव ' इति त्यप् । इन्दुगभस्तिसंभारश्चन्द्रकिरणसंदोहस्तद्वद्भासुरं प्रकाशमानम् । ' हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ' ' किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः ' इत्यमरः । हंसतूलदुकूलशयनं मध्ये हंसतनूरुहैः पूरितं क्षौमवस्त्रकृतं च शयनम् । एष चेति । वामभागे शयान इत्यर्थः । न्वित्याशंकायाम् । शीतरश्मेश्चन्द्रस्य किरणा एव रज्जवो दामानि तत्कृता या दोलाऽऽन्दोलिका ततः परिभ्रष्टोऽसावधानतया पतितः अत एव मूर्च्छितः एतादृशोऽप्सरोगणो देवाङ्गनानिवहः स इव । स्वैरसुप्तः निरातङ्कं निद्रां गतः । अरविन्दहस्ता पद्मकरा लक्ष्मीरित्यर्थः । ' पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि । विष्णुप्रिये विश्वमनोऽनुकूले त्वत्पादपद्मं मयि संनिधत्स्व ' इति लक्ष्मीध्यानोक्तवचनात् । शरदि भवः शारदः एतादृशो यः शशाङ्कश्चन्द्रस्तस्य मण्डलं बिम्बमिवामलो दुकूलोत्तरच्छद उपर्यावरणकौशेयं यस्यैवंभूतं शयनतलं मञ्चोपरिभागमधिशेतेऽधिरुह्य निद्रां करोति । ' अधिशीङ्स्थासां कर्म ' इति कर्मता । देवयोषा देवाङ्गना । ' स्त्री योषिदबला योषा ' इत्यमरः । यतो यस्मात्कारणात् । संवाह्यमाना मर्द्यमाना सती । ' संवाहनं मर्दनं स्यात् ' इति हैमः । संकुचति निद्रां प्राप्नोति । ' आदित्या ऋभवोऽस्वप्नाः ' इत्यमरकोरेण देवानां निद्राराहित्यस्योपन्यस्तत्वादस्याश्च निद्रितत्वान्नेयममराङ्गनेति भावः । भग्नाल्लूनाद्वृन्तात्प्रसवबन्धाच्च्युता ये रसबिन्दवो रसकणास्तैः शबलितं नानावर्णयुतम् । ' वृन्तं प्रसवबन्धनम् ' इत्यमरः । पाकेन पाण्डु श्वेतवर्णम् । चूतफलमाम्रफलमिव । 'आम्रश्चूतो रसालः ' इत्यमरः । उद्भिन्नस्वेदरेखं संजातघर्मोदकबिन्दुकम् । गण्डस्थलं कपोलपाली । अभिनवयौवनस्य नवीनतारुण्यस्य यो विशिष्टो दाहः संतापनं तेन निर्भरोष्मणि प्रगाढोष्माणि । वर्णकं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मानुष्येव । दिष्ट्या चानुच्छिष्टयौवना, यतः सौकुमार्यमागताः सन्तोऽपि संहता इवावयवाः, प्रस्निग्धतमापि पाण्डुतानुविद्धेव देहच्छविः, स्मरपीडानभिज्ञतया नातिविशदरागो मुखे, विद्रुमद्युतिरधरमणिः, अनत्यापूर्णमारक्तमूलं चम्पककुड्मलदलमिव कठोरं कपोलतलम्, अनङ्गबाणपातमुक्ताशङ्कं च विस्रब्धमधुरं सुप्यते, न चैतद्वक्षःस्थलं निर्दयविमर्दविस्तारितमुखस्तनयुगलम्, अस्ति चानतिक्रान्तशिष्टमर्यादचेतसो ममास्यामासक्तिः । आसत्त्यनुरूपं पुनराश्लिष्टा यदि, स्पष्टमार्तरवेणैव सह निद्रां मोक्ष्यति । अथाहं न शक्ष्यामि चानुपश्लिष्य शयितुम् । अतो यद्भावि तद्भवतु । 'भाग्यमत्र परीक्षिप्ये' इति स्पृष्टास्पृष्टमेव किमप्याविद्धरागसाध्वसं लक्षसुप्तः स्थितोऽस्मि । सापि किमप्युत्कम्पिना रोमोद्भेदवता वामपार्श्वेन सुखायमानेन मन्दमन्दजृम्भिकारम्भमन्थराङ्गी, त्वङ्गदग्रपक्ष्मणोश्चक्षु-

---

चन्दनादिविलेपः । 'वर्णकोऽस्त्री विलेपनम्' इत्यमरः । वाससी वस्त्रयुगलम् । परीभोगस्य अनुरूपं सदृशम् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम् इति' दीर्घः । धूसरिमाणं मलिनताम् । **दिष्ट्येति** । मम भाग्यवशादेवेत्यर्थः । अनुच्छिष्टमन्येन केनापि न भुक्तं यौवनं यस्या एतादृशी । अनुच्छिष्टत्वे प्रमाणान्याह—**यत** इत्यादिना । सौकुमार्यं मृदुलस्वभावम् । संहताः संश्लिष्टाः न शिथिलीभूताः । अवयवा अङ्गानि । पाण्डुतयाऽनुविद्धा युक्ता । देहच्छविः शरीरकान्तिः । स्मरपीडानभिज्ञतया मदनोपद्रवाणामपरिचिततया नातिविशदः नातिप्रकटः । रागोऽनुरागः । विद्रुमद्युतिः प्रवालसदृशकान्तिः । अनत्यापूर्णं किञ्चित्पूर्णम् । चम्पकस्य कुड्मलदलं मुकुलपत्रमिव । अनङ्गबाणपातान्मदनबाणवृष्टेः सकाशान्मुक्ताशङ्कं वीतभयं यथा तथा । विस्रब्धं विश्वासस्तेन मधुरं मनोज्ञं यथा तथा च सुप्यते स्वापः क्रियते । किञ्चैतस्याः वक्षःस्थलमुरोभागः निर्दयविमर्देन निरनुकम्पं यथा तथा पुरुषहस्तसंघट्टनेन विस्तारितमुखं बहिः प्रकटीकृतचूचुकं स्तनयोर्युगलं यस्मिन्नेतादृशमपि नास्ति । अनतिक्रान्ताऽनुल्लंघिता शिष्टमर्यादा येनैवंविधं चेताश्चित्तं यस्यैवंभूतस्य ममास्यामासक्तिरनुरागश्चोत्पन्नोऽस्ति । अत इयमनन्यभुक्ता मदुपभोगयोग्या च वर्तत इति रहस्यं ध्वनितम् । एवमात्मतुष्टिप्रमाणेनैव हि निश्चितवान् स्वोपभोग्यां शकुन्तलां दुष्यन्तो राजा 'असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः । सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥' इति । आसक्तेरनुरूपं सदृशम् । आर्तरवेण दीनस्वरेण । न शक्ष्यामि न समर्थो भविष्यामि । स्पृष्टास्पृष्टमेव किञ्चित्स्पृष्ट्वेत्यर्थः । आविद्धरागसाध्वसं निरातिशयकन्यालाभाद्रागः, स्पृष्टा चेयमार्तनादं करिष्यतीति साध्वसं भयं ताभ्यां युक्तं यथा तथा । लक्षसुप्तः सा किंकरोतीति लक्षयन्सुप्त इव । **साऽपीति** । मत्पार्श्वशायिनी कन्या च । किमप्युत्कम्पिना किञ्चित्कंपनशीलेन । 'किमप्यव्यपदेश्ये स्यादीषन्मात्रे परात्मनि' इत्यजयः । रोमोद्भेदवता रोमाञ्चितेन । सुखायमानेन समुत्पन्नसुखेन । मन्दमन्दं शनैः शनैः यो जृम्भिकारम्भः गात्रभङ्गप्रारम्भः 'जृम्भिका गात्रभङ्गः स्यात्' इत्यजयः । तेन मन्थराङ्गी सुन्दराङ्गी ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

षोरलसतान्ततारकेणानातिपक्वनिद्राकषायितापाङ्गपरभागेन युगलेनेषदुन्मिषन्ती, त्रासविस्मयहर्षरागशङ्काविलासविभ्रमव्यवहितानि व्रीडान्तराणि कानि कान्यपि कामेनाद्भुतानुभावेनावस्थान्तराणि कार्यमाणा, परिजनप्रबोधनोद्यतां गिरं कामावेगपरवशं हृदयमङ्गानि च साध्वसायाससंबध्यमानस्वेदपुलकानि कथंकथमपि निगृह्य, सस्पृहेण मधुरकूणितत्रिभागेन मन्दमन्दप्रचारितेन चक्षुषा मदङ्गानि निर्वर्ण्य, दूरोत्सर्पितपूर्वकायापि तस्मिन्नेव शयने सचकितमशयिष्ट । अजनिष्ट मे रागाविष्टचेतसोऽपि किमपि निद्रा। पुनरननुकूलस्पर्शदुःखायत्तगात्रः प्राबुध्ये। प्रबुद्धस्य च सैव मे महाटवी, तदेव तरुतलम्, स एव पत्रास्तरः समाभूत्। विभावरी च व्ययासीत् । अभूच्च मे मनसि किमयं स्वप्नः किं विप्रलम्भो वा,

---

मन्थरौ नम्रसुन्दरौ' इति वैजयन्ती। त्वङ्गच्चञ्चलं 'त्वगि कम्पने' इति धातोरुत्पन्नं तादृशमग्रपक्ष्म ययोस्तादृशोश्चक्षुषोर्नयनयोर्युगलेन युग्मेन। पुनः कथंभूतेन अलसे मद्दर्शनार्थमुद्युक्ततया इतस्ततो गन्तुमशक्ते तान्ते निद्राया अवशिष्टतया ईषत्खेदयुक्ते तारके कनीनिके यस्यैवंभूतेन, अनातिपक्वा ईषदपरिसमाप्ता या निद्रा तया कषायितः मिश्रितः परभागगुणोत्कर्षो यस्यैतादृशेन। उन्मिषन्ती निद्रां परित्यजन्ती । अपूर्वपुंदर्शनात्त्रास उद्वेगः, तदागमनप्रकारानवगमाद्विस्मय अश्चर्यम्, तदङ्गस्पर्शसुखानुभवाद्धर्ष आनन्दः, स्वानुरूपतया तस्मिन्रागश्चित्तलयः, बलात्कारेण यद्यहमनेन स्वाङ्कं समारोपिता तर्हि पितरौ सखीवर्गश्च किं वदिष्यन्तीति शङ्का, विलासा नानाविधाः शृङ्गारचेष्टाः, विभ्रमोऽलंकारादीनां स्थानस्थितानामपि भ्रमात्स्थानान्तरे निक्षेपः । 'अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः' इति रसरत्नहारः। एतदादिभिः शृङ्गाररसस्य व्यभिचारिभावैः व्यवहितानि । व्रीडा लज्जा अन्तरा मध्ये येषां तादृशानि कानि कान्यपि न निर्वक्तुमुचितानि । अद्भुतानुभावेन महाप्रभाववता कामेन मन्मथेन । कार्यमाणा विधाप्यमाना सती। परिजनप्रबोधनाय सखीवर्गजागरणाय उद्यतामर्धोद्गतामपि गिरं स्ववाणीम्। साध्वसायासाभ्यां भयखेदाभ्यां संबध्यमानस्वेदपुलकानि जायमानघर्मोदकबिन्दुकानि । सस्पृहेण साभिलाषेण। मधुरं मनोज्ञं यथा तथा कूणिताः संकोचं प्रापितास्त्रयो भागा नेत्रस्यादिमध्यान्त'भागा यस्यैवंविधेन 'कूण संकोचने' इति चौरादिकाद्धातोः कूणितानिष्पत्तिः। निर्वर्ण्य दृष्ट्वा। दूरोत्सर्पितपूर्वकायाऽपि । पूर्वं कायस्य पूर्वकायः 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इत्येकदेशिसमासः। दूरात्कियद्दूरपर्यन्तमुत्सर्पितः उत्थापितः पूर्वकायो यया एतादृश्यपि । सचकितं सभयम्। अशयिष्ट शयनमकरोत्। अजनिष्ट जाता 'दीपजन-' इति चिणभावपक्षे रूपम्। रागेणानुरागेणाविष्टचेतसो व्याप्तहृदयस्यापि। किमपि निष्कारणा । **पुनरिति**। अननुकूलेनानभीष्टेन स्पर्शेन दुःखायत्तानि दुःखाधीनानि गात्राण्यवयवा यस्यैवंविधः सन् । प्राबुध्ये बोधं प्राप्तवान्। सैव पूर्वं यत्र शयितोऽहं सैवेत्यर्थः। विभावरी रात्रिः। 'विभावरीतमस्विन्यौ रजनी यामिनी तमी' इत्यमरः। व्ययासीदतीताऽभूदित्यर्थः। विप्रलम्भः प्रतारणम् । असुरस्येय-


CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

किमियमासुरी दैवी वा कापि माया। यद्भावि तद्भवतु। नाहमिदं तत्त्वतो नावबुध्य मोक्ष्यामि भूमिशय्याम्। यावदायुरत्रत्यायै देवतायै प्रतिशयितो भवामि' इति निश्चितमतिरतिष्ठम्।

अथाविर्भूय कापि रविकराभितप्तकुवलयदामताम्ताङ्गयष्टिः, क्लिष्टनिवसनोत्तरीया, निरलक्तकरूक्षपाटलेन निःश्वासोष्मजर्जरितत्विषा दन्तच्छदेन वमन्तीव कपिलधूमधूम्रं विरहानलम्, अनवरतसलिलधाराविसर्जनाद्रुधिरावशेषमिव लोहिततरं द्वितयमक्ष्णोरुद्वहन्ती, कुलचारित्रबन्धनपाशविभ्रमेणैकवेणीभूतेन केशपाशेन,नीलांशुकचीरचूडिकापरिवृता पतिव्रतापताकेव संचरन्ती, क्षामक्षामापि देवतानुभावादनतिक्षीणवर्णावकाशा सीमन्तिनी, प्रणिपतन्तं मां प्रहर्षोत्कम्पितेन भुजलताद्वयेनोत्थाप्य पुत्रवत्परिष्वज्य शिरस्युपाघ्राय वात्सल्यमिव स्तनयुगलेन स्तन्यच्छलात्प्रक्षरन्ती, शिशिरेणाश्रुणा निरुद्धकण्ठी स्नेहगद्गदं

---

मासुर्यसुरकृतेत्यर्थः। नावबुध्याज्ञात्वा। यावदायुर्जीवनकालपर्यन्तम्। 'यावदवधारणे' इत्यव्ययीभावः। अत्रत्यायै महाटवीभवायै। 'अमेहक्वतसित्रेभ्य एव' इति त्यप्प्रत्ययः। तां देवतां प्रष्टुमिति भावः। प्रतिशयितो यावद्देवताऽऽगत्य सर्वं तत्त्वं कथयिष्यति तावन्नोत्थास्ये इति प्रतिज्ञापूर्वकं शयितः। इति पूर्वोक्तप्रकारेण निश्चितमतिरतिष्ठं स्थितः।

**अथेति**। आविर्भूय प्रकटीभूय। रविकरैः सूर्यांशुभिरभितप्तं म्लानिं गमितं यत्कुवलयदाम उत्पलस्रग्, 'स्यादुत्पलं कुवलयम्' इत्यमरः। तद्वत्तान्ता म्लानाऽङ्गयष्टिर्यस्याः सा। क्लिष्टं दुर्वलं निवसनमधोंऽशुकमुत्तरीयं च यस्याः सा। निरलक्तके रसविशेषविलेपनशून्येनात एव रूक्षेण कर्कशेन पाटलेन स्त्रीजातिस्वाभाव्याच्च श्वेतरक्तेन। निश्वासोष्मणा श्वासपवनस्यौष्ण्येन दूरीकृता त्विट् कान्तिर्यस्यैवंविधेन दन्तच्छदेन ओष्ठेन। वमन्त्युद्गिरन्तीव। कपिलः पिशङ्गवर्णो यो धूमस्तेन धूममीषद्रक्तनीलवर्णमेतादृशं विरहानलं विरहाग्निम्। 'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः। 'धूमलौ कृष्णलोहिते' इति च। अनवरतमजस्रं सलिलधाराया रोदनजलधाराया विसर्जनात् त्यागात् रुधिरं रक्तमेवावशेषो यत्रैतादृशमिव लोहिततरमतिरक्तवर्णम्। अक्ष्णोर्द्वितयं नयनयुगलम्। कुलं सत्कुलप्रसूतता, चारित्रं पतिव्रताधर्माचरणं तयोर्बन्धनाय बद्ध्वा स्वास्मित्रक्षणार्थं यः पाशो रज्जुस्तस्येव विभ्रमो विलासो यस्यैवं स्थितेन। केशपाशेन शिरोरुहकलापेनोपलक्षितेत्यध्याहार्यम्। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः। नीलांशुकं नीलवस्त्रं, चीरचूडिका सभर्तृकाभिर्हस्ते धार्यमाणो वलयाकृतिरलंकारविशेषः, ताभ्यां परिवृता संवीता। पताका वैजयन्ती। एवमेव वैजयन्ती। संचरन्ती संचरणशीला। क्षामक्षामाऽपि नितरां दुर्बलाऽपि। देवतानुभावाद्देवतामाहात्म्यात्। अनतिक्षीणो नात्यन्तक्षीणो वर्णः शरीरकान्तिः अवकाशः शरीरसंस्थानं च यस्या एतादृशी। सीमन्तिनी काचिदङ्गना। 'नारी सीमन्तिनी वधूः' इत्यमरः। प्रहर्षादानन्दातिरेकादुत्कम्पितेन प्रसारितेन। परिष्वज्यालिङ्गय। वत्सलाया भावो वात्सल्यं स्नेहस्तादिव। स्तने भवं स्तन्यपयस्तच्छलात्तन्मिषेण।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

व्याहार्षीत्––'वत्स, यदि वः कथितवती मगधराजमहिषी वसुमती मम हस्ते बालमर्थपालं निधाय कथां च कांचिदात्मभर्तृपुत्रसखीजनानुबद्धां राजराजप्रवर्तितां कृत्वान्तर्धानमगादात्मजा मणिभद्रस्येति' साहमस्मि वो जननी। पितुर्वो धर्मपालसूनोः सुमंत्रानुजस्य कामपालस्य पादमूलान्निष्कारणकोपकलुषिताशया प्रोष्यानुशयविधुरा स्वप्ने केनापि रक्षोरूपेणोपेत्य शप्तास्मि––'चण्डिकायां त्वयि वर्षमात्रं वसामि प्रवासदुःखाय' इति ब्रुवतैवाहमाविष्टा प्राबुध्ये। गतं च तद्वर्षं वर्षसहस्रदीर्घम्। अतीतायां तु यामिन्यां देवदेवस्य त्र्यम्बकस्य श्रावस्त्यामुत्सवसमाजमनुभूय बन्धुजनं च स्थानस्थानेभ्यः संनिपातितमभिसमीक्ष्य मुक्तशापा पत्युः पार्श्वमभिसरामीति प्रस्थितायामेव मयि, त्वमत्राभ्युपेत्य 'प्रतिपन्नोऽस्मि शरणमिहत्यां देवताम्' इति प्रसुप्तोऽसि। एवं शापदुःखाविष्टया तु मया तदा न तत्त्वतः परिच्छिन्नो भवान् अपि तु शरणागतस्त्वविरलप्रमादायामस्यां महाटव्यामयुक्तं परित्यज्य गन्तुमिति मया त्वमपि स्वपन्नेवासि नीतः। प्रत्यासन्ने च तस्मिन्देवगृहे पुनराचिन्तयम्––'कथमिह तरुणेनानेन सह समाजं गमिष्यामि'

---

प्रक्षरन्ती मुञ्चन्ती। शिशिरेण पुत्रतुल्यस्य मम दर्शनाच्छीतलेनाश्रुणाऽऽनन्दबाष्पेण। निरुद्धः प्रतिहतः कण्ठो यस्याः सा। 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इत्यत्र संयोगोपधत्वान्निषिद्धोऽपि ङीष् 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति वार्तिककृता प्रतिप्रसूतः। व्याहार्षीत्कथयामासेत्यर्थः। **वत्सेति**। हे पुत्रक। मगधराजस्य राजहंसस्य महिषी पत्नी। 'कृताभिषेका महिषी' इत्यमरः। अनुबद्धां तदाश्रयिणीम्। राजराजेन कुबेरेण प्रवर्तितामुपन्यस्ताम्। 'राजराजो धनाधिपः' इत्यमरः। कृत्वा मन्निकटे कथयित्वेत्यर्थः। अन्तर्धानं तिरोभावमगाद्गता। आत्मजा तनया तारावलीनाम्नी। सा या वसुमत्या कथिता। जननी मातृस्थानीया निष्कारणं निमित्तमन्तरैव कोपेन 'सपत्नीं तोषितवानयं मे भर्ता' इति भ्रमजनितक्रोधेन कलुषिताशया दूषितचित्ता। प्रोष्य प्रवासं कृत्वा। अनुशयविधुरा पश्चात्तापेन दह्यमाना सती। शप्ताऽस्मि शापं प्रापिताऽस्मि। चण्डिकायां कोपनायां त्वयि। वर्षमात्रमेकवर्षपर्यन्तम्। प्रवासदुःखाय तस्मिन्काले दुःखजननार्थमित्यर्थः। आविष्टाऽऽक्रान्ता। वर्षसहस्रवद्दीर्घमतिदुस्तरमिति भावः। अतीतायां यामिन्यां पूर्वदिवसरात्रौ। 'रजनी यामिनी तमी' इत्यमरः। त्र्यम्बकस्य महादेवस्य। श्रावस्त्यामेतन्नाम्न्यां पुर्याम्। स्थानस्थानेभ्यो नानास्थानेभ्यः। सन्निपातितं सन्निहितम्। अभिसमीक्ष्य दृष्ट्वा। मुक्तशापा शापावसानं प्राप्ता। पत्युः कामपालाभिधस्य काशीपुर्यमात्यस्य। अभिसरामि गच्छामि। त्वं प्रमतिः। अत्र महाटव्याम्। इहत्यामत्र वर्तमानाम्। 'अमेहक्वतसत्रेभ्य एव' इति त्यप्। प्रसुप्तोऽसि निद्रां गतोऽसि। एवं पूर्वोक्तप्रकारेण शापदुःखेनाविष्टया भूतावेशं प्राप्तया। तत्त्वतः परिच्छिन्नो भवान् ईदृशतया न ज्ञातः। अविरला बहुलाः प्रमादा यस्यामेतादृश्याम्। स्वपन्नेव निद्रां कुर्वन्नेव। प्रत्यासन्ने समीपवर्तिनि सति। देवगृहे देवतायतने। तरुणेन यूना। समाजं सामितिं 'पशूनां समजोऽ-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

इति। अथ राज्ञः श्रावस्तीश्वरस्य यथार्थनाम्नो धर्मवर्धनस्य कन्यां नवमालिकां घर्मकालसुभगे कन्यापुरविमानहर्म्यतले विशालकोमलतलं शय्यातलमधिशयानां यदृच्छयोपलभ्य 'दिष्ट्येयं सुप्ता, परिजनश्च गाढनिद्रः। शेतामयमत्र मुहूर्तमात्रं ब्राह्मणकुमारो यावत्कृतकृत्या निवर्तेय' इति त्वां तत्र शाययित्वा तमुद्देशमगमम्। दृष्ट्वा चोत्सवश्रियम्, निर्विश्य च स्वजनदर्शनसुखमभिवाद्य च त्रिभुवनेश्वरमात्मालीकप्रत्याकलनोपारूढसाध्वसं च नमस्कृत्य भक्तिप्रणतहृदयां भगवतीमम्बिकाम्, तया गिरिदुहित्रा देव्या सस्मितम् 'अयि भद्रे, मा भैषीः। भवेदानीं भर्तृपार्श्वगामिनी। गतस्ते शापः' इत्यनुगृहीता सद्य एव प्रत्यापन्नमहिमा प्रतिनिवृत्त्य दृष्ट्वैव त्वां यथावदभ्यजानाम्—'कथं मत्सुत एवायं वत्सस्यार्थपालस्य प्राणभूतः सखा प्रमतिरिति पापया मयास्मिन्नज्ञानादौदासीन्यमाचरितम्। अपि चायमस्यामासक्तभावः। कन्या चैनं कामयते युवानम्। उभौ चेमौ लक्षसुप्तौ त्रपया साध्वसेन वान्योन्यमात्मानं न विवृण्वाते। गन्तव्यं च मया। कामाघ्रातयाप्यनया कन्यया रहस्यरक्षणाय न समाभाषितः सखीजनः परिजनो वा। नयामि तावत्कुमारम्। पुनरपीममर्थं लब्धलक्षो यथोपपन्नैरुपायैः साधयिष्यति' इति मत्प्रभावप्रस्वापितं भवन्तमेतदेव पत्रशयनं प्रत्य-

---

न्येषां समाजः' इत्यमरः। श्रावस्तीश्वरस्य तन्नगराधिपस्य। यथार्थं 'धर्मं वर्धयति धर्मवर्धनः' इत्यर्थयुक्तनाम यस्यैवंविधस्य। घर्मकाले ग्रीष्मर्तावपि सुभगे शैत्यादिगुणयुक्तत्वान्मनोहरे। उपलभ्य विलोक्य। दिष्ट्या दैवयोगात्। इयं नवमालिका। गाढनिद्रो दृढनिद्राक्रान्तः। शेतां शयनं करोतु। अयं त्वं प्रमतिरित्यर्थः। कृतकृत्या कृताप्तविलोकना सती। निवर्तेय प्रत्यागच्छामि। तत्र तस्या मञ्चे। शाययित्वा निद्रां कारयित्वा। तमुद्देशं समाजमित्यर्थः। निर्विश्यानुभूय। स्वजनदर्शनसुखं बन्धुवर्गदर्शनानन्दम्। अभिवाद्य नमस्कृत्य। आत्मनो मम योऽलीकोऽपराधो भर्तृत्यागरूपः 'अलीकमपराधे स्यादसत्याप्रिययोरपि' इत्यजयः। तस्य प्रत्याकलने पुनः स्मरणेनोपारूढसाध्वसं संजातभयं यथेति क्रियाविशेषणम्। भक्तिप्रणतहृदयां भक्त्यधीनहृदयाम्। अम्बिकां गिरिराजकन्यकाम्। गिरिदुहित्रा अम्बिकया। सस्मितं मन्दहास्यसहितं यथा तथा। अयीत्यामन्त्रणेऽव्ययम्। भद्रे हे कुशलिनि। भर्तुः पार्श्वगामिनी समीपं प्राप्ता भव। प्रत्यापन्नो लब्धमहिमा। दृष्ट्वैव त्वां दर्शनमात्रेणैव तव। यथावत् तत्त्वतः। अभ्यजानां ज्ञातवत्यस्मि। प्राणभूतो जीविततुल्यः। पापया दुर्भाग्यया। औदासीन्यमुदासीनभावः। **अपिचेति**। अयं प्रमतिः। अस्यां नवमालिकायामासक्तभावो रक्तचित्तः। कामयतेऽभिलषति। लक्षसुप्तौ परस्परं लक्षयित्वा सुप्तौ। त्रपया लज्जया। साध्वसेन भयेन। कामाघ्रातयाऽपि कामाविष्टयाऽपि। रहस्यरक्षणाय गोप्यरक्षणाय। इममर्थं नवमालिकासंगरूपम्। लब्धलक्षो लब्धावकाशः। यथोपपन्नैर्यथोचितैः। मम याक्षिण्याः प्रभावेण

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

नैषम् । एवमिदं वृत्तम् । 'एषा चाहं पितुस्ते पादमूलं प्रत्युपसर्पेयम्' इति प्राञ्जलिं मां भूयोभूयः परिष्वज्य शिरस्युपाघ्राय कपोलयोश्चुम्बित्वा स्नेहविह्वला गतासीत् । अहं च पञ्चबाणवश्यः श्रावस्तीमभ्यवर्तिषि ।

मार्गे च महति निगमे नैगमानां ताम्रचूडयुद्धकोलाहलो महानासीत् । अहं च तत्र संनिहितः किंचिदस्मेषि । संनिधिनिषण्णस्तु मे वृद्धविटः कोऽपि ब्राह्मणः शनकैः स्मितहेतुमपृच्छत् । अब्रवं च--'कथमिव नारिकेलजातेः प्राच्यवाटकुक्कुटस्य प्रतीच्यवाटः पुरुषैरसमीक्ष्य बलाकाजातिस्ताम्रचूडो बलप्रमाणाधिकस्यैवं प्रतिविसृष्टः' इति । सोऽपि तज्ज्ञः 'किमज्ञैरेभिर्व्युत्पादितैः । तूष्णीमास्स्व' इत्युपहस्तिकायास्ताम्बूलं कर्पूरसाहितमुद्धृत्य मह्यं दत्त्वा चित्राः कथा कथयन्क्षणमतिष्ठत् । प्रायुध्यत चातिसंरब्धमनुप्रहारप्रवृत्तस्वपक्षमुक्तकण्ठीरवरवं विहङ्गमद्वयम् । जितश्चासौ प्रतीच्यवाटकुक्कुटः । सोऽपि विटः स्ववाटकुक्कुटविजयहृष्टः, मयि वयोविरुद्धं सख्यमुपेत्य तदहरेव स्वगृहे स्नानभोजनादि कारयित्वोत्तरेद्युः श्रावस्तीं प्रति यान्तं मामनुगम्य 'स्मर्तव्योऽस्मि सत्यर्थे' इति मित्रवद्विसृज्य

---

महिम्ना प्रस्वापितं निद्रितम् । प्रत्यनैषं प्रत्यानीतवत्यस्मि । कपोलयोर्गण्डयोः । स्नेहेन प्रेम्णा विह्वला व्याकुला । पञ्चबाणवश्यः कामपराधीनः सन् । श्रावस्तीं नवमालिका यत्र तारावल्या कथिता तादृशीं नगरीम् । अभ्यवर्तिषि आभिमुखीकृत्य प्रास्थितवान् ।

**मार्गे चेति** । मध्येमार्गमित्यर्थः । निगमे निषद्यायाम् । 'निगमः सुरे । वेदे वणिक्पथे मार्गे' इति महीपः । नैगमानां वणिजाम् । ताम्रचूडयोः कुक्कुटयोर्युद्धेन कोलाहलः कलरवः । 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः । संनिहितः समीपं गतः । अस्मेषि स्मितं कृतवान् । संनिधिनिषण्णः । समीपवर्ती । शनकैः शनैः । स्मितहेतुं हास्यकारणम् । कथमिव केन वा सादृश्यविधया । नारिकेलजातिः बलाकाजातिश्चेति कुक्कुटजातीविशेषौ । 'दीर्घग्रीवः सितवपुर्महाप्राणः स्वन्मनाः । बलाकाजातिरित्युक्तो नालिकेरस्तदन्यजः ॥' इति च तल्लक्षणम् । प्राच्यवाटः प्रतीच्यवाटश्च प्राच्यप्रतीच्यश्रेणीभूतौ । 'वाटः पुमान्पथि श्रेणौ' इति वररुचिः । असमीक्ष्य सम्यग्विचारमकृत्वा । बलं सत्त्वं प्रमाणमाकृतिस्ताभ्यामधिकस्य श्रेष्ठस्य । प्रतिविसृष्टः प्रतिद्वन्द्वितया नियमितः । सोऽपि वृद्धविटः । तज्ज्ञः कुक्कुटजातिभेदज्ञः । व्युत्पादितैः याथार्थ्यमवबोधितैः । तूष्णीं मौनमाश्रित्य । आस्स्व तिष्ठ । उपहस्तिकायास्ताम्बूलभस्त्रायाः । 'पूगाद्यावपनी चर्मभस्त्रिका चोपहस्तिका' इति वैजयन्ती । प्रायुध्यत युद्धमकरोत् । अतिसंरब्धं क्रुद्धम् । अनुप्रहारे कुक्कुटान्तरव्यधने प्रवृत्तो यः कुक्कुटः तस्य स्वपक्षैः स्वजनैः मुक्तः कण्ठीरवस्य सिंहस्येव रवो नादो यथा तथा । विहङ्गमद्वयं पक्षियुगलम् । जितः पराभूतः । सोऽपि मत्पार्श्ववर्तीत्यर्थः । वयसा भिन्नवयसा विरुद्धं विपरीतम् । तदहरेव तस्मिन्नेव दिने । यान्तं गच्छन्तम् । अनुगम्य पश्चादागत्य । अर्थे प्रयोजने सति स्मर्तव्योऽस्मि

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

प्रत्ययासीत्। अहं च गत्वा श्रावस्तीमध्वश्रान्तो बाह्योद्याने लतामण्डपे शयितोऽस्मि। हंसरवप्रबोधितश्चोत्थाय कामपि क्वणितनूपुरमुखराभ्यां चरणाभ्यां मदन्तिकमुपसरन्तीं युवतीमद्राक्षम्। सा त्वागत्य स्वहस्तवर्तिनि चित्रपटे लिखितं मत्सदृशं कमपि पुंरूपं मां च पर्यायेण निर्वर्णयन्ती सविस्मयं सवितर्कं सहर्षं च क्षणमवातिष्ठत। मयापि तत्र चित्रपटे मत्सादृश्यं पश्यता तद्दृष्टिचेष्टितमनाकस्मिकं मन्यमानेन 'ननु सर्वसाधारणोऽयं रमणीयः पुण्यारामभूमिभागः। किमिति चिरस्थितिक्लेशोऽनुभूयते। ननूपवेष्टव्यम्' इत्यभिहिता सा सस्मितम् 'अनुगृहीतास्मि' इति न्यषीदत्। संकथा च देशवार्तानुविद्धा काचनावयोरभूत्। कथासंश्रिता च सा 'देशातिथिरसि। दृश्यन्ते च तेऽध्वश्रान्तानीव गात्राणि। यदि न दोषो मद्गृहेऽद्य विश्रमितुमनुग्रहः क्रियताम्' इत्यशंसत्। अहं च 'अयि मुग्धे, नैष दोषः, गुण एव' इति तदनुमार्गगामी तद्गृहगतो राजार्हेण स्नानभोजनादिनोपचरितः, सुखं निषण्णो रहसि पर्यपृच्छ्ये--महाभाग, दिगन्तराणि भ्रमता कच्चिदस्ति किंचिदद्भुतं भवतोपलब्धम्' इति। ममाभवन्मनसि 'महादिदमाशास्पदम्। एषा खलु निखिलपरिजनसंबाधसंलक्षितायाः सखी राजदारिकायाः। चित्रपटे चास्मिन्नपि तदुपरि विरचितासितवितानं हर्म्यतलम्, तद्गतं च प्रकाम-

---

स्मरणीयोऽहम्। प्रत्ययासीत्परावृत्य गतः। अध्वश्रान्तः मार्गखिन्नः। शयितः कृतशयनः। हंसानां रवेण क्वणितेन प्रबोधितस्त्याजितनिद्रः। क्वणिताभ्यां शब्दं कुर्वद्भ्यां नूपुराभ्यां पादाङ्गदाभ्यां मुखराभ्यां वाचालाभ्याम्। ममान्तिकं निकटम्। उपसरन्तीमागच्छन्तीम्। पुंरूपं पुरुषाकृतिम्। पर्यायेण क्रमेण। निर्वर्णयन्त्यवलोकयन्ती। सविस्मयं साश्चर्यम्। सवितर्कं 'किमयं स एव' इति तर्कसहितम्। सहर्षं 'स एवायम्' इति निश्चयात्सानन्दम्। अवातिष्ठतावस्थिता। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। **मयाऽपीति**। त्यक्तनिद्रेणापि निद्रितेनेव वर्तमानेन। तत्र तत्करधृते। ममैव सादृश्यं प्रतिरूपम्। तस्यास्तरुण्या दृष्टिचेष्टितं दृग्विलासमनाकस्मिकं नाकस्माज्जातं किन्तु मय्यनुरागेण जातमेव मन्यमानेन निश्चिन्वता। ननु हे सुन्दरि। आमन्त्रणार्थ इदमव्ययम्। सर्वसाधारणोऽखिलजनोपभोग्यः। पुण्यश्चारामभूमिभागः उपवनोद्देशः। किमिति किमर्थम्। चिरं स्थितिक्लेशोऽनुपवेशदुःखम्। अभिहिता कथिता। न्यषीददुपविष्टा। संकथा देवगोष्ठी। देशवार्ता लोकसमाचारस्तदनुविद्धा तन्मिश्रिता। देशातिथिर्देशान्तरादागन्तुकः। अध्वश्रान्तानि मार्गखिन्नानि। गात्राण्यवयवाः। विश्रमितुमध्वखेदमपनेतुम्। अशंसत्कथयामास। तदनुमार्गगामी तन्मार्गमनुसृत्य गच्छन्। राजार्हेण राजयोग्येन। निषण्ण उपविष्टः। पर्यपृच्छ्ये पृष्टः। कच्चिदिति प्रश्ने। उपलब्धं दृष्टम्। आशास्पदमाशाबन्धकम्। निखिलपरिजनानां संबाधे समूहमध्ये संलक्षिताया दृष्टायाः। राजदारिकाया राजकुमार्याः। विरचितासितवितानं चित्रितश्वेतोल्लोचकम्।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

विस्तीर्णं शरदभ्रपटलपाण्डुरं शयनम्, तदधिशायिनी च निद्रालीढलोचना ममैवेयं प्रतिकृतिः। अतो नूनमनङ्गेन सापि राजकन्या तावतीं भूमिमारोपिता। यस्यामसह्यमदनज्वरव्यथितोन्मादिता सती सखीनिर्बन्धपृष्टविक्रियानिमित्ता चातुर्येणैतद्रूपनिर्माणेनैव समर्थमुत्तरं दत्तवती। रूपसंवादाच्च संशयादनया पृष्टो भिन्द्यामस्याः संशयं यथानुभवकथनेन' इति जातनिश्चयोऽब्रवम्–'भद्रे, देहि चित्रपटम्' इति। सा त्वर्पितवती मद्धस्ते। पुनस्तमादाय तामपि व्याजसुप्तामुल्लसन्मदनरागविह्वलां वल्लभां तत्रैवाभिलिख्य 'काचिदेवंभूता युवतिरीदृशस्य पुंसः पार्श्वशायिन्यरण्यानीप्रसुप्तेन मयोपलब्धा। किलैष स्वप्नः' इत्यालपं च। हृष्टया तु तया विस्तरतः पृष्टः सर्वमेव वृत्तान्तमकथयम्। असौ च सख्या मन्निमित्तान्यवस्थान्तराण्यवर्णयत्। तदाकर्ण्य च यदि तत्र सख्या मदनुग्रहोन्मुखं मानसम्। गमय कानिचिदहानि। कमपि कन्यापुरे निराशङ्कनिवासकरणमुपायमारचय्यागमिष्यामि' इति कथंचिदेनामभ्युपगमय्य गत्वा तदेव खर्वटं वृद्धविटेन समगंसि। ससंभ्रमं सोऽपि विश्रमय्य तथैव स्नानभोजनादि कारयित्वा रहस्यपृच्छम्–'आर्य, कस्य हेतोरचिरेणैव प्रत्यागतोऽसि'। प्रत्यवादिषमेनम्–'स्थान एवाहमार्येणास्मि पृष्टः। श्रूयताम्। अस्ति हि श्रावस्तीनाम नगरी। तस्याः पतिरपर इव धर्मपुत्रो धर्मवर्धनो नाम राजा। तस्य दुहिता,

---

हर्म्यतलं प्रासादतलम्। प्रकामविस्तीर्णमतिविशालम्। शरदभ्रपटलवच्छरन्मेघजालवत्पाण्डुरं धवलवर्णम्। प्रतिकृतिः सादृश्यम्। नूनमवश्यमनङ्गेन कामेन साऽपि राजकन्या तावतीं भूमिं कार्श्यादिमन्मथावस्थादशके दशमीं शेषयित्वा नवमीपर्यन्तामित्यर्थः। आरोपिता प्रापिता। यस्यां नवमावस्थायां जातायामसह्येन मदनज्वरेण व्यथिता पीडितोन्मादितोन्मत्ततां गता च सती। सखीभिर्निर्बन्धेनाग्रहपुरःसरं पृष्टमनुयुक्तं विक्रियाया मदनविकारस्य निमित्तं यस्या एवंभूता। चातुर्येण निपुणतया। एतद्रूपनिर्माणेन मत्प्रतिरूपचित्रीकरणेन न तु वाचा। समर्थं यथायोग्यम्। रूपसंवादाच्चित्ररूपस्य मद्रूपस्य च परस्परसाम्यात्। यथानुभवकथनेन वास्तवाख्यानेन अस्याः संशयं छिन्द्यां निवारयेयम्। जातनिश्चयः कृतमतिः। **तामपीति**। राजकन्यामपि। व्याजसुप्तां कपटनिद्रिताम्। उल्लसता मदनरागेण विह्वलामाकुलाम्। तत्रैव चित्रपटे तस्मिन्नेव। अरण्यानीप्रसुप्तेन महावने निद्रितेन। 'महारण्यमरण्यानी' इत्यमरः। उपलब्धा विलोकिता। किल परंतु। आलपमकथयम्। असौ राजकन्यासखी। सख्या राजकन्यायाः। मन्निमित्तानि मद्प्राप्तिहेतुकानि। अवस्थान्तराणि नानावस्थाः। मदनुग्रहोन्मुखं ममोपरि प्रसन्नं मानसं चित्तम्। गमय यापय। निराशङ्कं भयरहितं यथा तथा यो निवासस्तस्य कारणं मूलभूतम्। आरचय्य कृत्वा। अभ्युपगमय्याङ्गीकार्य। खर्वटं वणिक्पथम्। समगंसि संमिलितः। विश्रमय्य श्रमपरिहारं कारयित्वा। अचिरेण शीघ्रमेव। स्थाने युक्तमेवेत्यर्थः। 'युक्ते द्वे

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

प्रत्यादेश इव श्रियः, प्राणा इव कुसुमधन्वनः, सौकुमार्यविडम्बितनवमालिका, नवमालिका नाम कन्यका। सा मया समापत्तिदृष्टा कामनाराचपङ्क्तिमिव कटाक्षमालां मम मर्मणि व्यकिरत्। तच्छल्योद्धरणाक्षमश्च धन्वन्तारिसदृशस्त्वदृते नेतरोऽस्ति वैद्य इति प्रत्यागतोऽस्मि। तत्प्रसीद कंचिदुपायमाचरितुम्। अयमहं परिवर्तितस्त्रीवेषस्ते कन्या नाम भवेयम्। अनुगतश्च मया त्वमुपगम्य धर्मासनगतं धर्मवर्धनं वक्ष्यसि--'ममेयमेकैव दुहिता। जातमात्रायां त्वस्यां जनन्यस्याः संस्थिता। माता च पिता च भूत्वाहमेव व्यवर्धयम्। एतदर्थमेव विद्यामयं शुल्कमर्जितुं गतोऽभूदवन्तिनगरीमुज्जायिनीमस्मद्वैवाह्यकुलजः कोऽपि विप्रदारकः। तस्मै चेयमनुमता दातुमितरस्मै न योग्या। तरुणीभूता चेयम्। स च विलम्बितः। तेन तमानीय पाणिमस्या ग्राहयित्वा तस्मिन् न्यस्तभारः संन्यासिष्ये। दुरभिरक्षतया तु दुहितॄणां मुक्तशैशवानाम्, विशेषतश्चामातृकाणाम्, इह देवं मातृपितृस्थानीयं प्रजानामापन्नशरणमागतोऽस्मि। यदि वृद्धं ब्राह्मणमधीतिनमगतिमतिथिं च मामनुग्राह्यपक्षे गणयत्यादिराजचरितधुर्यो देवः, सैषा भवद्भुजतरुच्छायामखण्डितचारित्रा तावदध्यास्तां यावदस्याः

---

साम्प्रतं स्थाने' इत्यमरः। प्रत्यादेशः प्रत्याख्यानम्। 'प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः' इत्यमरः। श्रियो लक्ष्मीदेव्याः। प्राणा असवः। कुसुमधन्वनो मन्मथस्य। सौकुमार्येण मार्दवेन विडम्बिता दूरीकृता नवा नूतना मालिका स्रग्ययैतादृशी। समापत्तिदृष्टा यादृच्छिकसंगत्या विलोकिता। कामनाराचपंक्तिं मदनसायकश्रेणीम्। 'प्रक्ष्वेडनास्तु नाराचाः' इत्यमरः। मर्मणि जीवितस्थाने। 'जीवस्थानं भवेन्मर्म' इति हलायुधः। व्यकिरद्विक्षिप्तवती। तच्छल्योद्धरणे मद्देहान्मदनबाणाग्रसमुन्नयनेऽक्षमोऽनिपुणः। धन्वन्तारिसदृशो धन्वन्तरिसमानात्। त्वदृते त्वां विना। 'अन्यारादितरर्ते--' इति पञ्चमी। परिवर्तितस्त्रीवेषो धृताङ्गनारूपः। कन्या नाम दुहितेव। जातमात्रायामुत्पन्नायाम्। जननी माता। संस्थिता मृता। 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः' इत्यमरः। एतदर्थं कन्यामेनामेवोद्दिश्य। विद्यामयं विद्यारूपम्। शुल्कं जामात्रा देयं वस्तु। 'शुल्कमस्त्री जामात्रा यच्च दीयते' इति कोशः। अर्जितुं संपादयितुम्। विवाहाय योग्यं वैवाह्यं तादृशं यत्कुलं गोत्रं तज्जस्तत्रोत्पन्नः। विप्रदारको ब्राह्मणकुमारः। तरुणीभूता यौवनं प्राप्ता। न्यस्तो निक्षिप्तो भारः कुटुम्बभारो येनैतादृशः सन्। संन्यसिष्ये संन्यासाश्रमं स्वीकरिष्यामि। दुरभिरक्षतया खलजननिबिडिते काले देशे च रक्षयितुमशक्ततया। मुक्तशैशवानां तरुणीनामित्यर्थः। अमातृकाणां जननीरहितानाम्। देवं राजानम्। आपन्नानां विपदं गतानां शरणं रक्षयितारम्। अधीतिनं विहितवेदाभ्यासम्। अगतिं निरवलम्बम्। अनुग्राह्यपक्षे दयनीयकोटौ। आदिराजो मनुस्तच्चारितस्य धुर्यो धूर्वहः। 'धुरो यड्ढकौ' इति यत्। अखण्डितचारित्राऽकलङ्कितकन्याधर्मा।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

घाणिग्राहकमानयेयम्' इति। स एवमुक्तो नियतमभिमनायमानः स्वदुहितृसंनिधौ मां वासयिष्यति। गतस्तु भवानागामिनि मासि फाल्गुने फल्गुनीपूत्तरासु राजान्तःपुरजनस्य तीर्थयात्रोत्सवो भविष्यति। तीर्थस्थानात्प्राच्यां दिशि गोरुतान्तरमतिक्रम्य, वानीरवलयमध्यवर्तिनि कार्त्तिकेयगृहे करतलगतेन शुक्लाम्बरयुगलेन स्थास्यसि। स खल्वहमनभिशङ्क एवैतावन्तं कालं सहाभिविहृत्य राजकन्यया भूयस्तस्मिन्नुत्सवे गङ्गाम्भसि विहरन्विहारव्याकुले कन्यकासमाजे मग्नोपसृतस्त्वदभ्याश एवोन्मङ्क्ष्यामि। पुनस्त्वदुपहृते वाससी परिधायापनीतदारिकावेषो जामाता नाम भूत्वा त्वामेवानुगच्छेयम्। नृपात्मजा तु मामितस्ततोऽन्विष्यानासादयन्ती 'तया विना न भोक्ष्ये' इति रुदन्त्येवावरोधने स्थास्यति। तन्मूले च महति कोलाहले, क्रन्दत्सु परिजनेषु, रुदत्सु सखीजनेषु, शोचत्सु पौरजनेषु, किंकर्तव्यतामूढे सामात्ये पार्थिवे, त्वमास्थानीमेत्य मां स्थापयित्वा वक्ष्यसि—'देव, स एष मे जामाता तवार्हति श्रीभुजाराधनम्। अधीती चतुर्ष्वाम्नायेषु, गृहीती षट्स्वङ्गेषु, आन्वीक्षिकीविचक्षणः, चतुःषष्टि-

---

अध्यास्तामाश्रित्य निवसतु। 'अधिशीङ्स्थासां कर्म' इति कर्मता। पाणिग्राहकं पाणिपीडकत्वेनानुमतम्'। स राजा। अभिमनायमानोऽनुमन्यमानः। फल्गुनीनक्षत्रेण युक्ता पौर्णमासी फाल्गुनी। 'नक्षत्रेण युक्तः कालः' इत्यण्। सा पौर्णमास्यस्मिन्मासे इति फाल्गुनो मासस्तस्मिन् 'साऽस्मिन्पौर्णमासीति' इत्यण्। गोरुतान्तरं यत्र स्थिताया आक्रोशन्त्या गोरुतं शब्दः श्रूयते तावद्दूरम्। वानीरवलयस्य वेतसाख्यतृणविशेषमण्डलस्य मध्यवर्तिनि। कार्त्तिकेयगृहे सुब्रह्मण्यायतने। कृत्तिकाणामपत्यं कार्त्तिकेयः। 'स्त्रीभ्यो ढक्' इति ढक्। करतलगतेन हस्तविधृतेन। शुक्लाम्बरयुगलेन धौतवस्त्रयुग्मेन। अनभिशंको निराशंकः। अभिविहृत्य क्रीडित्वा। गङ्गाम्भसि भागीरथीतोये। विहारव्याकुले जलक्रीडातत्परे। मग्नोपसृतो मज्जित्वोपसृतः। तवाभ्याशे समीपे। उन्मङ्क्ष्यामि जलान्निर्गतो भविष्यामि। त्वयोपहृते आनीते वाससी परिधानीये। अपनीतदारिकावेषस्त्यक्तकन्यानेपथ्यः। जामाता नाम कन्यापतिरिव। **नृपात्मजेति।** राजकन्या नवमालिका। इतस्ततो नानादिक्षु। अन्विष्य गवेषयित्वा। अनासादयन्त्यनाप्नुवन्ती। भोक्ष्ये भोजनं करिष्यामि। रुदन्ती क्रन्दन्ती। अवरोधनेऽन्तःपुरे। तन्मूले राजकुमारी वयस्याऽदर्शनानिमित्ते। कोलाहले कलकलध्वनौ। किंकर्तव्यतामूढे इतिकर्तव्यताज्ञानरहिते। सामात्ये मन्त्रिसहिते पार्थिवे राजनि। आस्थानीं सभामण्डपम्। 'सभासमितिसंसदः। आस्थानी क्लीबमास्थानम्' इत्यमरः। देव हे राजन्! जामाता कन्यापतिः। अधीती कृताध्ययनः। 'इष्टादिभ्यश्च' इति कर्तरीनिप्रत्ययः। आम्नायेषु वेदेषु। 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति सप्तमी। एवमेव 'गृहीती षट्स्वङ्गेषु' इत्यत्राप्यूह्यम्। अङ्गानि च—'शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा। कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः' इत्युक्तात्मकानि।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कलागमप्रयोगचतुरः, विशेषेण गजरथतुरङ्गतंत्रवित्, इष्वसनास्त्रकर्मणि गदायुद्धे च निरुपमः, पुराणेतिहासकुशलः, कर्ता काव्यनाटकाख्यायिकानाम्, वेत्ता सोपनिषदोऽर्थशास्त्रस्य, निर्मत्सरो गुणेषु, विश्रम्भी सुहृत्सु, शक्तः, संविभागशीलः, श्रुतधरः, गतस्मयश्च । नास्य दोषमणीयांसमप्युपलभे । न च गुणेष्वविद्यमानम् । तन्मादृशस्य ब्राह्मणमात्रस्य न लभ्य एव सम्बन्धी । दुहितरमस्मै समर्प्य वार्धकोचितमन्त्यमाश्रमं संक्रमेयम्, यदि देवः साधु मन्यते' इति । स इदमाकर्ण्य वैवर्ण्याक्रान्तवक्त्रः परमुपतो वैलक्ष्यमारप्स्यतेऽनुनेतुमनित्यतादिसंकीर्तनेनात्रभवन्तं मंत्रिभिः सह । त्वं तु तेषामदत्तश्रोत्रो मुक्तकण्ठं रुदित्वा चिरस्य बाष्पाकुण्ठकण्ठः काष्ठान्याहृत्याग्निं संधुक्ष्य राजमन्दिरद्वारे चिताधिरोहणायोपक्रमिष्यसे । स तावदेव त्वत्पादयोर्निपत्य सामात्यो नरपतिरनूनैरर्थैस्त्वामुपच्छन्द्य दुहितरं मह्यं दत्त्वा मद्योग्यतासमाराधितः समस्तमेव राज्यभारं

---

आन्वीक्षिक्यां तर्कशास्त्रे विचक्षणो निष्णातः । तन्त्रविच्छास्त्रावित् । इष्वसनास्त्रकर्माणि धनुषो बाणमोक्षे । पुराणान्यष्टादश मात्स्यादीनि । 'सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम्' इति लक्षणं तेषाम् । 'इतिहासः पुरावृत्तम्' इत्यमरः । स च भारतादिः । काव्यं रघुवंशादि ' अदोषौ सगुणौ सालंकारौ शब्दार्थौ काव्यम् ' इति । नाटकं शाकुन्तलादि ।

तल्लक्षणं च साहित्यदर्पणे—

" नाटकं ख्यातवृत्तं स्यात्पञ्चसंधिसमन्वितम् । विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥
सुखदुःखसमुद्भूतिनानारससमान्वितम् । पञ्चाधिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् । दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा । अङ्गमन्ये रसाः सर्वे कार्यं निर्वहणेऽद्भुतम् ॥
चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः।गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम्॥" इति॥

आख्यायिका ' नोवल ' पदवाच्यः प्रबन्धविशेषः कादम्बर्यादिरूपः । ' प्रस्तुतानाकुलश्रव्यशब्दार्थपदवृत्तिना । गद्येन युक्तोदात्तार्था सोच्छ्वासाऽऽख्यायिका मता । ' इति तल्लक्षणम् । सोपनिषदोऽर्थशास्त्रस्य कर्मकाण्डज्ञानकाण्डयोरित्यर्थः । विस्रम्भी विश्वासयुक्तः । शक्तः प्रियवादी । ' शक्तः प्रियंवदे प्रोक्तः ' इति हलायुधः । श्रुतधारः सकृच्छ्रवणमात्रेण तद्धारयतीति तादृशः । धारणाशक्तियुक्तश्च । गतस्मयो वीतगर्वः । अणीयांसं स्वल्पतरम् । ब्राह्मणमात्रस्य साधारणविप्रस्य । संबन्धी कन्याग्रहणरूपसंबन्धकर्ता । दुहितरं कन्याम् । वार्धकोचितं वृद्धावस्थायां योग्यम् । अन्त्यं चरमं संन्यासमिति भावः । संक्रमेयमाश्रयेयम् । वैवर्ण्येन मालिन्येनाक्रान्तवक्त्रः । वैलक्ष्यं लज्जाम् । ' विलक्षो लज्जयाऽन्विते ' इति हैमः । अनुनेतुं समाधातुम् । अदत्तश्रोत्रोऽदत्तकर्णः । चिरस्य चिरम् । षष्ठीप्रतिरूपकमव्ययमिदम् । बाष्पेणाश्रुणा कुण्ठो निरुद्धः कण्ठो यस्यैतादृशः । काष्ठान्याहृत्य दारूणि संचित्य । संधुक्ष्य वर्धयित्वा । चिताधिरोहणाय चितिमारोढुम् । उपक्रमिष्यसे प्रारप्स्यसे । स राजा । तावदेव तत्क्षणादेव । अनूनैः सम्पूर्णैः । उपच्छन्द्य सान्त्वयित्वा ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मयि समर्पयिष्यति । सोऽयमभ्युपायोऽनुष्ठेयो यदि तुभ्यं रोचते' इति । सोऽपि पटुर्विटानामग्रणीरसकृदभ्यस्तकपटप्रपञ्चः पाञ्चालशर्मा यथोक्तमभ्यधिकं च निपुणमुपक्रान्तवान् । आसीच्च मम समीहितानामहीनकालसिद्धिः । अन्वभवं च मधुकर इव नवमालिकामार्द्रसुमनसम् । अस्य राज्ञः सिंहवर्मणः साहाय्यदानं सुहृत्संकेतभूमिगमनमित्युभयमपेक्ष्य सर्वबलसंदोहेन चम्पामिमामुपगतो दैवाद्देवदर्शनसुखमनुभवामि' इति ।

श्रुत्वैतत्प्रमतिचरितं स्मितमुकुलितमुखनलिनः विलासप्रायमूर्जितम्, मृदुप्रायं चेष्टितम्, इष्ट एष मार्गः प्रज्ञावताम् । 'अथेदानीमत्रभवान्प्रविशतु' इति मित्रगुप्तमैक्षत क्षितीशपुत्रः ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते प्रमतिचरितं नाम पञ्चम उच्छ्वासः ॥ ५ ॥

## षष्ठोच्छ्वासः ॥ ६ ॥

सोऽप्याचचक्षे—देव, सोऽहमपि सुहृत्साधारणभ्रमणकारणः सुह्मेषु दामलिप्ताह्वयस्य नगरस्य बाह्योद्याने महान्तमुत्सवसमाजमालोकयम् । तत्र क्वचिदतिमुक्तकलतामण्डपे कमपि वीणावादेनात्मानं विनोदयन्तमुत्कण्ठितं युवानमद्रा-

---

मम योग्यतया । समाराधितः प्रसन्नः सन् । तुभ्यं रोचते तव प्रीतिकरो भवति । 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानता । पटुः कार्यनिपुणः । अग्रणीरग्रेसरः । असकृन्मुहुरभ्यस्ताः परिचिताः कपटप्रपञ्चा मायाप्रपञ्चा येन तादृशः । निपुणं चातुर्ययुक्तमुपक्रान्तवानुपायमाचचार । समीहितानां मनोरथानामहीनकालेन नातिचिरेण कालेन सिद्धिः । मधुकरः षट्पद इव । नवमालिकां नूतनस्रजं तन्नामराजकन्यां च, आर्द्रसुमनसं सरसकुसुमां संजातार्तवां च । साहाय्यदानं साहाय्याचरणं सुहृदां मित्राणां भवदादीनां संकेतभूमेः संकेतितस्थानस्य गमनं प्राप्तिश्च । उभयमपेक्ष्य कार्यद्वयमुद्दिश्य । सर्वबलसंदोहेन समस्तसैन्यसमूहेन । उपगतः प्राप्तः ॥

**श्रुत्वेति** । स्मितेन मन्दहासेन मुकुलितं मुखनलिनमाननकमलं यस्य तादृशः । विलासप्रायं विलासप्रचुरम् । प्रज्ञावतां बुद्धिमताम् । अत्र स्वार्थवर्णनकर्मणि । क्षितीशपुत्रो राजकुमारो राजवाहनः ॥

इति श्रीदशकुमारचरितव्याख्याने मनोरमाख्याने पञ्चम उच्छ्वासः समाप्तः ॥ ५ ॥

### अथ षष्ठ उच्छ्वासः ॥ ६ ॥

प्रस्तौत्यधुनाऽऽत्मचरित्रं मित्रगुप्तः—**देवेति** । सुहृत्साधारणं तत्समानं भवदन्वेषरूपं भ्रमणकारणं देशाटननिमित्तं यस्यैवंभूतः । सुह्मेषु तदाख्यदेशेषु । दामलिप्ताह्वयस्य तन्नामकस्य । 'अथाह्वयः । आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः । बाह्योद्याने बहिर्वर्तिन्युपवने । 'पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्' इत्यमरः । उत्सवसमाजमुत्सवार्थं संमिलितं जनसमुदायम् । आलोकयं विलोकितवान् । तत्रोपवने । क्वचित्कस्मिंश्चिदेकदेशे । अतिमुक्तकलताः पुण्ड्रकवल्ल्यः । 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता' इत्यमरः । तासां

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

क्षम् । अप्राक्षं च–'भद्र, को नामायमुत्सवः, किमर्थं वा समारब्धः, केन वा निमित्तेनोत्सवमनादृत्यैकान्ते भवानुत्कण्ठित इव परिवादिनीद्वितीयस्तिष्ठति' इति । सोऽभ्यधत्त–'सौम्य, सुह्मपतिस्तुङ्गधन्वनामानपत्यः प्रार्थितवानमुष्मिन्नायतने विस्मृतविन्ध्यवासरागं वसन्त्या विन्ध्यवासिन्याः पादमूलादपत्यद्वयम्' । अनया च किलास्मै प्रतिशायिताय स्वप्ने समादिष्टम्–' समुत्पत्स्यते तवैकः पुत्रः, जनिष्यते चैका दुहिता । स तु तस्याः पाणिग्राहकमनुजीविष्यति। सा तु सप्तमाद्वर्षादारभ्यापरिणयनात्प्रतिमासं कृत्तिकासु कन्दुकनृत्येन गुणवद्भर्तृलाभाय मां समाराधयतु । यं चाभिलषेत्सामुष्मै देया । स चोत्सवः कन्दुकोत्सवनामास्तु' इति । ततोऽल्पीयसा कालेन राज्ञः प्रियमहिषी मेदिनी नामैकं पुत्रमसूत । समुत्पन्ना चैका दुहिता । साद्य नाम कन्या कन्दुकावती सोमापीडां देवीं कन्दुकविहारेणाराधयिष्यति । तस्यास्तु सखी चन्द्रसेना नाम धात्रेयिका मम प्रियासीत् । सा चैषु दिवसेषु राजपुत्रेण भीमधन्वना बलवदनुरुद्धा । तदहमुत्कण्ठितो मन्मथशरशल्यदुःखोद्विग्नचेताः कलेन वीणारवेणात्मानं किंचिदाश्वासयन्विविक्तमध्यासे' इति ।

---

मण्डपे । वीणावादेन वल्लकीवादनेन । विनोदयन्तमाह्लादयन्तम् । 'उत्काण्ठितं चिन्ताग्रस्तम् । 'उत्कण्ठितश्चिन्तयानः' इति वैजयन्ती । अद्राक्षं पश्यामि स्म । अप्राक्षमनुयुक्तवान् । उत्सवो महः । 'मह उद्धव उत्सवः' इत्यमरः । किमर्थं किं प्रयोजनमुद्दिश्य । समारब्धः प्रस्तुतः । उत्सवमनादृत्य तत्रोपेक्षां कृत्वा । परिवादिनी वीणाभेदः । 'विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः । तद्द्वितीयस्तद्युक्तः । स उपवनवर्ती पुरुषः । अनपत्यः पुत्रेण कन्यया वा रहितः । आयतने देवगृहे । विस्मृतो विन्ध्यवासे विन्ध्याचलनिवासे रागः प्रीतिर्यस्मिन्कर्मणि तद्यथा तथा । विन्ध्यवासिन्याः काल्याः । अनया देव्या । अस्मै तुङ्गधन्वने । प्रतिशयिताय निद्रिताय । समादिष्टं कथितम् । समुत्पत्स्यते उत्पन्नो भविष्यति । दुहिता कन्या । स तु भवत्पुत्रस्तु । तस्या भवत्कन्यायाः । पाणिग्राहकं भर्तारमनुजीविष्यति आश्रित्य जीविष्यति । आपरिणयनाद्विवाहपर्यन्तम् । प्रतिमासं मासेमासे । कृत्तिकासु तन्नामकनक्षत्रेषु । कन्दुकनृत्येन गेन्दुकक्रीडया । गुणवतो गुणयुक्तस्य भर्तुर्लाभाय प्राप्तये । समाराधयतु पूजयतु । **यं चेति** । अभिलषेत्स्वपतित्वेन कामयेत । सा भवत्कन्या । अमुष्मै कन्याभिलषितपुरुषाय । कन्दुकोत्सवनामा तदाख्यया प्रसिद्धः । अल्पीयसा स्वल्पतरेण । असूत प्रसूतवती । कन्दुकावतीत्यत्र 'मतौ बह्वचोऽनजिरादीनाम्' इति दीर्घः । सोमापीडां चन्द्रशेखराम् । कन्दुकविहारेण तत्क्रीडया । सखी प्रियवयस्या । धात्रेयिकोपमातृस्थानीया । प्रिया भार्यात्वेन स्वीकर्तुमीष्टा । सा च चन्द्रसेना । बलवद्धठात् । अनुरुद्धा मत्सङ्गमान्निवारिता । उत्कण्ठिताश्चिन्ताविष्टः । मन्मथशरशल्यदुःखेन कामबाणाग्रपीडयोद्विग्नं त्रस्तं चेतश्चित्तं यस्यैतादृशः । कलेनाव्यक्तमधुरेण । वीणारवेण वल्लकीनादेन । आश्वासयन्विनोदयन् । विविक्तमेकान्तप्रदेशम् । अध्यासे अधितिष्ठामि । 'अधिशीङ्स्थासां कर्म' इति विविक्तस्य कर्मता ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

अस्मिन्नेव च क्षणे किमपि नूपुरक्वणितमुपातिष्ठत्। आगता च काचिदङ्गना दृष्ट्वैव स एनामुत्फुल्लदृष्टिरुत्थायोपगूढकण्ठश्च तया तत्रैवोपाविशत्। अशंसच्च—'सैषा मे प्राणसमा, यद्विरहो दहन इव दहति माम्। इदं च मे जीवितमपहरता राजपुत्रेण मृत्युनेव निरुष्मतां नीतः। न च शक्ष्यामि राजसूनुरित्यमुष्मिन् पापमाचरितुम्। अतोऽनयात्मानं सुदृष्टं कारयित्वा त्यक्ष्यामि निष्प्रतिक्रियान् प्राणान्' इति। सा तु पर्यश्रुमुखी समभ्यधात्—'मा स्म नाथ, मत्कृतेऽध्यवस्यः साहसम्। यस्त्वमुत्तमात्सार्थवाहादर्थदासादुत्पद्य कोशदास इति गुरुभिरभिहितनामधेयः पुनर्मदत्यासङ्गाद्वेशदास इति द्विषद्भिः प्रख्यापितोऽसि, तस्मिंस्त्वय्युपरते यद्यहं जीवेयं नृशंसो वेश इति समर्थयेयं लोकवादम्। अतोऽद्यैव नय मामीप्सितं देशम्' इति। स तु मामभ्यधत्त—'भद्र, भवद्दृष्टेषु राष्ट्रेषु कतमत्समृद्धं संपन्नसस्यं सत्पुरुषभूयिष्ठं च' इति। तमहमीषद्विहस्याब्रवम्—'भद्र, विस्तीर्णेयमर्णवाम्बरा। न पर्यन्तोऽस्ति स्थानस्थानेषु रम्याणां जनपदानाम्। अपितु न चेदिह युवयोः सुखनिवासकारणं कमप्युपायमुत्पादयितुं शक्नुयाम्। ततोऽहमेव भवेयमध्वदर्शी'। तावतोदैरत रणितानि मणिनूपुराणाम्। अथासौ

---

**अस्मिन्नेवेति**। पूर्वोक्तप्रकारेण भाषणावसरे एव। नूपुरक्वणितं पादकटकशब्दितम्। 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः। उपातिष्ठत्समीपे उत्पन्नमभूत्। अङ्गना योषित्। स पूर्वोक्तोपवनवर्ती पुरुषः। उत्फुल्लदृष्टिर्विकसितनयनः। उपगूढकण्ठः श्लिष्टकण्ठः। अशंसत्कथितवान्। प्राणसमा प्राणतुल्या। यस्या विरहः वियोगः। दहनोऽग्निरिव। 'हिरण्यरेता हुतभुग्दहनो हव्यवाहनः' इत्यमरः। दहति भस्मीकरोति। इदं च मे जीवितं प्राणभूतामनां चन्द्रसेनाम्। अपहरता निरुन्धानेन। निरुष्मतां निस्तेजस्त्वम्। शक्ष्यामि समर्थोऽस्मि। राज्ञः सूनुः पुत्र इति हेतोः। अमुष्मिन्भीमधन्वनि राजपुत्रे। पापं दुष्कृत्यमाचरितुं विधातुम्। सुदृष्टं सम्यगवलोकितम्। निष्प्रतिक्रियान्प्रतीकाररहितान्। **सा त्विति**। चन्द्रसेना। पर्यश्रुमुखी अस्रव्याप्तानना। समभ्यधादुवाच। मत्कृते मामुद्दिश्य। साहसं कठोरं कर्म। मा स्माध्यवस्यो मा कुरु। अध्यवपूर्वात् 'षो अन्तकर्मणि' इति धातोः 'स्मोत्तरे लङ् च' इति लङ्। सार्थवाहाद्वैश्यश्रेष्ठात्। उत्पद्योत्पन्नो भूत्वा। अभिहितनामधेयः कृतनामा। मदत्यासङ्गात् मय्यतिप्रीतिकरणात्। वेशस्य गणिकागृहस्य दासो वेशदासः। द्विषद्भिस्त्वद्वैरिभिः। प्रख्यापितः प्रसिद्धीकृतः। उपरते मृते। नृशंसः क्रूरो वेशो गणिकाजनः। समर्थयेयं सार्थकं कुर्याम्। लोकवादं जनभाषणम्। नय प्रापयस्व। भवता दृष्टेषु विलोकितेषु। राष्ट्रेषु देशेषु। सत्पुरुषभूयिष्ठं साधुजनबहुलम्। तं वेशदासम्। विहस्य मन्दहास्यं विधाय। अर्णवाम्बराऽवनिः। पर्यन्तः शून्यता। स्थानस्थानेषु पदेपद इत्यर्थः। रम्याणां मनोहराणाम्। इह सुह्मदेशे। सुखेन यो निवासस्तस्य कारणम्। न शक्नुयां चेत् यदि समर्थो नास्मि। ततस्तर्हि। अध्वदर्शी मार्गदर्शकः। तावता तस्मिन् समये इत्यर्थः। उदैरतोत्पन्नान्यभूवन्। 'ईर गतौ कम्पने च' इति जौहोत्यादिकाद्धातोर्लङि

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

जातसंभ्रमा 'प्राप्तैवेयं भर्तृदारिका कन्दुकावती कन्दुकक्रीडितेन देवीं विन्ध्यवासिनीमाराधयितुम् । अनिषिद्धदर्शना चेयमस्मिन्कन्दुकोत्सवे । सफलमस्तु युष्मच्चक्षुः । आगच्छतं द्रष्टुम् । अहमस्याः सकाशवर्तिनी भवेयम्' इत्ययासीत् । तामन्वयाव चावाम् । महति रत्नरङ्गपीठे स्थितां प्रथमं ताम्रोष्ठीमपश्यम् । अतिष्ठच्च सा सद्य एव मम हृदये । न मयान्येन वान्तराले दृष्टा । चित्रीयाविष्टचित्तश्चाचिन्तयम्—'किमियं लक्ष्मीः । नहि नहि । तस्याः किल हस्ते विन्यस्तं कमलम्, अस्यास्तु हस्त एव कमलम् । अभुक्तपूर्वा चासौ पुरातनेन पुंसा पूर्वराजैश्च, अस्याः पुनरनवद्यमयातयामं च यौवनम्' इति चिन्तयत्येव मायि, सानघसर्वगात्री व्यत्यस्तहस्तपल्लवाग्रस्पृष्टभूमिरालोलनीलकुटिलालका सविभ्रमं भगवतीमभिवन्द्य कन्दुकममन्दरागरूषिताक्षमनङ्गमिवालम्बत । लीलाशिथिलं च भूमौ मुक्तवती । मन्दोत्थितं च किंचित्कुञ्चितांगुष्ठेन प्रसृतकोमलांगुलिना

---

प्रथमबहुवचनम् । रणितानि रवाः । मणिनूपुराणां रत्नमञ्जीराणाम् । **अथेति** । नूपुररवाकर्णनानन्तरम् । असौ चन्द्रसेना । प्राप्तैवागतैव । भर्तृदारिका राजकन्या । कन्दुकक्रीडितेन कन्दुकविहारेण । अनिषिद्धं कन्यानां पुन्दर्शनायोग्यत्वेऽपि देवीसंनिधौ केनाप्यनिवारितं दर्शनं यस्या एवम्भूता । सफलं प्रयोजनसहितं युष्माकं चक्षुर्लोचनम् । आगच्छतं द्रष्टुं कन्यादर्शनार्थमायातम् । अस्याः कन्दुकावत्याः सकाशवर्तिनी निकटस्थायिनी । अयासीद्गता । तां चन्द्रसेनां कन्दुकावतीं वा । अन्वयावानुगतौ । आवामहं मन्त्रगुप्तः स च कोशदासः । रत्नरङ्गपीठे मणिमये कन्दुकनृत्यस्थाने । प्रथममादौ । ताम्रोष्ठीं ताम्रौ रक्तवर्णौ ओष्ठौ यस्या एवंभूतां कन्दुकावतीम् । 'नासिकोदरौष्ठ—' इति ङीष् । अपश्यं विलोकितवान् । अतिष्ठदारुह्य स्थिता । सद्यो दर्शनकाल एव । अन्तराले मध्ये । चित्रीयाविष्टचित्तः विस्मयाक्रान्तहृदयः । 'चित्रीया विस्मयोऽद्भुतम्' इत्यमरः । **किमियं लक्ष्मीः । नहि नहीति** । अत्र चाक्षेपालंकारः । 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्' इति हि तल्लक्षणमुक्तं चन्द्रालोके । तस्या लक्ष्म्याः । विन्यस्तं निहितम् । कमलं पङ्कजम् । अभुक्तपूर्वा पूर्वमननुभूता । पुरातनेन पुराणेन पुंसा विष्णुना । पूर्वराजैर्मन्वादिभिः । 'राजाहःसखिभ्यष्टच्' इति समासान्तष्टच् । अनवद्यं निर्दोषम् । अयातयामं सरसम् । 'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्' इति निघण्टुः । सा कन्दुकावती । अनघानि निर्दोषाणि सर्वाणि गात्राण्यङ्गानि यस्या एवंविधा । 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीष् । व्यत्यस्ताभ्यां विनिर्मिताभ्यां हस्तपल्लवयोः करकिसलययोरग्राभ्यामंगुलिभ्यामिति भावः । स्पृष्टा भूमिर्यया तादृशी । आलोला ईषत्कम्प्रा नीलाः कृष्णवर्णाः कुटिला वक्रीभूताश्चालकाश्चूर्णकुन्तला यस्यास्सा । सविभ्रमं सविलासम् । अभिवन्द्य नमस्कृत्य । अमन्देन सान्द्रेण रागेण प्रीत्या रूषिताक्षं ताम्रविलोचनमनङ्गं कामदेवमिव । आलम्बत क्रीडार्थमुद्धृतवती । लीलया खेलया शिथिलं गलितम् । मुक्तवती विक्षिप्तवती । मन्दोत्थितं किंचिदुद्गतम् । कुञ्चितां-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पाणिपल्लवेन समाहत्य हस्तपृष्ठेन चोन्नीय, चटुलदृष्टिलाञ्छितं स्तबकमिव भ्रमरमालानुविद्धमवपतन्तमाकाश एवाग्रहीत् । अमुञ्चच्च । मध्यविलम्बितद्रुतलये मृदुमृदु च प्रहरन्ती तत्क्षणं चूर्णपदमदर्शयत् । प्रशान्तं च तं निर्दयप्रहारैरुदपातयत् । विपर्ययेण च प्राशमयत् । पक्षमृज्वागतं च वामदक्षिणाभ्यां कराभ्यां पर्यायेणाभिघ्नती शकुन्तमिवोदस्थापयत् । दूरोत्थितं च प्रपतन्तमाहृत्य गीतमार्गमारचयत् । प्रतिदिशं च गमयित्वा प्रत्यागमयत् । एवमनेककरणमधुरं विहरन्ती रङ्गगतस्य रक्तचेतसो जनस्य प्रतिक्षणमुच्चावचाः प्रशंसावाचः प्रतिगृह्णती, प्रतिक्षणारूढविभ्रमं कोशदासमंसेऽवलम्ब्य कण्टकितगण्डमुत्फुल्लेक्षणं च मन्मथाभिमुखीभूय तिष्ठति तत्प्रथमावतीर्णकन्दर्पकारितकटाक्षदृष्टिस्तदनुमार्गविलसिततलीलाञ्चितभ्रूलता, श्वासानिलवेगान्दोलितैर्दन्तच्छदरश्मिजालैर्लीलापल्लवैरिव मुखकमलपरिमलग्रहणलोलानलिनस्ताडयन्ती, मण्डलभ्रमणेषु कन्दुकस्याति-

---

गुष्ठेन वक्रितांगुष्ठेन । प्रसृता विस्तृताः कोमला मृदुलाश्चांगुलयो यस्यैवंविधेन । पाणिपल्लवेन करकिसलयेन । समाहत्य पीडयित्वा । उन्नीयोत्क्षिप्य । चटुलानां केलिदर्शनलोलानां दृष्टिभिर्नयनैर्लाञ्छितं सस्पृहं वीक्षितम् । स्तबकं सुमनोगुच्छम् । भ्रमरमालानुविद्धं मधुकरश्रेणीपरिगतम् । अवपतन्तं नीचः पतन्तम् । अग्रहीद्गृहीतवती । अमुञ्चदूर्ध्वं क्षिप्तवती । मध्यः साधारणः, विलम्बितोऽतिमन्दः, द्रुतोऽतिशीघ्रश्च लयः पतनं यस्यैवंविधे सति कन्दुके । मृदुमृदु मन्दमन्दम् । प्रहरन्ती हस्तेन ताडयन्ती । चूर्णपदं कन्दुकक्रीडाविशेषम् । 'गत्यागत्योरानुलोम्यात् यन्न्यूनाधिक्यक्षेपणं तच्चूर्णं पदम्' । इति कन्दुकतन्त्रे । अदर्शतप्रदर्शयामास । प्रशान्तमुद्गमनादुपरतम् । निर्दयप्रहारैः कठिनताडनैः । उदपातयदूर्ध्वपतितमकरोत् । पर्यायेण क्रमेण । अभिघ्नती प्रहरन्ती । शकुन्तं पक्षिणम् । 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः । उदस्थापयदुत्पतितमकरोत् । आहृत्य गृहीत्वा । गीतमार्गम् 'दशपदचङ्क्रमणं गीतमार्गं विदुः' इति कन्दुकतन्त्रे । प्रत्यागमयत्प्रतिनिवृत्तमकरोत् । एवं पूर्वोक्तविधयाऽनेककरणैर्नानाचेष्टितैः मधुरं मनोरमं यथा तथा । विहरन्ती क्रीडन्ती । रङ्गगतस्य प्रेक्षास्थानवर्तिनः । रक्तचेतसो दर्शनासक्तमनसः । उच्चावचा नानाप्रकाराः । प्रशंसावाचः स्तुतिवाक्यानि । प्रतिक्षणं क्षणेक्षणे आरूढविभ्रमं जातविस्मयं यथा तथा । अंसे स्कन्धदेशे । अवलम्ब्य गृहीत्वा । तत्प्रथमावतीर्णस्तदानीमेवादौ सञ्जातः कन्दर्पः कामः 'कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः' इत्यमरः । तेन कारितोत्पादिता कटाक्षदृष्टिरपाङ्गदर्शनं यस्याः सा । तस्य कन्दुकस्यानुमार्गं मार्गमनुसृत्य विलसितलीलया खेलाविलासेनाञ्चिते कुटिलीभूते भ्रूलते यस्याः सा । श्वासानिलस्य मुखमारुतस्य वेगेन जवेनान्दोलितैर्दोलायितैः । दन्तच्छदरश्मिजालैरधरकिरणनिवहैः । मुखकमलस्याननपद्मस्य परिमलग्रहणे सौरभादाने लोलान्सतृष्णान् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

शीघ्रप्रचारतया विशन्तीव मद्दर्शनलज्जया पुष्पमयं पञ्जरम्, पञ्चबिन्दुप्रसृतेषु पञ्चापि पञ्चबाणबाणान्युगपदिवाभिपततस्त्रासेनावघट्टयन्ती, गोमूत्रिकाप्रचारेषु घनदर्शितरागविभ्रमा विद्युल्लतामिव विडम्बयन्ती, भूषणमणिरणितदत्तलयसंवादिपादचारम्, अपदेशस्मितप्रभानिषिक्तबिम्बाधरम्, अंसस्रंसितप्रतिसमाहिताशिखण्डभारम्, समाघट्टितक्वणितरत्नमेखलागुणम्, अञ्चितोत्थितपृथुनितम्बविलम्बिताविचलदंशुकोज्ज्वलम्, आकुञ्चितप्रसृतवेल्लितभुजलताभिहतललितकन्दुकम्, आवार्जितबाहुपाशम्, उपरिपारिवर्तितत्रिकाविलग्नलोलकुन्तलम्, अवगलितकर्णपूरकनकपत्रप्रातिसमाधानशीघ्रतानतिक्रमितप्रकृतक्रीडनम्, असकृदु-

---

'लोलश्चलसतृष्णयोः' इत्यमरः। अलिनः षट्पदान्। 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः' इत्यमरः। ताडयन्ती निवारणाय प्रहरन्ती। अतिशीघ्रप्रचारतयाऽऽशुगामितया। विशन्तीव पञ्जरं मञ्जूषायां निलीयमानेव। मम दर्शनादवलोकनाल्लज्जया ह्रिया। पुष्पमयं कुसुमप्रचुरम्। पञ्चबिन्दुप्रसृतेषु 'पञ्चावर्तप्रहारस्तु पञ्चबिन्दुरुदाहृतः' इति कन्दुकतन्त्रोक्तकन्दुकपञ्चकसाध्यक्रीडाविशेषेषु। पञ्चापि 'अरविन्दमशोकं च चूतं च नवमल्लिका। नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः' इत्युक्तान्पञ्चसंख्याकानपि। पञ्चबाणस्य कामदेवस्य बाणान्सायकान्। युगपदेककालमेव। अभिपततः सम्मुखमागच्छतः। त्रासेनोद्वेगेनावघट्टयन्ती प्रहृत्य दूरीकुर्वती। गोमूत्रिकाप्रचारेषु 'गोमूत्रिकेति विद्वाद्भिश्चारः शातह्रदो मतः' इत्युक्तकन्दुकक्रीडाविशेषेषु। घनं सान्द्रं यथा तथा दर्शितः प्रकटीकृतः रागविभ्रमोऽनुरागचेष्टितं यया तादृशी। घनेन मेघेन दर्शितः प्रकाशितः रागविभ्रमः सन्ध्यारुण्यविलासो यस्यामेवंविधाम् इति विभक्तिविपर्यासेन विद्युल्लताया अपि विशेषणमवधेयम्। विडम्बयन्त्यनुकुर्वती। भूषणमणीनामलंकाररत्नानां रणितेन शिञ्जितेन दत्तः कृतो यो लयस्तालस्तत्संवादी तदनुगुणः पादचारश्चरणनिक्षेपो यस्मिन्कर्माणि तद्यथा तथा। अपदेशस्मितस्य व्याजमन्दहासितस्य प्रभया कान्त्या निषिक्तो व्याप्तो बिम्बमिवाधरो यत्रेति क्रियाविशेषणम्। अंसे स्कन्धदेशे स्रंसितः शिथिलबन्धः सन्पतितः, अनन्तरं प्रतिसमाहितो यथापूर्वं बद्धः शिखण्डभारः केशपाशो यस्मिन् कर्मणीति। समाघट्टित इतस्ततो हस्तप्रसरणात्संघृष्टः अतएव क्वणितः शब्दायमानः रत्नमेखलागुणो मणिमयकाञ्चीसूत्रं यस्मिन्कर्माणि तथा। 'स्त्रीकट्यां मेखला काञ्ची' इत्यमरः। अञ्चितोत्थिते नतोन्नते पृथौ स्थूले च नितम्बे कटिपश्चाद्भागे विलम्बितेन संसक्तेन, विचलता वाय्वादिना किञ्चिद्दूरीभवताऽंशुकेनोज्ज्वलं मनोहरं यथा तथा। 'पश्चान्नितम्बः स्त्रीकट्याः' 'चैलं वसनमंशुकम्' इत्यमरः। आकुञ्चितया संकोचितया, प्रसृतया विस्तारितया, वेल्लितया वक्रीकृतया च भुजलतयाऽभिहतस्ताडितो ललितः सुन्दरः कन्दुको यस्मिन्कर्मणि तद्यथा तथा, उपरि परिवर्तिते ऊर्ध्वस्थतया स्थापिते त्रिके कृकाटिकायां ग्रीवाशिरःसन्धिपश्चाद्भागे विलग्नाः संसक्ता लोलाश्चञ्चलाः कुन्तला अलका यस्मिन्कर्मणि। 'त्रिकं कृकाटिकायां च पृष्ठवंशाधरेऽपि च' इति वैजयन्ती। अवगलितस्य स्रस्तस्य कर्णपूरस्य कर्णावतंसस्य कनकपत्रस्य काञ्चननिर्मितललाटतिलकस्य च प्रतिसमाधाने पुनर्यथोचितस्थानयोजनकर्मणि शीघ्रतया

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

त्क्षिप्यमाणहस्तपादबाह्याभ्यन्तरभ्रान्तकन्दुकम्, अवनमनोन्नमननैरन्तर्यनष्टदृष्टमध्ययष्टिकम्, अवपतनोत्पतनानिर्व्यवस्थमुक्ताहारम्, अंकुरितघर्मसलिलदूषितकपोलपत्रभङ्गशोषणाधिकृतश्रवणपल्लवानिलम्, आगलितस्तनतटांशुकानियमनव्यापृतैकपाणिपल्लवं च निषद्योत्थाय निमील्योन्मील्य स्थित्वा गत्वा चैवातिचित्रं पर्यक्रीडत राजकन्या। अभिहत्य भूतलाकाशयोरपि क्रीडान्तराणि दर्शनीयान्येकेनैव वानेकेनैव कन्दुकेनादर्शयत्। चन्द्रसेनादिभिश्च प्रियसखीभिः सह विहृत्य विहृतान्ते चाभिवन्द्य देवीं मनसा मे सानुरागेणेव परिजनेनानुगम्यमाना, कुवलयशरमिव कुसुमशरस्य मय्यपाङ्गं समर्पयन्ती, सापदेशमसकृदावर्त्यमानवदनचन्द्रमण्डलतया स्वहृदयमिव मत्समीपे प्रेरितं प्रतिनिवृत्तं न वेत्यालोकयन्ती, सह सखीभिः कुमारीपुरमगमत्।

अहं चानङ्गविह्वलः स्ववेश्म गत्वा कोशदासेन यत्नवदत्युदारं स्नानभोजनादिकमनुभावितोऽस्मि। सायं चोपसृत्य चन्द्रसेना रहसि मां प्रणिपत्य पत्युरंसमंसेन प्रणयपेशलमाघट्टयन्त्युपाविशत्। आचष्ट च हृष्टः कोशदासः—'भूयासमेवं यावदायुरायताक्षि, त्वत्प्रसादस्य पात्रम्' इति। मया तु सस्मितमभिहितम्—'सखे, किमेतदाशास्यम्। अस्ति किंचिदञ्जनम्। अनया तदक्तने-

---

आशुकारितयाऽनतिक्रमितं न परित्यक्तं प्रकृतं क्रीडनं यस्मिन्कर्मणि यथा तथा। अवनमनोन्नमनयोर्नैरन्तर्यान्निरन्तरभावान्नष्टाऽदर्शनं प्राप्ता दृष्टा विलोकिता च मध्ययष्टिर्यस्मिन्कर्मणि तद्यथा तथा। अवपतने उत्पतने च कर्मणि निर्व्यवस्थश्चलो मुक्ताहारो यस्मिन्कर्मणि। अंकुरितेन प्रादुर्भूतेन घर्मसलिलेन स्वेदजलकणेन दूषितस्यार्द्रीकृतस्य कपोलयोर्गण्डयोः पत्रभङ्गस्य चित्रकस्य शोषणे आर्द्रतादूरीकरणे अधिकृतो नियोजितः श्रवणपल्लवानिलः कर्णावतंसवायुर्यस्मिन् कर्मणि। आगलितस्येषत्स्रस्तस्य स्तनतटांशुकस्य कुचकंचुकस्य नियमने पुनःसंयोजने व्यापृतो नियोजितः एकः पाणिपल्लवः करकिसलयं यत्रेति क्रियाविशेषणम्। निषद्योपविश्य। अतिचित्रं नितरामाश्चर्यजनकं यथा तथा। पर्यक्रीडत क्रीडितवती। 'क्रीडोऽनुसंपरिभ्यश्च' इत्यात्मनेपदम्। **अभिहत्येति**। कन्दुकं ताडयित्वा। क्रीडान्तराणि नानाविधान्विहारान्। विहृतान्ते क्रीडावसाने। समर्पयन्ती निक्षिपन्ती। सापदेशं सव्याजमसकृत्पुनः पुनरावर्त्यमानं वदनं चन्द्रमण्डलमिव यस्यास्तादृशतया। प्रेरितं प्रेषितम्। प्रतिनिवृत्तं स्वसमीपं प्रत्यागतम्। अगमद्गता। लृदित्त्वादङ्।

**अहं चेति**। मन्त्रगुप्तः। अनङ्गविह्वलः कामपराधीनः। स्ववेश्म निजगृहम्। यत्नवदतिप्रयत्नेन। अनुभावितः कारितः। प्रणिपत्य नमस्कृत्य। अंसं स्कन्धदेशम्। प्रणयपेशलं स्नेहमधुरं यथा तथा, आघट्टयन्ती स्पृशन्ती। उपाविशन्निषण्णा। यावदायुर्जीवनपर्यन्तम्। त्वत्प्रसादस्य भवत्कृपायाः पात्रं भाजनम्। आशास्यं प्रार्थनीयम्। अञ्जनं सिद्धकज्जलम्।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

त्रया राजसूनुरुपस्थितो वानरीमिवैनां द्रक्ष्यति, विरक्तश्चैनां पुनस्त्यक्ष्यति' इति। तया तु स्मेरयास्मि कथितः—'सोऽयमार्येणाज्ञाकरो जनोऽत्यर्थमनुगृहीतः, यदस्मिन्नेव जन्मनि मानुषं वपुरपनीय वानरीकरिष्यते। तदास्तामिदम्। अन्यथापि सिद्धं नः समीहितम्। अद्य खलु कन्दुकोत्सवे भवन्तमपहसितमनोभवाकारमभिलषन्ती रोषादिव शम्बरद्विषातिमात्रमायास्यते राजपुत्री। सोऽयमर्थो विदितभावया मया स्वमात्रे तया च तन्मात्रे, महिष्या च मनुजेन्द्राय, निवेदयिष्यते। विदितार्थस्तु पार्थिवस्त्वया दुहितुः पाणिं ग्राहयिष्यति। ततश्च त्वदनुजीविना राजपुत्रेण भवितव्यम्। एष हि देवतासमादिष्टो विधिः। त्वदायत्ते च राज्ये नालमेव त्वामतिक्रम्य मामवरोद्धुं भीमधन्वा। तत्सहतामयं त्रिचतुराणि दिनानि' इति मामामन्त्र्य प्रियं चोपगूह्य प्रत्ययासीत्। मम च कोशदासस्य च तदुक्तानुसारेण बहुविकल्पयतोः कथंचिदक्षीयत क्षपा। क्षपान्ते च कृतयथोचितनियमस्तमेव प्रियादर्शनसुभगमुद्यानोद्देशमुपागतोऽस्मि। तत्रैव चोपसृत्य राजपुत्रो निरभिमानमनुकूलाभिः कथाभिर्मामनुवर्तमानो मुहूर्तमास्त। नीत्वा चोपकार्यामात्मसमेन स्नानभोजनशयनादिव्यतिकरेणोपाचरत्। तल्पगतं च स्वप्नेनानुभूयमानप्रियादर्शनालिङ्गनसुखमायसेन निगडेना-

---

तदक्तनेत्रया अञ्जनालिप्तलोचनया। विरक्तः प्रीतिरहितः। एनां चन्द्रसेनाम्। स्मेरया कृतमन्दहसितया। 'नमिकम्पिस्म्यजस—' इति रः। वपुः शरीरम्। इदमञ्जनम्। अन्यथा अञ्जनं विनैव। समीहितमिष्टम्। खलु निश्चयेन। अपहसितस्तिरस्कृतो मनोभवस्य कामस्याकारो येनैवंविधम्। अभिलषन्ती कामयमाना। रोषात्स्वशत्रुपक्षपातित्वजनितकोपात्। शम्बरद्विषा मनसिजेन। 'शम्बरारिर्मनसिजः' इत्यमरः। अतिमात्रं निर्मर्यादमायास्यते पीड्यते। अत्र च प्रत्यनीकमलंकारः 'प्रत्यनीकमशक्तौ यच्छत्रुपक्षे पराक्रमः' इति लक्षणात्। अयमर्थः कन्यायास्त्वय्यनुरागप्रादुर्भावरूपः। विदितभावया ज्ञातकन्याशयया। तन्मात्रे कन्याजनन्यै। तया महिष्या राजपत्न्या। मनुजेन्द्राय राज्ञे तुङ्गधन्वने। निवेदयिष्यते कथितो भविष्यति। दुहितुः कन्यायाः कन्दुकावत्याः। त्वां मन्त्रगुप्तमनुसृत्य जीवत्येवंशीलेन। राजपुत्रेण भीमधन्वना। देवतया काल्या विन्ध्यवासिन्या समादिष्ट आज्ञप्तः। विधिः प्रकारः। त्वदायत्ते त्वदधीने। नालमेव नैव समर्थो भवति। अयं मे पतिः कोशदासः। त्रिचतुराणि त्रीणि चत्वारि वा। उपगूह्य गाढमालिङ्ग्य। प्रत्ययासीत्प्रतिनिववृते। तदुक्तानुसारेण चन्द्रसेनाकथितमार्गेण। बहु नानाविधं विकल्पयतोश्चिन्तयमानयोः। अक्षीयत क्षपा रात्रिरवसन्नाऽभूत्। क्षपान्ते प्रातःकाले। प्रियादर्शनेन प्राणवल्लभाविलोकनेन सुभगं सुन्दरम्। निरभिमानं गर्वरहितं यथा तथा। कथाभिर्वार्तालापैः। उपकार्या राजभवनम्। 'सौधोऽस्त्री राजसदनमुपकार्योपकारिका' इत्यमरः। स्नानादीनां व्यतिकरेण प्रबन्धेन। तल्पगतं मञ्चे निद्रां कुर्वन्तम्।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तिबलवद्भहुपुरुषैः पीवरभुजदण्डोपरुद्धमबन्धयन्माम् । प्रतिबुद्धं च सहसा समभ्यधात्--'अयि दुर्मते, श्रुतमालपितं हतायाश्चन्द्रसेनाया जालरन्ध्रनिःसृतं तच्चेष्टावबोधप्रयुक्तयानया कुब्जया त्वं किलाभिलषितो वराक्या कन्दुकावत्या तव किलानुजीविना मया स्थेयम्, त्वद्वचः किलानतिक्रमता मया चन्द्रसेना कोशदासाय दास्यते' इत्युक्त्वा पार्श्वचरं पुरुषमेकमालोक्याकथयत्--'प्रक्षिपैनं सागरे' इति । स तु लब्धराज्य इवातिहृष्टः 'देव, यदाज्ञापयसि' इति यथादिष्टमकरोत् । अहं तु निरालम्बनो भुजाभ्यामितस्ततः स्पन्दमानः किमपि काष्ठं दैवदत्तमुरसोपश्लिष्य तावदप्लोषि, यावदपासरद्वासरः शर्वरी च सर्वा । प्रत्युषस्यदृश्यत किमपि वहित्रम् । अमुत्रासन्यवनाः ते मामुद्धृत्य रामेषुनाम्ने नाविकानायकाय कथितवन्तः--'कोऽप्ययमायसनिगलबद्ध एव जले लब्धः पुरुषः । सोऽयमपि सिञ्चेत्सहस्रं द्राक्षाणां क्षणेनैकेन' इति । अस्मिन्नेव क्षणे नैकनौकापरिवृतः कोऽपि मद्गुरभ्यधावत् । अबिभयुर्यवनाः । तावदतिजवा नौकाः श्वान इव वराहमस्मत्पोतं पर्यरुत्सत । प्रावर्तत संप्रहारः । पराजयिषत

---

स्वप्नेनावस्थाविशेषेणानुभूयमानं प्रियायाः कन्दुकावत्या दर्शनालिङ्गनसुखं येनैवंविधम् । आयसेन निगडेन लोहमय्या शृंखलया । पीवरैः पुष्टैर्भुजदण्डैरुपरुद्धं निरुद्धं यथा तथा स्थापितं माम् । प्रतिबुद्धं निद्रायाः समुत्थितम् । सहसा शीघ्रम् । समभ्यधात्कथयामास । अयीत्यामन्त्रणे । आलपितं भाषणम् । हताया दुष्टायाः। जालरन्ध्रेण गवाक्षच्छिद्रेण निःसृतं वहिरागतम् । 'जाले गवाक्ष आनाये' इत्यमरः । तच्चेष्टावबोधाय चन्द्रसेनाव्यापारज्ञानार्थं प्रयुक्तया मत्प्रेरितया । कुब्जया हीनाङ्गया कयाऽपि वृद्धया । अभिलषितः पतित्वेन कामितः । वराक्या धूर्तया । अनुजीविना भृत्यभावमापन्नेन । अनतिक्रमताऽनुल्लंघयता । दास्यते दत्ता भविष्यति । पार्श्वचरं समीपवर्तिनं पुरुषं किंकरम् । सागरे समुद्रे । लब्धराज्यः प्राप्तराज्यः । यथादिष्टं भीमधन्वाज्ञासदृशम् । **अहं त्विति।** निरालम्बनोऽवलम्बरहितः । स्पन्दमानः संचरञ्जले उत्तरन्नित्यर्थः । काष्ठं दारुखण्डम् । उपश्लिष्यालिङ्ग्य । अप्लोषि जलात्तीरं प्रति प्लवमान आसम्। शर्वरी रात्रिः । प्रत्युषसि प्रभातसमये । वहित्रं समुद्रयानम् । यवनास्तुरुष्काः । उद्धृत्य जलाद् गृहीत्वा । रामेषुनाम्ने तदभिधाय । नाविकनायकाय नौकावाहकमुख्याय । नावा तरति नाविकः। 'नौ द्व्यचष्ठन्' इति ठन् । आयसनिगलबद्धो लोहशृंखलानिगडितः । लब्धः प्राप्तः । सिञ्चेज्जलेनार्द्रीकुर्यात् । द्राक्षाणां मृद्वीकालतानाम् । 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः । नैकनौकापरिवृतो बहुस्वल्पनौपरिवेष्टितः । मद्गुः प्लवः । 'मद्गुः कारण्डवः प्लवः' इत्यमरः । अबिभयुः त्रस्ता अभूवन् । अतिजवा अतिवेगयुक्ताः । श्वानः कुक्कुराः । 'श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शुनी' इत्यमरः । वराहं सूकरम् । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । अस्मत्पोतं यवनसंबन्धिवहित्रम् । संप्रहारः कलहः । पराजयिषत पराभूताः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

यवनाः। तानहमगतीनवसीदतः समाश्वास्यालपिषम्–'अपनयत मे निगलबन्धनम्। अयमहमवसादयामि वः सपत्नान्' इति। अमी तथाकुर्वन् सर्वांश्च तान्प्रतिभटान्भल्लवर्षिणा भीमटंकृतेन शार्ङ्गेण लवलवीकृताङ्गानकार्षम्। अवप्लुत्य हतविध्वस्तयोधमस्मत्पोतसंसक्तपोतममुत्र नाविकनायकमनभिसरमभिपत्य जीवग्राहमग्रहीषम्। असौ चासीत्स एव भीमधन्वा। तं चाहमवबुध्य जातव्रीडमब्रवम्–'तात, किं दृष्टानि कृतान्तविलसितानि' इति। ते तु सांयात्रिका मदीयेनैव शृङ्खलेन तमतिगाढं बद्ध्वा हर्षकिलकिलारवमकुर्वन्मां चापूजयन्। दुर्वारा तु सा नौरननुकूलवातनुन्ना दूरमभिपत्य कमपि द्वीपं निबिडमाश्लिष्टवती। तत्र च स्वादु पानीयमेधांसि कन्दमूलफलानि संजिघृक्षवो गाढपातितशिलावलयमवातराम। तत्र चासीन्महाशैलः। सोऽहम् 'अहो रमणीयोऽयं पर्वतनितम्बभागः, कान्ततरेयं गन्धपाषाणवत्युपत्यका, शिशिरमिदमिन्दीवरारविन्द-

---

अगतीञ्शरणरहितान्। अवसीदतो दुःखितान्। आलपिषमुक्तवान्। निगलबन्धनं पादशृंखलाम्। अवसादयामि विनाशयिष्यामि। सपत्नाञ्शत्रून्। 'रिपौ वैरिसपत्नारि–' इत्यमरः। अमी यवनाः। तथा मां विशृंखलम्। भल्लवर्षिणा भल्लायुधवृष्टिं कुर्वता। भीमः शत्रुभयजनकष्टंकृतो ज्याशब्दविशेषो यस्यैवंविधेन। शार्ङ्गेण चापेन। 'शार्ङ्गं चापे हरेश्चापे' इति वैजयन्ती। लवलवीकृतानि खण्डशः कृतान्यङ्गानि येषामेवंभूतान्। अकार्षं संपादितवान्। अवप्लुत्य निपत्य। हता मारिताः, विध्वस्ताः खण्डिताङ्गाश्च योधा भटा यस्मिन्नेतादृशम्। अस्माकं पोतेन संसक्तं मिलितं पोतं प्रतिरोधिवहित्रम्। अमुत्र तस्मिन् पोते। अनभिसरमसहायतया वर्तमानम्। 'अनुप्लवः सहायश्चाभिसरोऽनुसरः समाः' इत्यमरः। जीवग्राहं जीवेन सह गृहीत्वा। 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल्। असौ नाविकमुख्यः। स एव मद्विरोधी। अवबुध्य ज्ञात्वा। जातव्रीडमुत्पन्नलज्जम्। कृतान्तविलसितानि यमयातनाः। 'कृतान्तो यमदेवयोः' सांयात्रिकाः पोतवाहकाः। 'सांयात्रिकः पोतवणिक्' इत्यमरः। हर्षेण मुदा किलकिलारवं शब्दविशेषम्। दुर्वारा निवारयितुमशक्या। नौस्तरिः। 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः। अननुकूलवातेन प्रतिकूलवायुना नुन्ना प्रेरिता। आश्लिष्टवती प्राप्तवती। पानीयं सलिलम्। 'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्' इत्यमरः। एधांसि काष्ठानि। 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः। संजिघृक्षवो ग्रहीतुमिच्छवः। गाढं दृढं यथा तथा पातितः शिलायां तीरवर्तिनि पाषाणे वलयः नौकाबद्धशृंखलाप्रवलयो यस्मिन् कर्मणि तद्यथा तथा। अवातराम अवतीर्णा अभूम। शैलः पर्वतः। पर्वतस्य नितम्बभागः कटकप्रदेशः। 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः। गन्धपाषाणवती मनःशिलादिधातुसंयुक्ता। 'शैलेयं गन्धपाषाणः शिलापुष्पं च कथ्यते' इति हैमः। उपत्यका पर्वतासन्नभूः। 'उपत्यकाऽद्रेरासन्ना भूमिः' इत्यमरः। शिशिरं शीतलम्। इन्दीवरं नीलकमलम्, अरविन्दं रक्तक-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मकरन्दबिन्दुचन्द्रकोत्तरं गोत्रवारि, रम्योऽयमनेकवर्णकुसुममञ्जरीभरस्तरुवनाभोगः' इत्यतृप्ततरया दृशा बहुबहु पश्यन्नलक्षिताध्यारूढक्षोणीधरशिखरः शोणीभूतमुत्प्रभाभिः पद्मरागसोपानशिलाभिः किमपि नालीकपरागधूसरं सरः समध्यगाम् । स्नातश्च कांश्चिदमृतस्वादून्बिसभङ्गानास्वाद्य, अंसलग्नकह्लारस्तीरवर्तिना केनापि भीमरूपेण ब्रह्मराक्षसेनाभिपत्य 'कोऽसि, कुतस्त्योऽसि' इति निर्भर्त्सयताभ्यधीये । निर्भयेन च मया सोऽभ्यधीयत–'सौम्य, सोऽहमस्मि द्विजन्मा । शत्रुहस्तादर्णवम्, अर्णवाद्यवननावम्,यवननावश्चित्रग्रावाणमेनं पर्वतप्रवरं गतः, यदृच्छयास्मिन्सरसि विश्रान्तः,भद्रं तव' इति । सोऽब्रूत–'न चेद्ब्रवीषि प्रश्नान्, अश्नामि त्वाम्' इति । मयोक्तम्–'पृच्छ तावत् । भवतु' इति । अथावयोरेकयार्ययासीत्संलापः–

"किं क्रूरं स्त्रीहृदयं किं गृहिणः प्रियहिताय दारगुणाः ।
कः कामः संकल्पः किं दुष्करसाधनं प्रज्ञा ॥

तत्र धूमिनीगोमिनीनिम्बवतीनितम्बवत्यः प्रमाणम्' इत्युपदिष्टो मया सोऽ-

---

मलं, तयोर्मकरन्दबिन्दुभिः पुष्परसकणैश्चन्द्रकोत्तरं संजातमेचकम् । 'वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् । इन्दीवरं च नीलेऽस्मिन्' 'मकरन्दः पुष्परसः' 'समौ चन्द्रकमेचकौ' इत्यमरः । गोत्रवारि पर्वतसलिलम् ।'अद्रिगोत्रगिरिग्रावा–'इत्यमरः । अनेकवर्णानां नानावर्णयुक्तानां कुसुममञ्जरीणां पुष्पगुच्छानां भरो यत्रैताहशः । तरुवनाभोगः तरुवनप्रदेशः । अलक्षितं ध्यानमदत्त्वैवाध्यारूढं क्षोणीधरस्य गिरेः शिखरं येनैवंविधः । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः । शोणीभूतं रक्तवर्णम् । उत्प्रभाभिरुल्लसच्छोभायुक्ताभिः । पद्मरागो रत्नविशेषः तन्मयीभिः सोपानशिलाभिरारोहणपाषाणैः । नालीकानां पद्मानां परागैर्धूलिभिः धूसरं किंचिच्छ्वेतवर्णम् । 'नालीकं पद्मबाणयोः' इत्यमरः । सरः कासारम् । अमृतस्वादून्पीयूषसमरसान् । बिसभङ्गान्मृणालखण्डान् । 'मृणालं बिसम्' इत्यमरः । आस्वाद्य भक्षयित्वा । अंसे स्कन्धदेशे लग्नानि स्थापितानि प्रियाविरहानलपीडाशमनायेति भावः । कह्लाराणि सौगन्धिकपुष्पाणि यस्यैवंभूतः । भीमरूपेण भयंकराकृतिना । अभिपत्य मत्समीपमागत्य । कुत आगतः कुतस्त्यः । अभ्यधीये पृष्टोऽभूवम् । निर्भयेन शङ्कारहितेन । स राक्षसः । अभ्यधीयत उक्तः । अर्णवं समुद्रम् । चित्रग्रावाणं नानावर्णशिलायुक्तम् । पर्वतप्रवरं गिर्युत्तमम् । विश्रान्तः कृताध्वखेदापनयनः । भद्रं क्षेमम् । न चेद्ब्रवीषि यदि नं प्रत्युत्तरसि । प्रश्नाननुयोगान् । अश्नामि भक्षयामि । 'अश भोजने' । **भवतु इति** । मयाऽवश्यमेव प्रत्युत्तराणां दास्यमानत्वाद्भक्षणकर्म तावद्दूरे तिष्ठत्विति भावः । आवयो राक्षसस्य मम मन्त्रगुप्तस्येति च । आर्यया पद्यविशेषेण । आर्यालक्षणं तु पूर्वोक्तम्, तत्तु न विस्मर्तव्यम् । संलापो मिथो भाषणं प्रश्नोत्तररूपम्–

**किमिति । गृहिणो** गृहस्थाश्रमवासिनः । **प्रियहिताय** प्रियाय हिताय क्षेमाय च । **दारगुणाः** पत्नीगुणाः । **संकल्पः** 'इयं मम पत्नी, इमे मे पुत्राः, इमाश्च कन्या मदीयाः, इदं च गृहं मदीयम्' इत्येवंरूपोऽध्यवसायः । **दुष्करसाधनं** दुष्करस्यापि कार्यस्य साधनं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

ब्रूत-'कथय, कीदृश्यस्ताः' इति । अत्रोदाहरणम्-' अस्ति त्रिगर्तो नाम जनपदः। तत्रासन्गृहिणस्त्रयः' स्फीतसारधनाः सोदर्या धनकधान्यकधन्यकाख्याः । तेषु जीवत्सु न ववर्ष वर्षाणि द्वादश दशशताक्षः, क्षीणसारं सस्यम्, ओषध्यो वन्ध्याः, न फलवन्तो वनस्पतयः, क्लीबा मेघाः क्षीणस्रोतसः स्रवन्त्यः, पङ्कशेषाणि पल्वलानि, निर्निस्यन्दान्युत्समण्डलानि, विरलीभूतं कन्दमूलफलम्, अवहीनाः कथाः, गलिताः कल्याणोत्सवक्रियाः, बहुलीभूतानि तस्करकुलानि, अन्योन्यमभक्षयन्प्रजाः, पर्यलुठन्नितस्ततो बलाकापाण्डुराणि नरशिरःकपालानि, पर्यहिण्डन्त शुष्काः काकमण्डल्यः, शून्यीभूतानि नगरग्रामखर्वटपुटभेदनादीनि । त एते गृहपतयः सर्वधान्यनिचयमुपयुज्याजाविकटं गवलगणं गवां यूथं दासीदासजनमपत्यानि ज्येष्ठमध्यमभार्ये च क्रमेण भक्षयित्वा ' कनिष्ठ-

---

निदानभूतम् । **प्रज्ञा** बुद्धिविशेषः । **प्रमाण**मुदाहरणभूता इत्यर्थः । कीदृश्यः कथंभूताः । ता धूमिन्यादयः । अत्र पूर्वोक्तविषये । उदाहरणं निदर्शनम् । **अस्तीति** । जनपदो देशः । ' नीवृज्जनपदौ देशविषयौ तूपवर्तनम् ' इत्यमरः । गृहिणो गृहस्थाश्रमवासिनः । स्फीतं प्रचुरं सारधनं मूलद्रव्यं येषां तथाविधाः । सोदर्या समानगर्भजाता । ' समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ' इत्यमरः । ' सोदराद्यः ' इति यप्रत्ययो जातार्थे । न ववर्ष जलधारां न चकार । वर्षाणि द्वादश तावत्संवत्सरपर्यन्तम् । ' कालाध्वनोरत्यन्तसंयोगे ' इति द्वितीया । दशशताक्षः सहस्रलोचन इन्द्रः ' आखण्डलः सहस्राक्षः ' इत्यमरः । ओषध्यः पक्वे फले विनाशिन्यः । ' ओषध्यः फलपाकान्ताः ' इत्यमरः । वन्ध्या निष्फलाः । ' वन्ध्योऽफलोऽवकेशी च ' इत्यमरः । वनस्पतयोऽपुष्पा वृक्षविशेषाः।'तैरपुष्पाद्वनस्पतिः'इत्यमरः। क्लीबा निर्जलाः। मेघा वारिधराः । क्षीणस्रोतसोऽल्पजलप्रवाहिन्यः । स्रवन्त्यो नद्यः । ' स्रवन्ती निम्नगाऽऽपगा। इत्यमरः । पंकशेषाणि कर्दमावशिष्टानि । पल्वलानि स्वल्पसरांसि । 'वेशन्तः पल्वलं चाल्पसरः' । इत्यमरः । निर्निस्यन्दानि प्रक्षरणशून्यानि । उत्समण्डलानि निर्झरमण्डलानि । 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ' इत्यमरः । विरलीभूतं नष्टप्रायम् । बहुलीभूतानि प्रचुराणि । तस्करकुलानि चौरसमुदायाः । पर्यलुठन्नितस्ततो भ्रमन्ति स्म । बलाका विहगविशेषः ' बालाका बिसकण्ठिका ' इत्यमरः । तद्वत्पाण्डुराणि श्वेतवर्णानि । पर्यहिण्डन्त परिभ्रमन्ति स्म । ' हिडि भ्रमणे ' । काकमण्डल्यो वायसकुलानि । पुटभेदनं पत्तनं ' पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्' इत्यमरः । **त एते इति** । पूर्वोक्ता धनकादयः । सर्वमपि धान्यनिचयं धान्यसंग्रहम्। उपयुज्य व्ययं कृत्वा । अजाश्छाग्योऽवयो मेषाः । 'अजा छागी शुभच्छागबस्तच्छगलका अजे ' 'अवयः शैलमेषार्काः' इत्यमरः । तेषां समूहमजाविकटम् । 'संघाते कटच्' इति कटच् प्रत्ययः । गवलगणं महिषवृन्दम् । ' गवलो महिषेऽस्त्री तु तस्य शृंगेऽपि वर्तते ' इति वैजयन्ती । यूथं कुलं 'सजातीनां कुलं यूथम् ' इत्यमरः । अपत्यानि पुत्रान्कन्याश्च । क्रमेण पर्यायेण ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

भार्या धूमिनी श्वो भक्षणीया' इति समकल्पयन् । अथ कनिष्ठो धन्यकः प्रियां स्वामत्तुमक्षमस्तया सह तस्यामेव निश्यपासरत् । मार्गक्लान्तां चोद्वहन्वनं जगाहे । स्वमांसासृगपनीतक्षुत्पिपासां तां नयन्नन्तरे कमपि निकृत्तपाणिपादकर्णनासिकमवनिपृष्ठे विचेष्टमानं पुरुषमद्राक्षीत् । तमप्यार्द्राशयः स्कन्धेनोद्वहन्कन्दमूलमृगबहुले गहनोद्देशे यत्नरचितपर्णशालश्चिरमवसत् । अमुं च रोपितव्रणमिंगुदीतैलादिभिरामिषेण शाकेनात्मनिर्विशेषं पुपोष । पुष्टं च तमुद्रिक्तधातुमेकदा मृगान्वेषणाय च प्रयाते धन्यके सा धूमिनी रिरंसयोपातिष्ठत । भर्त्सितापि तेन बलात्कारमरीरमत् । निवृत्तं च पतिमुदकाभ्यार्थिनम् ' उद्धृत्य कूपात्पिब, रुजति मे शिरः शिरोरोगः' इत्युदञ्चनं सरज्जुं पुरश्चिक्षेप । उदञ्चयन्तं च तं कूपादपः, क्षणात्पृष्ठतो गत्वा प्रणुनोद । तं च विकलं स्कन्धेनोदुह्य देशाद्देशान्तरं परिभ्रमन्ती पतिव्रताप्रतीतिं लेभे, बहुविधाश्च पूजाः । पुनरवन्तिराजानुग्रहादतिमहत्या भूत्या न्यवसत् । अथ पानीयार्थिसार्थजनसमापत्तिदृष्टोद्धृ-

---

श्व आगामिनि दिने । समकल्पयन्निश्चितवन्तः । प्रियां स्वामात्मपत्नीम् । अत्तुं भक्षयितुम् । 'अद भक्षणे' । निशि रात्रौ । अपासरद्देशाद्बहिः पलायितः । 'सृ गतौ' । मार्गक्लान्तामध्वखिन्नाम् । उद्वहन्स्कन्धे धारयन् । जगाहे प्रविष्टवान् । 'गाहू विलोडने' । स्वस्यात्मनो मांसेनासृजा क्षतजेन च क्रमेणापनीते निवारिते क्षुद्भोक्तुमिच्छा, पिपासा जलपानतृष्णा च यस्या एतादृशीम् । अन्तरे मार्गमध्ये । निकृत्तं छिन्नं पाणिपादकर्णनासिकं करचरणश्रवणनासं यस्यैतादृशम् । ' द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावः । अवनिपृष्ठे भूतले । आर्द्राशयोऽनुकम्पितचित्तः । स्कन्धेन अंसदेशेन । गहनोद्देशे वनस्थले । 'गहनं काननं वनम् ' इत्यमरः । यत्नेन बहुपरिश्रमेण रचिता कृता पर्णशाला पत्रकुटीरं येनैवंभूतः सन् । चिरं बहुकालम् । **अमुं चेति** । मार्गे दृष्टं पुरुषम् । रोपितव्रणं चिकित्सितारुष्कम् । 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः । इंगुदी वृक्षविशेषः । ' इंगुदी तापसतरुः ' इत्यमरः । आमिषेण मांसेन । ' पललं क्रव्यमामिषम् ' इत्यमरः । आत्मनिर्विशेषमात्मतुल्यम् । पुपोष पुष्टकायमकरोत् । उद्रिक्तधातुं प्रवृद्धधातुम् । मृगान्वेषणाय मृगहननाय । प्रयाते बहिर्गते । रिरंसया रन्तुमिच्छया । उपातिष्ठतोपस्थिताऽभूत् ' उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम् ' इति वार्तिकेन संगतिकरणे आत्मनेपदम् । भर्त्सिता भयं प्रापिताऽपि । बलात्कारं तस्य खञ्जतया हठात् इत्यर्थः । अरीरमत्सुरतक्रीडां चकारेत्यर्थः । निवृत्तं वनात्प्रत्यागतं पतिं धन्यकम् । उदकाभ्यर्थिनं जलं याचमानम् । कूपात्प्रहेः । ' पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा ' इत्यमरः । रुजति पीडयति । उदञ्चनं जलोद्धरणभाजनम् । ' उत्सेचनं सेकपात्रं तथोदञ्चनमित्यपि ' इति वैजयन्ती । सरज्जुं रज्जुसहितम् । पुरोऽप्रदेशे । चिक्षेप त्यक्तवती । उदञ्चयन्तं निष्कासयन्तम् । अपः सलिलानि । प्रणुनोद कूपे पातयामास । विकलं हीनाङ्गम् । उदुह्य धृत्वा । पतिव्रताप्रतीतिं सतीयमिति प्रख्यातिं लेभे प्राप । भूत्यैश्वर्येण । ' विभूतिर्भूतिरैश्वर्यम् ' इत्यमरः । **अथेति** । पानीयार्थिभिर्जलकामुकैः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तमवन्तिषु भ्रमन्तमाहारार्थिनं भर्तारमुपलभ्य सा धूमिनी येन मे पतिर्विकलीकृतः स दुरात्मायम्' इति तस्य साधोश्चित्रवधमज्ञेन राज्ञा समादेशयांचकार। धन्यकस्तु दत्तपश्चाद्बन्धो वध्यभूमिं नीयमानः सशेषत्वादायुषः 'यो मया विकलीकृतोऽभिमतो भिक्षुः, स चेन्मे पापमाचक्षीत, युक्तो मे दण्डः' इत्यदीनमधिकृतं जगाद। 'को दोषः' इत्युपनीय दर्शितेऽमुष्मिन्स विकलः पर्यश्रुः पादपतितस्तस्य साधोस्तत्सुकृतमसत्याश्च तस्यास्तथाभूतं दुश्चरितमार्यबुद्धिराचचक्षे। कुपितेन राज्ञा विरूपितमुखी सा दुष्कृतकारिणी कृता श्वभ्यः पाचिका। कृतश्च धन्यकः प्रसादभूमिः। तद्ब्रवीमि—'स्त्रीहृदयं क्रूरम्' इति।

पुनरनुयुक्तो गोमिनीवृत्तान्तमाख्यातवान्—'अस्ति द्रविडेषु काञ्ची नाम नगरी। तस्यामनेककोटिसारः श्रेष्ठिपुत्रः शक्तिकुमारो नामासीत्। सोऽष्टादशवर्षदेशीयश्चिन्तामापेदे—'नास्त्यदाराणामनुगुणदाराणां वा सुखं नाम। तत्कथं नु गुणवद्विन्देयं कलत्रम्' इति। अथ वरप्रत्ययाहृतेषु दारेषु यादृच्छिकीं संपत्तिमनभिसमीक्ष्य कार्तान्तिको नाम भूत्वा वस्त्रान्तपिनद्धशालिप्रस्थो

---

सार्थजनैः संघशः कुत्रचिद्गच्छद्भिर्लोकैः। समापत्त्या यदृच्छया दृष्टं विलोकितं पुनरुद्धृतं च कूपात्। उपलभ्य दृष्ट्वा। विकलीकृतः छिन्नगात्रः कृतः। साधोर्निरपराधस्य। अज्ञेन वस्तुस्थित्यनभिज्ञेन। समादेशयांचकाराज्ञां दापितवती। वध्यभूमिं वधस्थलम्। सशेषत्वादायुषो जीवितावशेषात्। विकलीकृत इति अभिमतः संमतो धूमिन्या। पापं क्रूरकर्म। आचक्षीत कथयेत्। अदीनं सधैर्यम्। अधिकृतं वधाधिकारिणं प्रतीत्यर्थः। उपनीय समीपमागमय्य। असत्याः कुलटायाः। 'असती कुलटेत्वरी' इत्यमरः। आर्यबुद्धिः साधुबुद्धिः। कुपितेन रुष्टेन। विरूपितमुखी दूषितानना। प्रसादभूमिरनुग्रहपात्रम्। तत्तस्मात्कारणात्। स्त्रीणां कामिनीनां हृदयं चेतः क्रूरमतिनिर्दयम्। तदेवोक्तमाचार्यैरपि। 'मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम्। अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते' 'न विषेण न शस्त्रेण नाग्निना न च मृत्युना। निर्मिताः केवलं नार्यः स्त्रीभिरेव स्त्रियः कृताः॥' 'हृदयं क्षुरधाराभं वचनं सुधया समम्। यासामेतासु नारीषु विश्वासो विपदे ध्रुवम्"। इत्यादि।

**पुनरिति**। अनुयुक्तो राक्षसेन पृष्टः। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। अनेककोटिसारः बहुकोटिपरिमितमूलद्रव्ययुक्तः। 'सारो बले स्थिरांशे च मज्जि पुंसि जले धने' इति मेदिनी। अष्टादशवर्षदेशीयः किंचिन्न्यूनाष्टादशवयस्कः। 'ईषदसमाप्तौ—' इति देशीयर्। आपेदे प्राप्तवान्। अदाराणां भार्याविधुराणाम्। अननुगुणाः प्रतिकूलाचरणशीला दारा येषामेवंविधानां च। सुखं नाम सुखलेशोऽपि नास्ति। 'यस्य नास्ति सती भार्या गृहेषु प्रियवादिनी। अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम्' इत्युक्तत्वात्। कथं नु केन प्रकारेण। गुणवदनुकूलगुणविशिष्टम्। विन्देयं प्राप्नुयाम्। कलत्रं भार्याम्। वरस्य जामातुः प्रत्ययार्थं गुणवती वा नवेति विश्वासार्थमाहृतेष्वानीतेषु। दारेषु भार्यासु। यादृच्छिकीं यदृच्छयोत्पन्नां संपत्तिं गुणसां-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

भुवं बभ्राम । 'लक्षणज्ञोऽयम्' इत्यमुष्मै कन्याः कन्यावन्तः प्रदर्शयांबभूवुः । यां कांचिल्लक्षणवतीं सवर्णां कन्यां दृष्ट्वा स किल स्म ब्रवीति—'भद्रे, शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुम्' इति । स हसितावधूतो गृहाद्गृहं प्रविश्याभ्रमत् । एकदा तु शिबिषु पट्टने सह पितृभ्यामवसितमहर्धिमवशीर्णभवनसारां धात्र्या प्रदर्श्यमानां कांचन विरलभूषणां कुमारीं ददर्श । अस्यां संसक्तचक्षुश्चातर्कयत्—'अस्याः खलु कन्यकायाः सर्व एवावयवा नातिस्थूला नातिकृशा नातिह्रस्वा नातिदीर्घा न विकटा मृजावन्तश्च । रक्ततलांगुलीयवमत्स्यकमलकलशाद्यनेकपुण्यलेखालाञ्छितौ करौ, समगुल्फसंधी मांसलावशिरालौ चांघ्री, जङ्घे चानुपूर्ववृत्ते, पीवरोरुग्रस्ते इव दुरुपलक्ष्ये जानुनी, सकृद्विभक्तश्चतुरस्रः ककुन्दरविभागशोभी रथाङ्गाकारसंस्थितश्च नितम्बभागः तनुतरमीषन्निम्नं गम्भीरं नाभिमण्डलम्, वलित्रयेण चालंकृतमुदरम्, उरोभागव्यापिनावुन्मग्नचूचुकौ विशालारम्भशोभिनौ पयोधरौ, धनधान्यपुत्रभूयस्त्वचिह्नलेखालाञ्छिततले स्निग्धोदग्रकोमलनखमणी ऋज्वनुपूर्ववृत्तताम्रांगुली संनतांसदेशे

---

निध्याम् । अनभिसमीक्ष्याप्रतीक्षमाणः सन् । कार्तान्तिको नाम लक्षणज्ञ इव वेषं धृत्वेत्यर्थः । 'कार्तान्तिको लक्षणज्ञः' इति वैजयन्ती । वस्त्रान्ते वसनाञ्चले पिनद्धो बद्धः शालिप्रस्थः प्रस्थपरिमितं व्रीहिधान्यं येनैवंविधः ।'कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक्' इत्यमरः । प्रदर्शयांबभूवुर्दर्शितवन्तः । सवर्णां समानजातीयाम् । गुणवद्गुणयुक्तम् । अन्नं भक्तम् । 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः' इत्यमरः । अभ्यवहारयितुं भोजयितुम् । हसितेनावधूतस्तिरस्कृतः । शिबिषु कावेरीदक्षिणतीरस्थदेशविशेषेषु । 'शिबिर्मरुद्वृधायास्तु दक्षिणं तीरमिष्यते' इति वैजयन्ती । पितृभ्यां मातापितृभ्यां सह साकमवसिता विनष्टा महती ऋद्धिर्यस्यास्तादृशीम् । पितृहीनामसंपन्नां चेत्यर्थः । अवशीर्णा इतस्ततो गता भवने गृहे स्थिता साराः स्थिरद्रव्याणि यस्या एवंविधाम् । धात्र्योपमात्रा । विरलभूषणां स्वल्पालंकाराम् । संसक्तचक्षुः संलग्नदृष्टिः । नातिस्थूला नितरां पुष्टा अपि न सन्ति न चातिकृशाः दुर्बलाः । समा इति भावः । मृजावन्तः शुद्धाः । यवादिभिरनेकपुण्यलेखाभिः शुभरेखाभिर्लाञ्छितौ चिह्नितौ । समौ गुल्फसंधी घुटिकाबन्धौ ययोरेवंभूतौ । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । मांसलौ समपुष्टौ । अङ्घ्री चरणौ । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । जङ्घे प्रसृते । अनुपूर्ववृत्ते क्रमशः पीवरे । पीवराभ्यामूरुभ्यामष्ठीवद्भ्यां ग्रस्ते कवलिते इव दुरुपलक्ष्ये दुर्दर्शे । सकृद्विभक्ते समं विभक्ते । 'एकवारे समे सकृत्' इत्यजयः । ककुन्दरस्य नितम्बकूपकद्वयस्य विभागेन शोभते एवंशीलः ।'कूपकौ तु नितम्बस्थौ द्वयहीने ककुन्दरे' इत्यमरः । रथाङ्गाकारतया चक्राकारतया संस्थितः संनिवेशितः । नितम्बभागः कटिपश्चाद्भागः 'पश्चान्नितम्बः स्त्रीकट्याः' इत्यमरः । तनुतरमतिसूक्ष्मम् । गम्भीरमतलस्पर्शं च । उन्मग्नचूचुकौ उत्थिताग्रौ । 'चूचुकं तु कुचाग्रं स्यात्' इत्यमरः । पयोधरौ स्तनौ । धनादीनां भूयस्त्वचिह्नलेखाभिर्बहुत्वद्योतकलक्षणैर्लाञ्छितं तलं ययोस्ते । ऋजवोऽवक्रा अनुपूर्वं वृत्ताः पुष्टाश्च ताम्रा अंगुलयो ययोस्ते ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

सौकुमार्यवत्यौ निमग्नपर्वसंधी च बाहुलते, तन्वी कम्बुवृत्तबन्धुरा च कंधरा, वृत्तमध्यविभक्तरागाधरम्, असंक्षिप्तचारुचिबुकम्, आपूर्णकठिनगण्डमण्डलम्, संगतानुवक्रनीलास्निग्धभ्रूलतम्, अनतिप्रौढतिलकुसुमसदृशनासिकम्, अत्यसितधवलरक्तत्रिभागभासुरमधुराधीरसंचारमन्थरायतेक्षणम्, इन्दुशकलसुन्दरललाटम्, इन्द्रनीलशिलाकाररम्यालकपङ्क्ति द्विगुणकुण्डलितम्लाननालीकनालललितलम्बश्रवणपाशयुगलमाननकमलम्, अनतिभंगुरो बहुलः पर्यन्तेऽप्यकपिलरुचिरायामवानेकैकनिसर्गसमस्निग्धनीलो गन्धग्राही च मूर्धजकलापः । सेयमाकृतिर्न व्यभिचरति शीलम् । आसज्जति च मे हृदयमस्यामेव । तत्परीक्ष्यैनामुद्वहेयम् ।

---

कम्बुः शंखः । 'शंखः स्यात्कम्बुरस्त्रियौ' इत्यमरः । तद्वद्वृत्ता बन्धुरा मनोज्ञा च कन्धरा शिरोधिः । असंक्षिप्तं विशालं चारु मनोज्ञं चिबुकं दन्ताधोभागः यत्रैवंविधम् । अनतिप्रौढं नातिप्रफुल्लं यत्तिलकुसुमं तद्वन्नासिका यस्मिन्नेतादृशम् । अति नितरामासितो नीलः, धवलः, रक्तोऽरुणवर्णश्च ये त्रयो भागास्तैर्भासुरे शोभमाने, मधुरे मनोहरे, अधीरसंचारे अतिचञ्चले, मन्थरे मन्दगती, आयते विस्तृते च ईक्षणे नयने यत्रैवंविधम् । इन्दुशकलवदर्धचन्द्रवत्सुन्दरं ललाटं भालदेशो यत्र तादृशम् । 'ललाटमलिकं गोधिः' इत्यमरः । इन्द्रनीलशिलाकारा तद्वदतिनीलवर्णा रम्या च अलकपङ्क्तिर्यत्रैवंभूतम् । नालीकनालं पद्मदण्डम् । 'नालीकः शरशल्याग्रेष्वब्जखण्डे नपुंसकम्' इति मेदिनी । अकपिलरुचिः कृष्णवर्णः । आयामवान्दैर्घ्यवान् । एकैकं प्रत्येकं निसर्गेण स्वभावेनैव समः न तु कर्तनेन समीकृतः । मूर्धजकलापः केशपाशः । **सेयमिति** । इयमेतादृशी आकृतिः न शीलं व्यभिचरति सद्गुणसंपत्तिं विना न भवति । आसज्जति लग्नं भवति । परीक्ष्य विमृश्य । उद्वहेयं परिणेष्यामि । एतादृश्या एव विवाहयोग्यत्वमुक्तं वराहमीहिरेण—'स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः पादौ समोपचितचारुनिगूढगुल्फौ । श्लिष्टांगुली कमलकान्तितलौ च यस्यास्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत् ॥ मत्स्यांकुशाब्जयववज्रहलासिचिह्नावस्वेदनौ मृदुतलौ चरणौ प्रशस्तौ । जंघे च रोमरहिते विपुले सुवृत्ते जानुद्वयं सममतुल्यमसंधिदेशम् ॥ ऊरू घनौ करिकरप्रतिमावरोमावश्वत्थपत्रसदृशं विपुलं च गुह्यम् ॥ विस्तीर्णमांसोपचितो नितम्बो गुरुश्च धत्ते रशनाकलापम् । नाभिर्गभीरा विपुलाङ्गनानां प्रदक्षिणावर्तगता च शस्ता ॥ मध्यं स्त्रियास्त्रिवलनाल्पमरोमशं च वृत्तौ घनावविषमौ कठिनावुरोजौ । रोमप्रवर्जितमुरो मृदु चाङ्गनानां ग्रीवा च कम्बुनिचितार्थसुखानि धत्ते ॥ बन्धुजीवकुसुमोपमोऽधरो मांसलो रुचिरबिम्बरूपधृक् । कुन्दकुड्मलनिभाः समा द्विजा योषितां पतिसुखामितार्थदाः ॥ दाक्षिण्ययुक्तमशठं परपुष्टहंसवल्गुप्रभाषणमदीनमसौष्ठवं च । नासा समा समपुरा रुचिरप्रशस्ता दृङ्नीलनीरजलदे द्युतिहारिणी च ॥ नो संगते नातिपृथू न लम्बे शस्ते भ्रुवौ बालशशाङ्कवक्रे । अर्धेन्दुसंस्थानमलोमशं च शस्तं ललाटं न तलं न तुङ्गम् । कर्णयुग्ममपि युक्तमांसलं शस्यते मृदु समं समाहितम् । स्निग्धनीलमृदुकुञ्चितलम्बा मूर्धजाः शुभकराः शिरः-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

अविमृश्यकारिणां हि नियतमनेकाः पतन्त्यनुशयपरम्पराः' इति । स्निग्धदृष्टि-राचष्ट–'भद्रे, कच्चिदस्ति कौशलं शालिप्रस्थेनानेन संपन्नमाहारमस्मानभ्यवहारयितुम्' इति । ततस्तया वृद्धदासी साकूतमालोकिता । तस्य हस्तात्प्रस्थमात्रं धान्यमादाय क्वचिदलिन्दोद्देशे सुसिक्तसंमृष्टे दत्तपादशौचमुपावेशयत् । सा कन्या तान् गन्धशालीन्संक्षुद्य मात्रया विशोष्यातपे मुहुर्मुहुः परिवर्त्य स्थिरसमायां भूमौ नालीपृष्ठेन मृदुमृदु घट्टयन्ती तुषैरखण्डैस्तण्डुलान्पृथक्चकार । जगाद च धात्रीम्–'मातः, एभिस्तुषैरर्थिनो भूषणमृजाक्रियाक्षमैः स्वर्णकाराः । तेभ्य इमान्दत्त्वा लब्धाभिः काकिणीभिः स्थिरतराण्यनत्यार्द्राणि नातिशुष्काणि काष्ठानि मितंपचां स्थालीमुभे शरावे चाहर' इति । तथाकृते तया तांस्तण्डुला-

---

स्थिताः ॥' इति । अविमृश्यकारिणामविचार्य कुर्वताम् । नियतं निश्चयेन । अनुशयपरंपराः पश्चात्तापधाराः । 'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः' इति विश्वः । तदुक्तं कालिदासेन 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥' इति । स्निग्धदृष्टिः सप्रणयं निपातितनयनः । **भद्रे इति** । हे कल्याणि । कच्चिदित्यनुयोगे । 'कच्चित्कामप्रवेदने' इत्यमरः । कौशलं निपुणता । शालिप्रस्थेन प्रस्थपरिमितव्रीहिसंचयेन । प्रस्थः परिमाणविशेषः 'माषटङ्काक्षबिल्वानि कुडवः प्रस्थमाढकम् । राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम् ॥' इति शार्ङ्गधरवचनात् सेरचतुष्टयमिति भावः । संपन्नं समृद्धम् । अभ्यवहारयितुं भोजयितुम् । तया कन्यया । साकूतं साभिप्रायम् । 'आकूतं स्यादभिप्रायः' इति हलायुधः । आलोकिता दृष्टा । प्रस्थमात्रं तत्परिमितम् । 'मात्रा परिच्छदे वर्णे मानेऽल्पे' इति रत्नमाला । अलिन्दोद्देशे द्वारबहिःस्थले । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । सुसिक्ते सम्यग्जलेन प्रोक्षिते पश्चात्संमृष्टे मार्जन्या दूरीकृतरजस्के । दत्तं पादशौचं पादप्रक्षालनार्थं जलं यस्मै तादृशम् । उपावेशयदुपवेशितवती । गन्धशालीन्गन्धयुक्तान् व्रीहीन् । संक्षुद्य कुट्टयित्वा । मात्रया अल्पकालेन । विशोष्य शुष्कं कृत्वा । आतपे सूर्यकिरणयुक्तप्रदेशे । स्थिरायां समायामनिम्नोन्नतायां च । नालीपृष्ठेन मुसलविशेषेण । मृदुमृदु शनैः शनैः । घट्टयन्ती मर्दयन्ती । तुषैर्धान्यत्वग्भिः । अखण्डैरच्छिन्नैः । 'पृथग्विनानानाभिः–' इति तृतीया । पृथक्चकार वियोजितवती । धात्रीमुपमातरम् । अर्थिनः सप्रयोजनाः । भूषणानां स्वर्णालंकाराणां मृजाक्रियायां बहिःशोधनकर्मणि क्षमैः समर्थैः । स्वर्णकाराः नाडिंधमाः । 'नाडिंधमः स्वर्णकारः कलादो रुक्मकारकः' इत्यमरः । इमांस्तुषान् । काकिणीभिः कपर्दिकाभिः । 'वराटकानां दशकद्वयं यत्सा काकिणी' इति लीलावती । अनत्यार्द्राणि नातिसरसानि । तथात्वे ज्वलने विलम्बसम्भवात् । नातिशुष्काणि अतिनीरसत्वे निःशेषं ज्वलनप्रसंगात् । काष्ठानीन्धनानि । मितं स्वल्पं पचतीत्येवंशीलाम् । 'मितनखे च' इति खश् । 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् च । शरावः पात्रविशेषः 'शरावो वर्धमानकः' इत्यमरः । आहरानय । **तथेति** । आनीते सति । तयोपमात्रा वृद्धया । अनतिनिम्ना नातिगभीरा,

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

ननतिनिम्नोत्तानविस्तीर्णकुक्षौ ककुभोलूखले लोहपत्रवेष्टितमुखेन समशरीरेण विभाव्यमानमध्यतानवेन व्यायतेन गुरुणा खादिरेण मुसलेन चतुरललितक्षेपणोत्क्षेपणायासितभुजमसकृदंगुलीभिरुद्धृत्योद्धृत्यावहत्य शूर्पशोधितकणकिंशारुकांस्तण्डुलानसकृदद्भिः प्रक्षाल्य क्वथितपञ्चगुणे जले दत्तचुल्लीपूजा प्राक्षिपत् । प्रश्लथावयवेषु प्रस्फुरत्सु तण्डुलेषु मुकुलावस्थामतिवर्तमानेषु संक्षिप्यानलमुपहितमुखपिधानया स्थाल्यान्नमण्डमगालयत् । दर्व्या चावघट्य मात्रया परिवर्त्य समपक्वेषु सिक्थेषु तां स्थालीमधोमुखीमवातिष्ठिपत् । इन्धनान्यन्तःसाराण्यम्भसा समभ्युक्ष्य प्रशमिताग्नीनि कृष्णाङ्गारीकृत्य तदर्थिभ्यः प्राहिणोत् । 'एभिर्लब्धाः काकिणीर्दत्त्वा शाकं घृतं दधि तैलमामलकं चिञ्चाफलं च यथालाभमानय' इति । तथानुष्ठिते च तया द्वित्रानुपदंशानुपपाद्य तदन्नमण्डमार्द्र-

---

नात्युत्ताना, नातिविस्तीर्णा च कुक्षिर्मध्यभागो यस्यैवंविधे । ककुभोऽर्जुनवृक्षस्तन्मये उलूखले धान्यानां कुट्टनयन्त्रे । 'इन्द्रद्रुः ककुभोऽर्जुनः' इत्यमरः । लोहपत्रेणायसकटकेन वेष्टितं मुखमग्रभागो यस्यैवंविधेन । समशरीरेण ऋज्वाकृतिना । विभाव्यमानं दृश्यमानं मध्ये पाणिना ग्रहणार्थं तानवं कृशत्वं यस्यैवंभूतेन । 'इगन्ताच्च लघुपूर्वात्' इति तनुशब्दाद्भावार्थेऽण् । व्यायतेनातिदीर्घेण । खदिरस्य विकारः खादिरः । 'गायत्री बालतनयः खदिरो दन्तधावनः' इत्यमरः । 'पलाशादिभ्यो वा' इति विकारार्थेऽण् । मुसलेन धान्यकुट्टनसाधनेन । चतुरं निपुणं ललितं सुन्दरं च यथा तथा क्षेपणोत्क्षेपणाभ्यामवननोन्नमनाभ्यामायासितौ क्लेशितौ भुजौ यस्मिन्कर्मणि तद्यथा तथा । असकृद्वारंवारम् । अवहत्य घट्टयित्वा । शूर्पेण वंशकृतपात्रविशेषेण शोधिताः पृथक्कृताः कणास्तण्डुलक्षुद्रावयवाः किंशारवः सूचीतुल्यधान्याग्रभागाश्च येभ्यस्तादृशान् । 'किंशारुः सस्यशूकं स्यात्' इत्यमरः । 'प्रस्फोटनं शूर्पमस्त्री' इति च । अद्भिः सलिलैः । क्वथितेऽग्निसंतप्ते, पञ्चमगुणे तण्डुलापेक्षया पञ्चगुणाधिके । दत्ता कृता चुल्ल्याः अधिश्रयण्याः पूजा यया तादृशी सती । 'अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका' इत्यमरः । प्राक्षिपत् पाकार्थं निक्षिप्तवती । प्रश्लथाः शिथिलीभूता अवयवा येषामेवंविधेषु । प्रस्फुरत्सु क्वथत्सु । अनलमग्निं संक्षिप्य संकोच्य । उपहितं न्यस्तं मुखे पिधानमाच्छादनं यस्या एवंविधया । अन्नस्यौदनस्य मण्डं निस्रावम् । 'मासराचामनिस्रावा मण्डे भक्तसमुद्भवे' इत्यमरः । अगालयन्निष्कासयामास । दर्व्या खजाकया । 'दर्विः कम्बिः खजाका च' इत्यमरः । मात्रया स्वल्पपरिमाणेन । समं पक्वेषु पाकं प्राप्तेषु । 'पचो वः' इति निष्ठाया वः । सिक्थेषु भक्तपुलाकेषु । अवातिष्ठिपदवस्थापयामास । 'तिष्ठतेरित्' इतीदादेशः । इन्धनानि काष्ठानि । अन्तःसाराणि बहिर्दग्धान्यपि मध्ये ससाराणि । अम्भसा वारिणा । कृष्णाङ्गारीकृत्य असितवर्णानङ्गारान्संपाद्य । तदर्थिभ्योऽङ्गारार्थिभ्यः । प्राहिणोदुपमातृद्वारा विक्रयार्थं प्रेषयामास । घृतमाज्यम् । आमलकं धात्रीफलम् । चिञ्चाफलं तिन्तिणीफलं च । यथालाभं यथाप्राप्तम् । द्वित्रान्कतिचित् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

वालुकोपहितनवशरावगतमिति मृदुना तालवृन्तानिलेन शीतलीकृत्य सलवणसंभारं दत्ताङ्गारधूपवासं च संपाद्य, तदप्यामलकं श्लक्ष्णपिष्टमुत्पलगन्धि कृत्वा धात्रीमुखेन स्नानाय तमचोदयत्। तया च स्नानशुद्धया दत्ततैलामलकः क्रमेण सस्नौ। स्नातः सिक्तमृष्टे कुट्टिमे फलकमारुह्य पाण्डुहरितस्य त्रिभागशेषलूनस्याङ्गणकदलीपलाशस्योपरि दत्तशरावद्वयमार्द्रमभिमृशन्नतिष्ठत्। सा तु तां पेयामेवाग्रे समुपाहरत्। पीत्वा चापनीताध्वक्लमः प्रहृष्टः प्रक्लिन्नसकलगात्रः स्थितोऽभूत्। ततस्तस्य शाल्योदनस्य दर्वीद्वयं दत्त्वा सर्पिर्मात्रां सूपमुपदंशं चोपजहार। इमं च दध्ना च त्रिजातकावचूर्णितेन सुरभिशीतलाभ्यां च कालशेयकाञ्जिकाभ्यां शेषमन्नमभोजयत्। सशेष एवान्धस्यसावतृप्यत्। अयाचत च पानीयम्। अथ नवभृङ्गारसंभृतमगुरुधूपधूपितमभिनवपाटलाकुसुमवासितमुत्फुल्लोत्पलग्रथितसौरभं वारि नालीधारात्मना पातयांबभूव। सोऽपि मुखोपहित-

---

उपदंशान्व्यञ्जनानि। आर्द्रया वालुकया मृद्विशेषेणोपहिते कृते नवे नूतने शरावे वर्धमाने गतं स्थापितामित्यर्थः। तालवृन्तस्य व्यजनस्यानिलेन वायुना। लवणेन संभारेण हरिद्रामरिचादिचूर्णेन च सह वर्तत इति सलवणसंभारं तद्। श्लक्ष्णं मृदु यथा तथा पिष्टं चूर्णितम्। उत्पलस्येव गन्धोऽस्मिन्नस्तीति उत्पलगन्धि। 'उपमानाच्च' इति इदादेशः। स्नानाय स्नानं विधातुम्। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी। अचोदयत्प्रेषयामास। तया च वृद्धया। दत्तं तैलमामलकं च यस्मै सः। सस्नौ स्नानमाचचार। **स्नात इति**। कुट्टिमे परिष्कृतभूम्याम्। 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः। फलकमासनपीठम्। आरुह्य तदुपर्युपविश्य। त्रयो भागाः शेषाः यस्मिन्कर्मणि तथा लूनस्य छिन्नस्य। अङ्गणे गृहचत्वरे वर्तमानायाः कदल्याः पलाशस्य पत्रस्य। 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इत्यमरः। अभिमृशन्हस्तेन स्पृशन्। सा तु कन्या। पेयां ससिक्थाम्। 'सिक्थकै रहितो मण्डः पेया सिक्थसमन्विता। यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा' इति वैद्यकशास्त्रे। अग्रे आदौ। अपनीताध्वक्लमो गतमार्गश्रमः। प्रक्लिन्नं पेयापानात्स्वेदयुक्तं सकलं गात्रं यस्यैवंविधः। शाल्योदनस्य तण्डुलभक्तस्य। दर्वीद्वयं तत्परिमितमन्नमित्यर्थः। सर्पिर्मात्रां स्वल्पमाज्यम्। सूपं पक्वमाढकीदलम्। उपदंशं शाकादिव्यञ्जनम्। उपजहारानीतवती। त्रिजातकावचूर्णितेन त्रिजातकं कटुत्रयं तेनावचूर्णितेन आलोडितेन। सुरभिभ्यां वासिताभ्यां शीतलाभ्यां नात्युष्णाभ्यां च। कालशेयं गोरसः, काञ्जिकं तिन्तिणीचूर्णम्, ताभ्याम्। 'दण्डाहतं कालशेयमरिष्टमपि गोरसः' 'आरनालकसौवीरकुल्माषाभिषुतानि च। अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके' इत्यमरः। शेषमवशिष्टम्। अन्धस्यन्ने। 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः' इत्यमरः। असौ शक्तिकुमारः। अतृप्यत्संतुष्टो बभूव। पानीयं जलम्। नवे नूत्ने भृङ्गारे पात्रविशेषे संभृतं संचितम्। 'भृङ्गारः कनकालुका' इत्यमरः। अभिनवैः प्रत्यग्रैः पाटलाकुसुमैर्वासितं सुरभीकृतम्। उत्फुल्लैर्विकचैरुत्पलैः कमलैर्ग्रथितमुत्पादितं सौरभं वासना यस्यैवंविधम्। नालीधारात्मना भृङ्गार-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

शरावेण हिमशिशिरकणकरालितारुणायमानाक्षिपक्ष्मा धाराखाभिनन्दितश्रवणः स्पर्शसुखोद्भिन्नरोमाञ्चकर्कशकपोलः प्रवालोत्पीडपरिमलफुल्लघ्राणारन्ध्रो माधुर्यप्रकर्षावर्जितरसनेन्द्रियस्तदच्छं पानीयमाकण्ठं पपौ । शिरःकम्पसंज्ञावारिता च पुनरपरकरकेणाचमनमदत्त कन्या। वृद्धया तु तदुच्छिष्टमपोह्य हरितगोमयोपलिप्ते कुट्टिमे स्वमेवोत्तरीयकर्पटं व्यवधाय क्षणमशेत । परितुष्टश्च विधिवदुपयम्य कन्यां निन्ये। नीत्वैतदनपेक्षः कामपि गणिकामवरोधमकरोत्। तामप्यसौ प्रियसखीमिवोपाचरत्। पतिं च दैवतमिव मुक्ततन्द्रा पर्यचरत् । गृहकार्याणि चाहीनमन्वतिष्ठत्। परिजनं च दाक्षिण्यनिधिरात्माधीनमकरोत्। तद्गुणवशीकृतश्च भर्ता सर्वमेव कुटुम्बं तदायत्तमेव कृत्वा तदेकाधीनजीवितशरीरस्त्रिवर्गं निर्विवेश। तद्ब्रवीमि—'गृहिणः प्रियहिताय दारगुणाः' इति।

ततस्तेनानुयुक्तो निम्बवतीवृत्तमाख्यातवान्—'अस्ति सौराष्ट्रेषु वलभी नाम नगरी। तस्यां गृहगुप्तनाम्नो गुह्यकेन्द्रतुल्यविभवस्य नाविकपतेर्दुहिता रत्नवती नाम। तां किल मधुमत्याः समुपागम्य बलभद्रो नाम सार्थवाहपुत्रः पर्यणैषीत्। तयापि नववध्वा रहसि रभसविघ्नितसुरतसुखो झटिति द्वेषमल्पेतरं

---

च्छिद्रधारारूपेण। मुखे उपहितेन स्थापितेन शरावेण वर्धमानकेन। हिमवत्तुषारवच्छिशिरैः शीतलैः कणैर्जलबिन्दुभिः करालितानि व्याप्तान्यत एवारुणायमानानि रक्तीभूतान्याक्षिपक्ष्माणि नेत्रप्रान्तभागाः यस्यैवंविधः सन्। धारारवेण जलसंपातशब्देनाभिनन्दिते आह्लादिते श्रवणे कर्णौ यस्य तादृशः। स्पर्शसुखेनोद्भिन्नैः संजातै रोमाञ्चै रोमोद्गमैः कर्कशौ कठिनौ कपोलौ गण्डौ यस्य तथाविधः। प्रवालोत्पीडस्य किसलयशेखरस्य परिमलेन वासनाविशेषेण फुल्ले विकासिते तृप्ते इति यावत्तादृशे घ्राणरन्ध्रे नासाद्वारे यस्यैवंविधः। 'प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे' इति मेदिनी। माधुर्यप्रकर्षेण स्वादुतातिरेकेणावर्जितं सन्तोषितं रसनेन्द्रियं जिह्वा यस्यैवंभूतः। पूर्वोक्तविधया पञ्चानामपीन्द्रियाणामत्यानन्दं प्राप्तः सन्नित्यर्थः। अच्छं निर्मलम्। आकण्ठं कण्ठपर्यन्तम्। शिरःकम्परूपया संज्ञया संकेतेन वारिता जलधारापातनान्निषिद्धा। 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इत्यमरः। अपोह्य निष्कास्य। गोमयेन गोः पुरीषेण। 'गोश्च पुरीषे' इति मयट्। तेनोपलिप्ते संमृष्टे। उत्तरीयकर्पटेन जीर्णसंव्यानवासःखण्डेन। संव्यानमुत्तरीयं च' 'पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ' इत्यमरः। अशेत निद्रां चकार। उपयम्य परिणीय। **नीत्वेति**। एतस्यां कन्यायामनपेक्षः निरभिलाषः। गणिकां वारवधूम्। तामपि गणिकामपि। असौ विवाहिता कन्या। मुक्ततन्द्रा निरालस्या। अहीनमुत्तमप्रकारेण। आत्माधीनं स्ववशवर्तिनम्। तस्याः कन्याया गुणैर्वशीकृतः। तदायत्तं तदधीनम्। त्रिवर्गं धर्मार्थकामान्। 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः। निर्विवेशोपभुक्तवान्। 'निर्वेशो भृतिभोगयोः' इत्यमरः। दारगुणाः पत्नीगुणाः।

**तत इति**। वृत्तं चरितम्। गुह्यकेन्द्रः यक्षश्रेष्ठः कुबेरः तत्तुल्यविभवस्य तत्समानैश्वर्ययुक्तस्य। मधुमत्याः तन्नाम्न्या नगर्याः। पर्यणैषीद्विवाहितवान्। नववध्वा नवोढ-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

चबन्ध । न तां पुनर्द्रष्टुमिष्टवान् । तद्गृहागमनमपि सुहृद्वाक्यशतातिवर्ती लज्जया परिजहार । तां च दुर्भगां तदाप्रभृत्येव 'नेयं रत्नवती, निम्बवती चेयम्' इति स्वजनः परिजनश्च परिबभूव । गते च कस्मिंश्चित्कालान्तरे सा त्वनुतप्यमाना 'का मे गतिः' इति विमृशन्ती कामपि वृद्धप्रव्राजिकां मातृस्थानीयां देवशेषकुसुमैरुपस्थितामपश्यत् । तस्याः पुरो रहसि सकरुणं रुरोद । तयाप्यश्रुमुख्या बहुप्रकारमनुनीय रुदितकारणं पृष्टा त्रपमाणापि कार्यगौरवात्कथंचिदब्रवीत्—'अम्ब, किं ब्रवीमि दौर्भाग्यं नाम जीवन्मरणमेवाङ्गनानाम्, विशेषतश्च कुलवधूनाम् । तस्याहमस्म्युदाहरणभूता । मातृप्रमुखोऽपि ज्ञातिवर्गो मामवज्ञयैव पश्यति । तेन सुदृष्टां मां कुरु । न चेत्त्यजेयमद्यैव निष्प्रयोजनान्प्राणान् । आविरामाच्च मे रहस्यं नाश्राव्यम्' इति पादयोः पपात । सैनामुत्थाप्योद्बाष्पोवाच—'वत्से, माध्यवस्य साहसम् । इयमस्मि त्वन्निदेशवर्तिनी । यावति मयोपयोगस्तावति भवाम्यनन्याधीना । यद्येवासि निर्विण्णा तपश्चर त्वं मदधिष्ठिता पारलौकिकाय कल्याणाय । नन्वयमुदर्कः प्राक्तनस्य दुष्कृतस्य, यदनेनाकारेणेदृशेन शीलेन जात्या चैवंभूतया समनुगता सती अकस्मादेव भर्तृद्वेष्यतां गतासि । यदि कश्चिदस्त्युपायः पतिद्रोहप्रातिक्रियायै दर्शयामुम्, मतिर्हि ते पटीयसी' इति । अथासौ कथंचित्क्षणमधोमुखी ध्यात्वा दीर्घोष्णश्वासपूर्वमवोचत्— 'भगवति, पतिरेकदैवतं वनितानाम्, विशेषतः कुलजानाम् । अतस्तच्छुश्रूषणाभ्युपायहेतुभूतं किञ्चिदाचरणीयम् । अस्त्यस्मत्प्रातिवेश्यो वणिगभिजनेन विभवेन

---

भार्यया । रभसेन वेगेन विघ्नितं कृतान्तरायं सुरतसुखं यस्यैतादृशः सन् । झटित्याशु । द्वेषं मत्सरमल्पेतरमधिकम् । सुहृदां मित्राणां वाक्यशतमतिवर्तते उल्लङ्घ्य चरतीत्येवंशीलः । परिजहार परितत्याज । दुर्भगां भर्तृसौभाग्यरहिताम् । परिबभूवावमानितवान् । अनुतप्यमाना मनसि पश्चात्तापं विदधती । विमृशन्ती पर्यालोचयन्ती । वृद्धां स्थविरां परिव्राजिकां संन्यासिनीम् । देवशेषकुसुमैरीश्वरनिर्माल्यैः । पुरोऽग्रे । रुरोद क्रन्दति स्म । तया परिव्राजिकया । अनुनीय समाधाय । रुदितकारणं रोदनहेतुम् । त्रपमाणा लज्जमाना । 'त्रपूष् लज्जायाम्' । अङ्गनानां योषिताम् । कुलवधूनां सत्कुलप्रसूतानां सतीनामिति भावः । उदाहरणभूता दृष्टान्तभूता । मातृप्रमुखो जनन्यादिः । ज्ञातिवर्गो बन्धुसमूहः । अवज्ञयाऽनादरेण । तेन ज्ञातिवर्गेण पत्या वा । आविरामादेतत्कार्यावसानपर्यन्तम् । नाश्राव्यं कस्यापि निकटे न वक्तव्यम् । उद्बाष्पा उत्थिताश्रुजला । माऽध्यवस्य मा विधेहि । साहसं प्राणत्यागरूपं क्रूरं कर्म । त्वन्निदेशवर्तिनी तवाज्ञापालिका । नान्यस्य किन्तु तवैवाधीना वशा । निर्विण्णा वैराग्यवती । पारलौकिकाय परलोकभवाय कल्याणाय श्रेयसे । उदर्को भाविसुफलसूचकः 'उदर्कः फलमुत्तरम्' इत्यमरः । प्राक्तनस्य पूर्वमाचरितस्य । शीलेन स्वभावेन । अकस्मान्निर्निमित्तम् । भर्तुः द्वेष्यतामप्रीतिपात्रताम् । मतिर्बुद्धिः पटीयस्यतिनिपुणा । अथेति । असौ निम्बवती । वनितानां स्त्रीणाम् । आचरणीयं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

राजान्तरङ्गभावेन च सर्वपौरानतीत्य वर्तते । तस्य कन्या कनकवती नाम मत्समानरूपावयवया ममातिस्निग्धा सखी । तया सह तद्विमानहर्म्यतले ततोऽपि द्विगुणमण्डिता विहरिष्यामि । त्वया तु तन्मातृप्रार्थनं सकरुणमभिधाय मत्पतिरेतद्गृहं कथंचनानेयः । समीपगतेषु च युष्मासु क्रीडामत्ता नाम कन्दुकं भ्रंशयेयम् । अथ तमादाय तस्य हस्ते दत्त्वा वक्ष्यासि–' पुत्र , तवेयं भार्यासखी निधिपतिदत्तस्य सर्वश्रेष्ठिमुख्यस्य कन्या कनकवती नाम । त्वामियमनवस्थो निष्करुणश्चेति रत्नवतीनिमित्तमत्यर्थं निन्दति । तदेष कन्दुको विपक्षधनं प्रत्यर्पणीयम् ' इति । स तथोक्तो नियतमुन्मुखीभूय तामेव प्रियसखीं मन्यमानो मां बद्धाञ्जलि याचमानायै मह्यं भूयस्त्वत्प्रार्थितः साभिलाषमर्पयिष्यति । 'तेन रन्ध्रेणोपाश्लिष्य रागमुज्ज्वलीकृत्य यथासा कृतसङ्केतो देशान्तरमादाय मां गमिष्यति तथोपपादनीयम्' इति । हर्षाभ्युपेतया चानया तथैव संपादितम् । अथैतां कनकवतीति वृद्धतापसीविप्रलब्धो बलभद्रः सरत्नसाराभरणामादाय निशि नीरन्ध्रे तमसि प्रावसत् । सा तु तापसी वार्तामापादयत्–'मन्देन

---

कर्तव्यम् । अस्माकं प्रातिवेश्यः सम्मुखगृहवासी । वणिग्वाणिज्यकारी । अभिजनेन कुलेन । ' सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ' इत्यमरः । विभवेन संपदा । राज्ञोऽन्तरङ्गभावेन मित्रभूततया च । अतीत्यातिक्रम्य । तया कनकवत्या सह । तस्याः कनकवत्या विमानस्य सप्तप्रासादकगृहस्य हर्म्यतले प्रासादोपरिभागे । ' विमानो व्योमयाने च सप्तभूमिगृहेऽपि च । घोटके यानमात्रे च पुंनपुंसकयोर्मतः ' इति मेदिनी । ततोऽपि कनकवत्यपेक्षया । द्विगुणं यथा तथा मण्डिताऽलंकृता सती । तस्याः कनकवत्या मातुः । प्रार्थनं याच्ञाम् । कथंचन केनापि प्रकारेण । आनेयः इति व्याजेन प्रापणीयः । क्रीडामत्ता नाम कन्दुकक्रीडायामनवहितेव । भ्रंशयेयं निपातयेयम् । **अथेति** । तं कन्दुकमादायोत्क्षिप्य । तस्य मद्भर्तुः । वक्ष्यसि कथयिष्यासि । भार्यायाः सखी वयस्या । इयं कनकवती । अनवस्थो निर्मर्यादः । निष्करुणः अनपराधिन्याः स्वभार्यायास्त्यागाद्दयाशून्यः । रत्नवतीनिमित्तं रत्नवतीं त्वया त्यक्तां दृष्ट्वेत्यर्थः । अत्यर्थं बहु । विपक्षधनं शत्रुस्वम् । प्रत्यर्पणीयं प्रतिदेयम् । स मम भर्ता बलभद्रः । तथोक्तप्रकारेण वृद्धया त्वया कथितः । तामेव कनकवतीमेव । त्वया वृद्धया प्रार्थितः । साभिलाषं सस्नेहम् । अर्पयिष्यति कन्दुकं दास्यति । रन्ध्रेणोपायेन । उपश्लिष्य तस्य पत्युः संसर्गं प्राप्य । रागं ' नेयं पूर्वभार्या किन्तु अन्या तत्सखी' इति विचारेण मय्यासक्तिम् । असौ मत्पतिर्बलभद्रः । कृतसंकेतः मया सह देशान्तरगमनाय कृतसंज्ञः । उपपादनीयं कर्तव्यम् । हर्षेणानन्देन अभ्युपेतयाऽङ्गीकृतवत्या मदुक्तम् । अनया भिक्षुक्या । तथैव संपादितं मत्पतिरानीत इत्यर्थः । **अथैति** । एतां निम्बवतीम् । वृद्धतापस्या विप्रलब्धो वञ्चितः । सरत्नसाराभरणां रत्नखचितमुख्यालंकारसहिताम् । नीरन्ध्रे निविडे तमस्यन्धकारे । प्रावसद्देशान्तरं गतः। वार्तां जनश्रुतिम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मया निर्निमित्तमुपेक्षिता रत्नवती, श्वशुरौ च परिभूतौ, सुहृदश्चातिवर्तिताः। तदत्रैव संसृष्टो जीवितुं जिह्रेमीति बलभद्रः पूर्वेद्युर्मामकथयत्। नूनमसौ तेन नीता व्यक्तिश्चाचिराद्भविष्यति' इति। तच्छ्रुत्वा तद्बान्धवास्तदन्वेषणां प्रति शिथिलयत्नास्तस्थुः। रत्नवती तु मार्गे कांचित्पण्यदासीं संगृह्य तयोह्यमानपाथेयाद्युपस्करा खेटकपुरमगमत्। अमुत्र च व्यवहारकुशलो बलभद्रः स्वल्पेनैव मूलेन महद्धनमुपार्जयत्। पौराग्रगण्यश्चासीत्। परिजनश्च भूयानर्थवशात्समाजगाम। ततस्तां प्रथमदासीम् 'न कर्म करोषि, दृष्टं मुष्णासि, अप्रियं ब्रवीषि' इति परुषमुक्त्वा बह्वताडयत्। चेटी तु प्रसादकालोपाख्यातरहस्यस्य वृत्तान्तैकदेशमात्तरोषा निर्बिभेद। तच्छ्रुत्वा लुब्धेन तु दण्डवाहिना पौरवृद्धसंनिधौ निधिपतिदत्तस्य कन्यां कनकवतीं मोषेणापहृत्यास्मत्पुरे निवसत्येष दुर्मतिर्बलभद्रः। तस्य सर्वस्वहरणं न भवद्भिः प्रतिबन्धनीयम्' इति नितरामभर्त्स्यत। भीतं च बलभद्रमभिजगाद रत्नवती—'न भेतव्यम्। ब्रूहि, नेयं निधिपतिदत्तकन्या कनकवती। बलभ्यामेव गृहगुप्तदुहिता रत्नवती नामेयं दत्ता पितृभ्यां मया च न्यायोढा। न चेत्प्रतीथ प्रणिधिं प्रहिणुतास्या बन्धुपार्श्वम्' इति। बलभद्रस्तु

---

निर्निमित्तं निष्कारणम्। उपेक्षिता परित्यक्ताऽसीत्। श्वशुरौ जायामातापितरौ। 'श्वशुरः श्वश्र्वा' इत्येकशेषः। परिभूतावनादृतौ। अतिवर्तिता उपेक्षिताः। अत्रैवास्मिन्नेव देशे। संसृष्टः श्वशुरादिभिः संगतः। जिह्रेमि लज्जां प्राप्नोमि। 'ह्री लज्जायाम्'। पूर्वेद्युः पूर्वस्मिन्नहनि। नूनं निश्चयेन। असौ व्यक्तिः निम्बवती। तेन बलभद्रेण। तस्याः निम्बवत्या अन्वेषणां मार्गणां प्रति शिथिलयत्ना निरुद्योगाः। **रत्नवती त्विति**। पण्यदासीं क्रयगृहीतां परिचारिकाम्। उह्यमानः धार्यमाणः पथि साधु पाथेयं 'पथ्यतिथि–' इति ढञ्। तदादिरुपस्करो यात्राभाण्डं यस्यां एवंभूता सती। खेटकपुरं साधारणग्रामम्। अमुत्र तस्मिन्ग्रामे। व्यवहारे वाणिज्यकर्मणि कुशलो निपुणः। मूलेन मूलद्रव्येण। उपार्जयत्संपादयामास। पौरेषु नगरवासिषु मध्ये अग्रगण्यः श्रेष्ठः। भूयान्बहुलः। अर्थवशात् धनाढ्यतया। समाजगाम 'सर्वे जनाः काञ्चनमाश्रयन्ति' इति न्यायेन तमाश्रित्यातिष्ठन्। प्रथमदासीं पण्यक्रीतां परिचारिकाम्। कर्म गृहकृत्यम्। दृष्टं पश्यतोऽप्यस्माननादृत्येति भावः। मुष्णासि चोरयसि। 'मुष स्तेये' परुषं कर्णकठोरम्। अताडयत्प्राहरत्। चेटी दासी। प्रसादकाले प्रसन्नावस्थायामुपाख्यातस्य दासीनिकटे रत्नवत्यैव प्रकाशितस्य रहस्यस्य गोप्यविषयस्य। आत्तरोषा जातकोपा। निर्बिभेद बहिः प्रकाशयामास। **तच्छ्रुत्वेति**। लुब्धेन किंचिद्धनग्रहणेच्छुना। दण्डवाहिना दण्डाधिकारिणा। मोषेण चौर्येण। न प्रतिबन्धनीयं न निवारणीयम्। अभर्त्स्यत भयं प्रापितः। अभिजगाद कथयामास। न भेतव्यं भीतिर्न कार्या। ब्रूहि सर्वजनसमक्षं कथय। इयं मद्गृहवर्तिनी कन्या। वलभ्यामेव तदाख्यनगर्यामेव। गृहगुप्तस्यैतदाख्यस्य निधिपतिदत्तव्यतिरिक्तस्य कस्यचिच्छ्रेष्ठिनो दुहिता कन्या। दत्ता विवाहविध्यनुसारेणार्पिता। न्यायेनोढा परिणीता। न चेत्प्रतीथ यूयं यदि न



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तथोक्त्वा श्रेणीप्रातिभाव्येन तावदवातिष्ठत यावत्तत्पुरवृद्धलेख्यलब्धवृत्तान्तो गृहगुप्तः खेटकपुरमागत्य सह जामात्रा दुहितरमतिप्रीतः प्रत्यनैषीत् । तथा दृष्ट्वा रत्नवतीं कनकवतीति भावयतस्तस्यैव बलभद्रस्यातिवल्लभा जाता । तद्ब्रवीमि— 'कामो नाम संकल्पः' इति ।

तदनन्तरमसौ नितम्बवतीवृत्तान्तमप्राक्षीत् । सोऽहमब्रवम्--'अस्ति शूरसेनेषु मथुरा नाम नगरी । तत्र कश्चित्कुलपुत्रः कलासु गणिकासु चातिरक्तः मित्रार्थं स्वभुजमात्रनिर्व्यूढानेककलहः, कलहकण्टक इति कर्कशैरभिख्यापिताख्यः प्रत्यवात्सीत् । स चैकदा कस्यचिदागन्तोश्चित्रकरस्य हस्ते चित्रपटं ददर्श । तत्र काचिदालेख्यगता युवतिरालोकमात्रेणैव कलहकण्टकस्य कामातुरं चेतश्चकार । स च तमब्रवीत्—'भद्र, विरुद्धमिवैतत्प्रतिभाति यतः कुलजादुर्लभं वपुः, आभिजात्यशंसिनी च न [illegible]ता.पाण्डुर [illegible]:, अनतिपरिभुक्तसुभगा च तनुः, प्रौढतानुविद्धा च दृष्टिः। [illegible] चैषा प्रोषितभर्तृका, प्रवासचिह्नस्य वेण्यादेरदर्श-

---

विश्वसिथ । प्रणिधिं गूढपुरुषम् । 'प्रणिधिरपसर्पश्चरः स्पशः' इत्यमरः । श्रेण्याः निजवणिग्गोष्ठ्याः प्रातिभाव्येन प्रतिनिधिभावेन । तावत्तावद्दिनपर्यन्तम् । अवातिष्ठतावस्थितः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । तत्पुरवृद्धस्य खेटकग्राममुख्यस्य लेख्येन पत्रिकया लब्धवृत्तान्तो ज्ञातसमाचारः । गृहगुप्तः रत्नवतीपिता । जामात्रा कन्यापत्या बलभद्रेण । दुहितरं कन्यां रत्नवतीम् । प्रत्यनैषीत्पुनः स्वनगरमानयामास । तथा दृष्ट्वा निधिपतिदत्तविमानोपरितलासीनां विलोक्य । भावयतो विचारयतः । अतिवल्लभा नितरां प्रीतिभाजनम् । संकल्पो मनोनिर्धारणम् ।

**तदनन्तरमिति** । असौ ब्रह्मराक्षसः । अप्राक्षीदन्वयुक्त । अहं मित्रगुप्तः । शूरसेनेषु तन्नामकदेशेषु । कुलपुत्रः शूद्रः । 'कुलपुत्रः कुलीने च शूद्रे च' इति वैजयन्ती । कलासु चतुःषष्टिसंख्यासु । गणिकासु वारनारीषु । मित्रार्थं मित्राण्युद्दिश्य । स्वभुजमात्रेणात्मीयेनैकेन भुजेनैव निर्व्यूढाः सोढाः अनेके कलहा येनैवंविधः । अत एव 'कलहकण्टकः' रणकर्कशः इति कर्कशैः क्रूरपुरुषैरभिख्यापिताख्यः प्रसिद्धीकृतनामा । प्रत्यावात्सीत्प्रतिवसति स्म । आगन्तोर्देशान्तरादागतस्यातिथेः । चित्रकरस्य चित्रलेखकस्य । तत्र चित्रपटे । आलेख्यगता चित्रलिखिता । आलोकमात्रेण दर्शनेनैव । कामातुरं कामपीडितम् । **स चेति** । कलहकण्टकः । तमागन्तुकम् । विरुद्धं विपरीतम् । कुलजानां सत्कुलोत्पन्नानां दुर्लभं दुष्प्रापम् । वपुः शरीरम् । आभिजात्यं कुलीनतां शंसति प्रकटयत्येवंशीला । 'अभिजातः कुलीनः स्यात्' इत्यमरः । नम्रता विनीतता । पाण्डुरा धवला । मुखच्छविरास्यकान्तिः । अनतिपरिभुक्ता स्वल्पमेवोपभुक्ताऽतः सुभगा च तनुः शरीरम् । प्रौढतया प्रौढावस्थायोग्यशृङ्गारचेष्टयाऽनुविद्धा युक्ता । 'आषोडशाद्भवेद्बाला तरुणी त्रिंशता मता । पञ्चपञ्चाशता प्रौढा वृद्धा स्यात्तु ततः परम्' इति वचनादतिक्रान्तत्रिंशद्वयस्का प्रौढा । प्रोषितः देशान्तरं प्राप्तो भर्ता यस्याः सा प्रोषितभर्तृका । 'नद्यृतश्च' इति कप् । प्रवासचिह्नस्य 'हास्यं परगृहे यानं समाजोत्सवदर्शनम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

नात् । लक्ष्म चैतद्दक्षिणपार्श्ववर्ति । तदियं वृद्धस्य कस्यचिद्वणिजो नातिपुंस्त्वस्य यथार्हसंभोगालाभपीडिता गृहिणी त्वयातिकौशलाद्यथादृष्टमालिखिता भवितुमर्हति' इति । स तमभिप्रशस्याशंसत्–'सत्यमिदम् । अवन्तिपुर्यामुज्जयिन्यामनन्तकीर्तिनाम्नः सार्थवाहस्य भार्या यथार्थनामा नितम्बवती नामैषा सौन्दर्यविस्मितेन मयैवमालिखिता' इति । स तदैवोन्मनायमानस्तद्दर्शनाय परिवव्राजोज्जयिनीम् । भार्गवो नाम भूत्वा भिक्षानिभेन तद्गृहं प्रविश्य तां ददर्श । दृष्ट्वा चात्यारूढमन्मथो निर्गत्य पौरमुख्येभ्यः श्मशानरक्षामयाचत । अलभत च । तत्र लब्धैश्च शवावगुण्ठनपटादिभिः कामप्यर्हन्तिकां नाम श्रमणिकामुपासांचक्रे। तन्मुखेन च नितम्बवतीमुपांशु मन्त्रयामास । सा चैनां निर्भर्त्सयन्ती प्रत्याचचक्षे । श्रमणिकामुखाच्च दुष्करशीलभ्रंशां कुलस्त्रियमुपलभ्य रहसि दूतिकामशिक्षयत्–'भूयोऽप्युपतिष्ठ सार्थवाहभार्याम् । ब्रूहि चोपह्वरे संसारदोषदर्शनात्समाधिमास्थाय मुमुक्षमाणो मादृशो जनः कुलवधूनां शीलपातने घटत इति क्व घटते । एतदपि त्वामप्युदारया समृद्ध्या रूपेणातिमानुषेण प्रथमेन वयसोपपन्नां

---

क्रीडां शरीरसंस्कारं त्यजेत्प्रोषितभर्तृका ॥' इत्यादिनोक्तस्य पतिप्रवासलक्षणस्य । वेण्यादेः वेणीरूपेण केशबन्धनादेः । 'वेणी कचस्य बन्धे स्यान्नदीनां सङ्गमेऽपि च' इति विश्वः । लक्ष्म चिह्नम् । 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । तत्तस्मात्कारणात् । वृद्धस्यातिक्रान्तयौवनस्य । नातिपुंस्त्वं यस्यैवंविधस्य । यथार्हस्य तारुण्ययोग्यस्य संभोगस्य सुरतस्यालाभेनाप्राप्तेः पीडिता खिन्ना । गृहिणी भार्या । यथादृष्टा तथा यथादृष्टम् । आलिखिता चित्रिता । स चित्रकारः । तं कलहकण्टकम् । अभिप्रशस्य श्लाघित्वा । अशंसत्कथयामास । सार्थवाहस्य वणिजः । यथार्थनामा नितम्बवती पृथुलनितम्बत्वात्तेनैव नाम्ना विख्याता । सौन्दर्येण तल्लावण्येन विस्मितेनाश्चर्ययुक्तेन । स कलहकण्टकः । उन्मनायमानः उत्सुकः सन् । 'उत्क उन्मनाः' इत्यमरः । तद्दर्शनाय नितम्बवतीमवलोकयितुम् । परिवव्राज प्रतस्थे । भार्गवो नाम ज्यौतिषिक इव । 'भार्गवौ शुक्रदैवज्ञौ' इति वैजयन्ती । भिक्षानिभेन भिक्षाव्याजेन । 'निभो व्याजसदृक्षयोः' इति विश्वः । अत्यारूढमन्मथो निर्मर्यादमुत्पन्नकामः । श्मशानरक्षां पितृवनपालनम् । तत्र पितृवने । शवावगुण्ठनपटादिभिर्मृतशरीराच्छादनचेलादिभिः, श्रमणिकां बौद्धसंन्यासिनीम् । उपांशु रहसि । **सा चेति** । नितम्बवती । एनामर्हन्तिकाम् । प्रत्याचचक्षे प्रत्याख्यातवती । दुष्करः कष्टेनाप्यसंपाद्यः शीलात्स्वभावाद्भ्रंशो यस्या एवंशीलाम् । उपलभ्य ज्ञात्वा । भूयोऽपि पुनरपि । उपह्वरे एकान्ते । संसारे पुत्रकलत्रादिरूपप्रपञ्चे दोषाणां बहूनां दर्शनादनुभवात् । समाधिं यमनियमादिम् । मुमुक्षमाणः मोक्षेच्छुः । शीलपातने स्वभावपरित्याजने । घटते प्रयतते । क्व घटते कदाऽप्यसंभावितमेतदित्यर्थः । एतदपि पूर्वमुक्तमस्मद्वचनमित्यर्थः । उदारया महत्या । 'उदारो दातृमहतोः' इत्यमरः । प्रथमेन वयसा तारुण्ये-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

किमितरनारीसुलभं चापलं स्पृष्टं न वेति परीक्षा कृता । तुष्टास्मि तथैवमदुष्टभावतया । त्वामिदानीमुत्पन्नापत्यां द्रष्टुमिच्छामि । भर्ता तु भवत्याः केनचिद् ग्रहेणाधिष्ठितः पाण्डुरोगदुर्बलो भोगे चासमर्थः स्थितोऽभूत् । न च शक्यं तस्य विघ्नमप्रतिकृत्यापत्यमस्माल्लब्धुम् । अतः प्रसीद । वृक्षवाटिकामेकाकिनी प्रविश्य मदुपनीतस्य कस्याचिन्मंत्रवादिनश्छन्नमेव हस्ते चरणमर्पयित्वा तदभिमन्त्रितेन प्रणयकुपिता नाम भूत्वा भर्तारमुरसि प्रहर्तुमर्हसि । उपर्यसावुत्तमधातुपुष्टिमूर्जितापत्योत्पादनक्षमामासादयिष्यति । अनुवर्तिष्यते देवीमिवात्र भवतीम् । नात्र शङ्का कार्या ' इति । सा तथोक्ता व्यक्तमभ्युपैष्यति नक्तं मां वृक्षवाटिकां प्रवेश्य तामपि प्रवेशयिष्यसि तावतैव त्वयाहमनुगृहीतो भवेयम् ' इति । सा तथैवोपग्राहितवती । सोऽतिप्रीतस्तस्यामेव क्षपायां वृक्षवाटिकायां गतो नितम्बवतीं निर्ग्रन्थिकाप्रयत्नेनोपनीतां पादे परामृशन्निव हेमनूपुरमेकमाक्षिप्य छुरिकयोरुमूले किंचिदालिख्य द्रुततरमपासरत् । सा तु सान्द्रत्रासा स्वमेव दुर्णयं गर्हमाणा जिघांसन्तीव श्रमणिकां तद्व्रणं भवनदीर्घिकायां प्रक्षाल्य दत्त्वा पटबन्धनमामयापदेशादपरं चापनीय नूपुरं शयनपरा त्रिचतुराणि दिनान्येकान्ते निन्ये । स धूर्तः ' विक्रेष्ये ' इति तेन नूपुरेण तमनन्तकीर्तिमुपाससाद । स दृष्ट्वा ' मम गृहिण्या एवैष

---

नेत्यर्थः । इतरनारीसुलभमन्यकामिनीसाधारणम् । चापलं बुद्धिचाञ्चल्यम् । अदुष्टभावतया साध्वाशयतया, उत्पन्नापत्यां जातापत्याम् । पाण्डुरोगेण क्षयविशेषेण दुर्बलो निरिन्द्रियः । भोगे सुरतकर्मणि । तस्य पुत्राविर्भावस्य विघ्नमन्तरायमप्रतिकृत्यापरिहृत्य । वृक्षवाटिकामुपवनम् । मयोपनीतस्य प्रापितस्य, छन्नं गुप्तं यथा तथा । प्रणयकुपिता नाम कलहान्तरितेव । उरसि वक्षसि । प्रहर्तुं ताडयितुम् । उपरि पादप्रहारेण दुर्ग्रहस्य दूरीकरणानन्तरम् । असौ ते भर्ता । ऊर्जितानां वलिष्ठानामपत्यानामुत्पादेन क्षमां समर्थाम् । आसादयिष्यति प्राप्स्यति । अनुवर्तिष्यतेऽनुकूलनायको भविष्यति । शंका संदेहः । **सेति** । नितम्बवती । व्यक्तं स्फुटम् । अभ्युपैष्यत्यङ्गीकरिष्यति । नक्तं रात्रौ । तावतैवैतत्कार्येणैव । साऽर्हन्तिका । उपग्राहितवती ऊरीकारयामास । स कलहकण्टकः । क्षपायां निशि । निर्ग्रन्थिकायाः श्रमणिकायाः प्रयत्नेनोपनीतामानीताम् । परामृशन्निव मन्त्रोच्चारणार्थं स्पृशन्निव । हेमनूपुरं सुवर्णमयं पादकटकम् । ' पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ' इत्यमरः । आक्षिप्यादाय । छुरिकयाऽल्पशस्त्रेण । द्रुततरमतिशीघ्रम् । अपासरत्पलायिष्ट । सा नितम्बवती । सान्द्रत्रासा गाढभया । दुर्णयं दुष्टव्यवहारम् । गर्हमाणा निन्दन्ती । जिघांसन्ती हन्तुमिच्छन्तीव । तद्व्रणं शस्त्रक्षतमूरुस्थलम् । भवनदीर्घिकायां गृहवापिकायां ' वापी तु दीर्घिका ' इत्यमरः । पटबन्धनं वस्त्रखण्डेन वेष्टनम् । आमयापदेशात् 'पादे कोऽपि रोगो जातः' इति व्याजेन । अपनीय निष्कास्य । निन्ये यापयामास । स धूर्तः कलहकण्टकः । विक्रेष्य मौल्यग्रहणेनेमं नूपुरं दास्यामि । अनन्तकीर्तिं नितम्ब-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

नूपुरः, कथमयमुपलब्धस्त्वया' इति तमनुवाणं निर्बन्धेन पप्रच्छ । स तु 'वणिग्ग्रामस्याग्रे वक्ष्यामि' इति स्थितोऽभूत् । पुनरसौ गृहिण्यै 'स्वनूपुरयुगलं प्रेषय' इति संदिदेश । सा च सलज्जं ससाध्वसं चाद्य रात्रौ विश्रामप्रविष्टायां वृक्षवाटिकायां प्रभ्रष्टो ममैकः प्रशिथिलबन्धो नूपुरः । सोऽन्वाप्यन्विष्टो न दृष्टः । स पुनरयं द्वितीय इत्यपरं प्राहिणोत् । अनया च वार्तयामुं पुरस्कृत्य स वणिक् वणिग्जनसमाजमाजगाम । स चानुयुक्तो धूर्तः सविनयमावेदयत्—'विदितमेव खलु वः, यथाहं युष्मदाज्ञया पितृवनमभिरक्ष्य तदुपजीवी प्रतिवसामि । लुब्धाश्च कदाचिन्मद्दर्शनभीरवो निशि दहेयुरपि शवानीति निशास्वपि श्मशानमधिशये । अपरेद्युर्दग्धादग्धं मृतकं चितायाः प्रसभमाकर्षन्तीं श्यामाकारां नारीमपश्यम् । अर्थलोभात्तु निगृह्य साध्वसं सा गृहीता शस्त्रिकयोरुमूले यदृच्छया किंचिदुल्लिखितम् । एष च नूपुरश्चरणादाक्षिप्तः । तावत्येव द्रुतगतिः सा पलायिष्ट । सोऽयमस्यागमः । परं भवन्तः प्रमाणम्' इति । विमर्शेन च तस्याः शाकिनीत्वमैकमत्येन पौराणामभिमतमासीत् । भर्त्रा च परित्यक्ता तस्मिन्नेव श्मशाने बहु विलप्य पाशेनोद्बध्य मर्तुकामा तेन धूर्तेन नक्तमगृह्यत । अनुनीता च सुन्दरि, त्वदाकारोन्मादितेन मया त्वदावर्जने बहूनुपायान्भिक्षुकीमुखेनोपन्यस्य तेष्वसिद्धेषु पुनरयमुपायो यावज्जीवमसाधारणीकृत्य रन्तुमाचरितः ।

---

त्या एव भर्तारम् । उपाससाद प्राप्तवान् । निर्बन्धेनाग्रहातिशयेन । वणिग्ग्रामस्य सार्थवाहसमाजस्य । ससाध्वसं भयसहितम् । विश्रामप्रविष्टायां विश्रामार्थं प्रविष्टायाम् । प्रभ्रष्टः पादात्पतितः । प्रशिथिलबन्धः श्लथसंनहनः । प्राहिणोत्प्रेषयामास । अनया च वार्तया 'मद्गृहिण्याः पाददेको नूपुरः श्वो रात्रा वृक्षवाटिकायां विश्रामप्रविष्टायां दैववशात्पतितः, स चानेनोपलब्धः, नायं च दातुमिच्छति' इत्येवंरूपया । अमुं कलहकण्टकम् । अनुयुक्तः पृष्टः । आवेदयन्नूपुरप्राप्तिमाख्यातवान् । लुब्धाः राजग्राह्यकरप्रदानेऽनिच्छावन्तः । भीरवो भीताः । दहेयुः शवसंस्कारं कुर्युः । अपीति संभावनायाम् । अधिशये तत्रैव श्मशाने शयनं करोमि । दग्धादग्धमर्धदग्धम् । चितायाः काष्ठसंचयात् । प्रसभं बलात् । आकर्षन्तीं बहिर्निष्कासयन्तीम् । श्यामाकारां मध्यतारुण्ययुक्ताम् । 'श्यामा यौवनमध्यस्था' इत्यमरः । अर्थलोभात् श्मशाने देयद्रव्यलोभात् । निगृह्य साध्वसं भयं त्यक्त्वा । चरणात्पादात् । आक्षिप्तो बलाद्गृहीतः । तावत्येव तत्क्षणे एव । अस्य नूपुरस्यागमः प्राप्तिप्रकारः । विमर्शेन विचारेण । तस्याः श्मशानागतायाः शाकिनीत्वं भूतविशेषत्वम् । ऐकमत्येन चित्तैकभावेन । अभिमतं संमतम् । भर्त्राऽनन्तकीर्तिना । विलप्य रोदनं कृत्वा । उद्बध्य गलबन्धनं रचयित्वा अनुनीता सान्त्विता । **सुन्दरीति** । हे नितम्बवति । तवाकारेण सौन्दर्येणोन्मादितेनोन्मादाख्यां कामावस्थां गतेन । तवावर्जने वशीकरणे । उपन्यस्य

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तत्प्रसीदानन्यशरणायास्मै दासजनाय ' इति मुहुर्मुहुश्चरणयोर्निपत्य, प्रयुज्य सान्त्वशतानि, तामगत्यन्तरामात्मवश्यामकरोत् । तादिदमुक्तम्–' दुष्करसाधनं प्रज्ञा' इति ।

इदमाकर्ण्य ब्रह्मराक्षसो मामपूपुजत् । अस्मिन्नेव क्षणे नातिप्रौढपुंनागमुकुलस्थूलानि मुक्ताफलानि सह सलिलबिन्दुभिरम्बरतलादपतन् । अहं तु ' किंन्विदम्' इत्युच्चक्षुरालोकयन्कमपि राक्षसं कांचिदङ्गनां विचेष्टमानगात्रीमाकर्षन्तमपश्यम् । कथमपहरत्यकामामपि स्त्रियमनाचारो नैर्ऋतः इति गगनगमनमन्दशक्तिरशस्त्रश्चातप्ये । स तु मत्संबन्धी ब्रह्मराक्षसः ' तिष्ठ तिष्ठ पाप, क्वापहरसि' इति भर्त्सयन्नुत्थाय राक्षसेन समसृज्यत । तां तु रोषादनपेक्षापविद्धाममरवृक्षमञ्जरीमिवान्तरिक्षादापतन्तीमुन्मुखप्रसारितोभयकरः कराभ्यामग्रहीषम् । उपगृह्य च वेपमानां संमीलिताक्षीं मदङ्गस्पर्शसुखेनोद्भिन्नरोमाञ्चां तादृशीमेव तामनवतारयन्नातिष्ठम् । तावत्तावुभावपि शैलशृङ्गभङ्गैः पादपैश्च रभसोन्मूलितैर्मुष्टिपादप्रहारैश्च परस्परमक्षपयेताम् । पुनरहमतिमृदुनि पुलिनवति कुसुमलवलाञ्छिते सरस्तीरेऽवरोप्य सस्पृहं निर्वर्णयंस्तां मत्प्राणैकवल्लभां राजकन्यां कन्दुकावतीमलक्षयम् । सा हि मया समाश्वास्यमाना तिर्यङ्मामभिनिरूप्य जातप्रत्यभिज्ञा सकरुणमरोदीत् । अवादीच्च–'नाथ, त्वद्दर्शनादुपोढरागा तस्मिन्कन्दुकोत्सवे पुनः सख्या चन्द्रसेनाय त्वत्कथाभिरेव समाश्वासितास्मि । त्वं किल समुद्रमध्ये मज्जितः पापेन मद्भ्रात्रा भीमधन्वना' इति

---

मन्त्रयित्वा । असाधारणीकृत्य त्वां ममैवाधीनां विधाय । सान्त्वशतानि सामवाक्यजालम् । दुष्करस्यापि कार्यस्य साधनं घटकम् । प्रज्ञा बुद्धिविशेषः ।

**इदमिति** । राक्षसकृतानां प्रश्नानामुत्तरमुदाहरणं च । अपूपुजद्बहुमानितवान् । नातिप्रौढानि अत्यन्तपरिणतानि यानि पुंनागस्य मुकुलानि कुड्मलानि तद्वत् स्थूलानि पृथूनि । सलिलबिन्दुभिर्जलकणैः । अम्बरतलादाकाशात् । अहं मित्रगुप्तः । विचेष्टमानगात्रीं प्रवेपमानावयवाम् । अकामामनासक्ताम् । नैर्ऋतो राक्षसः । गगनगमने वियदुत्पतने मन्दगतिरसमर्थः । अतप्ये किं मयाऽद्य कर्तव्यमिति चिन्ताकुलोऽभूवम् । पाप दुराचार । समसृज्यत युद्धाय संसृष्टोऽभूत् । रोषात्कोपात् । अनपेक्षयोपेक्षणेनापविद्धां त्यक्ताम् । अमरवृक्षस्य कल्पद्रुमस्य मञ्जरीं वल्लरीमिव । अन्तरिक्षान्नभसः । ' नभोऽन्तरिक्षं गगनम् ' इत्यमरः । वेपमानां कम्पिताङ्गीम् । उद्भिन्नरोमाञ्चां संजातपुलकाम् । अनवतारयन्भूतले न विन्यस्यन् । तौ राक्षसौ । शैलशृङ्गस्य पर्वतशिखरस्य भङ्गैः खण्डैः । पादपैः वृक्षैश्च । रभसेन वेगेनोन्मूलितैरुत्पाटितैः । परस्परमक्षपयेतां विनाशयामासतुः । द्वावपि मृताविति भावः । पुलिनवति सिकताप्रचुरे । कुसुमलवैः पुष्पलेशैर्लाञ्छिते लक्षिते । अवरोप्य हस्ताद्विन्यस्य । सस्पृहं साभिलाषं निर्वर्णयन्पश्यन् । **सा हीति** । तिर्यगीषद्वक्रदृष्ट्या । अभिनिरूप्य दृष्ट्वा । जाता प्रत्यभिज्ञा ' ममैवायं प्राणकान्तः इत्याकारकं ज्ञानं यस्यास्तादृशी सती । उपोढरागा प्रवृद्धानुरागा । समाश्वासिता समाहिता । समुद्रमध्ये जल-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

श्रुत्वा सखीजनं परिजनं च वञ्चयित्वा जीवितं जिहासुरेकाकिनी क्रीडावनमुपागमम् । तत्र च मामचकमत कामरूप एष राक्षसाधमः । सोऽयं मया भीतयावधूतप्रार्थनः स्फुरन्तीं मां निगृह्याभ्यधावत् । अत्रैवमवसितोऽभूत् । 'अहं च दैवात्तवैव जीवितेशस्य हस्ते पतिता । भद्रं तव' इति । श्रुत्वा च तया सहावरुह्य, नावमध्यारोहम् । मुक्ता च नौः प्रतिवातप्रेरिता तामेव दामलिप्तां प्रत्युपातिष्ठत् । अवरूढाश्च वयमश्रमेण ' तनयस्य च तनयायाश्च नाशादनन्यापत्यस्तुङ्गधन्वा सुह्मपतिर्निष्कलः स्वयं सकलत्र एव निष्कलङ्कगङ्गारोधस्यनशनेनोपरन्तुं प्रतिष्ठते । सह तेन मर्तुमिच्छत्यनन्यनाथोऽनुरक्तः पौरवृद्धलोकः ' इत्यश्रुमुखीनां प्रजानामाक्रन्दमश्रृणुम । अथाहमस्मै राज्ञे यथावृत्तमाख्याय तदपत्यद्वयं प्रत्यर्पितवान् । प्रीतेन तेन जामाता कृतोऽस्मि दामलिप्तेश्वरेण । तत्पुत्रो मदनुजीवी जातः । मदाज्ञप्तेन चामुना प्राणवदुज्झिता चन्द्रसेना कोशदासमभजत् । ततश्च सिंहवर्मसाहाय्यार्थमत्रागत्य भर्तुस्तव दर्शनोत्सवसुखमनुभवामि' इति ।

श्रुत्वा ' चित्रेयं दैवगतिः । अवसरेषु पुष्कलः पुरुषकारः' इत्यभिधाय भूयः स्मिताभिषिक्तदन्तच्छदो मन्त्रगुप्ते हर्षोत्फुल्लं चक्षुः पातयामास देवो राजवाहनः । स किल करकमलेन किंचित्संवृताननो ललितवल्लभारभसदत्तदन्तक्षतव्यसनविह्वलाधरमणिर्निरोष्ठ्यवर्णमात्मचरितमाचचक्षे ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते मित्रगुप्तचरितं नाम षष्ठ उच्छ्वासः ॥ ६ ॥

---

ध्यन्तराले । मज्जितः प्लावितः । पापेन दुष्टेन । वञ्चयित्वा प्रतार्य । जिहासुस्त्यक्तुमिच्छन्ती । ' ओहाक् त्यागे ' । एकाकिन्यसहाया । अचकमत कामयते स्म । णिङभावपक्षे 'कमेश्च्लेश्चङ् वक्तव्यः ' इति चङि रूपम् । कामरुपो मायावी । अवधूतप्रार्थनस्तिरस्कृतयाच्ञावचनः । स्फुरन्तीं कम्पमानाम् । निगृह्य बलाद्गृहीत्वा । अवसितो मृतोऽभूत् । भद्रं कुशलम् । अश्रमेणानायासेन । तनयस्य भीमधन्वनः पुत्रस्य, तनयायाः कन्यायाः कन्दुकावत्याः नाशाद्दर्शनात् । अनन्यापत्यः विन्ध्यवासिन्यनुग्रहलब्धापत्यद्वयव्यतिरिक्तापत्यरहितः । निष्कलो वृद्धः । निष्कलङ्के निष्पापे गङ्गारोधसि भागीरथीतीरे । अनशनेन व्रतविशेषेण । उपरन्तुं मर्तुम् । आक्रन्दं विलापम् । तत्पुत्रो भीमधन्वा । उज्झिता त्यक्ता ।

**श्रुत्वेति** । चित्राऽऽश्चर्यकारिणी । पुष्कलः संपूर्णः । पुरुषकारो धैर्यमित्यर्थः । हर्षेणोत्फुल्लं विकसितम् । स मित्रगुप्तः । किंचित्संवृताननः ईषदाच्छादितवदनः । ललिताया सुन्दर्या वल्लभया कान्तया रभसेन हठाद्दत्तेन दन्तक्षतव्यसनेन दन्तखण्डनव्यापारेण विह्वलः खिन्नोऽधरमणिर्यस्यैवंभूतः । निरोष्ठ्यवर्णम् ओष्ठे भवा ओष्ठ्याः ' शरीरावयवाच्च ' इति यत् तादृशा वर्णा अक्षराणि पवर्गादीनि निर्गतानि यस्मादेतादृश आत्मनश्चरितम् । आचचक्षे कथयामास । ' उपूपध्मानीयानामोष्ठौ ' इति पाणिनीयाः । वस्तुतस्तु कवेः सामर्थ्यप्रकटनमेतदित्यवगन्तव्यम् ।

इति श्रीदशकुमारचरितव्याख्याने मनोरमाख्याने षष्ठ उच्छ्वासः ॥ ६ ॥

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

## सप्तमोच्छ्वासः ॥ ७ ॥

राजाधिराजनन्दन, नगरन्ध्रगतस्य ते गतिं ज्ञास्यन्नहं च गतः कदाचित्कलिङ्गान् । कलिङ्गनगरस्य नात्यासन्नसंस्थितजनदाहस्थानसंसक्तस्य कस्यचित्कान्तारधरणिजस्यास्तीर्णसरसकिसलयसंस्तरे तले निषद्य निद्रालीढदृष्टिरशयिषि । गलति च कालरात्रिशिखण्डजालकालान्धकारे, चलितरक्षसि क्षरितनीहारे निजनिलयनिलीननिःशेषजने नितान्तशीते निशीथे घनतरसालशाखान्तरालनिर्ह्रादिनि नेत्रनिंसिनीं निद्रां निगृह्णत्, कर्णदेशं गतं 'कथं खलेनानेन दग्धसिद्धेन रिरंसाकाले निदेशं दित्सता जन एष रागेणानर्गलेनार्दित इत्थं खलीकृतः । क्रियेतास्याणकनरेन्द्रस्य केनचिदनन्तशक्तिना सिद्ध्यन्तरायः ' इति किंकरस्य किंकर्याश्चातिकातरं रटितम् । तदाकर्ण्य ' क एष सिद्धः , का च सिद्धिः, किं चानेन किंकरेण करिष्यते' इति दिदृक्षाक्रान्तहृदयः किंकरगतया दिशा किंचिदन्तरं गतस्तरलतरनरास्थिशकलरचितालंकाराक्रान्तकायम् , दहनदग्धकाष्ठ-

---

### अथ सप्तम उच्छ्वासः ॥ ७ ॥

इदानीं स्वचरितमुपवर्णयितुमारभते मन्त्रगुप्तः-**राजाधीति** । राजाधिराजस्य सार्वभौमस्य राजहंसस्य नन्दन कुमार हे राजवाहन । नगरंध्रगतस्य पर्वतबिलं प्रविष्टस्य । ज्ञास्यन्नुपलप्स्यमानः। कलिङ्गांस्तदाख्यान्देशान् । नात्यासन्ने किंचिद्दूरवर्तिनि संस्थितजनानां मृतप्राणिनां दाहस्थाने श्मशाने संसक्तस्य प्ररूढस्य । ' परेतप्रेतसंस्थिताः ' इत्यमरः । कान्तारधरणिजस्य वनवृक्षस्य । आस्तीर्णानि सरसान्यार्द्राणि किसलयानि पल्लवाः संस्तरः शयनमिव यत्र तादृशे तलेऽधोभागे । निषद्योपविश्य । निद्रयालीढदृष्टिर्मीलितलोचनः । अशयिषि शयनं कृतवान् । गलति प्रसरति । कालरात्रेर्मरणात्पूर्वदिवसरात्र्यास्तद्रूपाया अङ्गनायाः शिखण्डजालवत्केशपाशवत् काले कृष्णवर्णे अन्धकारे तमसि । चलितानि सर्वतो भ्रमन्ति रक्षांसि राक्षसा यस्मिन्काले तादृशे । क्षरितनीहारे निःसृततुषारे । निजनिलयेषु स्वस्वगृहेषु निलीना गुप्ता निःशेषा जना यस्मिन्नेतादृशे । निशीथे अर्धरात्रे । घनतराणामतिनिबिडानां सालशाखानां तरुशाखानामन्तराले मध्यदेशे निर्ह्रादिनि सशब्दे । ' वृक्षो महीरुहः सालः ' इति हैमः । ' नादनिर्घोषनिर्ह्रादस्वाननिस्वाननिस्वनाः ' इत्यमरः । नेत्रनिंसिनीं नयनस्पर्शिनीम् । ' णिसि चुम्बने ' । निगृह्णत् निद्रायाः प्रतिबन्धकम् । कर्णदेशं श्रुतिप्रदेशं गतं प्रविष्टमभूदिति क्रियापदमत्राध्याहार्यम् । खलेन दुर्जनेन । रिरंसाकाले रतीच्छासमये । निदेशमाज्ञां दित्सता दातुकामेन । अनर्गलेनाप्रतिहतेन रागेणानुरागेणार्दितः पीडितः । खलीकृत उपद्रुतः । क्रियेत विधीयेत । संभावनायां लिङ् । अणकनरेन्द्रस्य गर्हितमान्त्रिकस्य । ' पापाणके कुत्सितैः ' इति समासः । अनन्तशक्तिना बहुपराक्रमवता सिद्धेरन्तरायो विघ्नः । ' विघ्नोऽन्तरायः प्रत्यूहः ' इत्यमरः । अतिकातरमतिदीनं रटितमार्तरवः । दिदृक्षया विलोकयितुमिच्छयाऽऽक्रान्तहृदयो व्याप्तचित्तः । दिशा मार्गेण । किंचिदन्तरं दूरम् । तरलतरैरत्युज्ज्वलैर्नरास्थिशकलैर्मृतशरीरास्थिखण्डै रचितैः ग्रथितैरलंकारैर्भूषणैराक्रान्तकायं व्याप्त-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

निष्ठाङ्गाररजःकृताङ्गरागम्, तडिल्लताकारजटाधरम्, हिरण्यरेतस्यरण्यचक्रान्धकारराक्षसे क्षणगृहीतनानेन्धनग्रासचञ्चदर्चिषि दक्षिणेतरेण करेण तिलसिद्धार्थकादीन्निरन्तरचटचटायितानाकिरन्तं, कंचिदद्राक्षम् । तस्याग्रे स कृताञ्जलिः किंकरः 'किं करणीयम्, दीयतां निदेशः' इत्यतिष्ठत् । आदिष्टश्चायं तेनातिनिकृष्टाशयेन—'गच्छ, कलिङ्गराजस्य कर्दनस्य कन्यां कनकलेखां कन्यागृहादिहानय' इति । स च तथाकार्षीत् । ततश्चैनां त्रासेनालघीयसास्रजर्जरेण च कण्ठेन रणरणिकागृहीतेन च हृदयेन 'हा तात, हा जननि' इति क्रन्दन्तीं कीर्णग्लानशेखरस्रजि शीर्णनहने शिरसिजानां संचये निगृह्यासिना शिलाशितेन शिरश्चिकर्तिषयाचेष्टत । झटिति चाच्छिद्य तस्य हस्तात्तां शस्त्रिकां तया निकृत्य तस्य तच्छिरः सजटाजालम्, निकटस्थस्य कस्यचिज्जीर्णसालस्य स्कन्धरन्ध्रे न्यदधाम् । तन्निध्याय हृष्टतरः स राक्षसः क्षीणाधिरकथयत्—'आर्य, कदर्यस्यास्य कदर्थनान्न कदाचिन्निद्रायाति नेत्रे । तर्जयति त्रासयति च अकृत्ये चाज्ञां ददाति । तदत्र कल्याणराशिना साधीयः कृतम् । यदेष नरकाकः कारणानां नारकिणां

---

शरीरम् । 'तरलो हाररत्ने च चञ्चले चोज्ज्वलेऽपि च' इति केशवः । 'कायो देहः क्लीबपुंसोः' इत्यमरः । दहने शवसंस्कारकाले दग्धानि समुद्दीपितानि यानि काष्ठानि दारूणि तन्निष्ठेनाङ्गाररजसा भस्मना कृताङ्गरागं कृतविलेपनम् । तडिल्लताकारा विद्युत्समानास्तद्वत् पिशङ्गीर्जटा धारयतीत्येवंशीलम् । हिरण्यरेतसि हुतभुजि । 'हिरण्यरेता हुतभुग्दहनो हव्यवाहनः' इत्यमरः । अरण्यचक्रस्य वनचक्रस्यान्धकाराणां तमसां राक्षसे तद्भक्षके इत्यर्थः । क्षणेन गृहीतानामाक्रान्तानां नानेन्धनानां नानाकाष्ठानां ग्रासेन कबलनेन चञ्चन्ति प्रसरन्ति अर्चींषि ज्वाला यस्यैवंविधे । दक्षिणेतरेण वामेन । सिद्धार्थकः श्वेतसर्षपः । 'सिद्धार्थस्त्वेष धवलः' इत्यमरः । निरन्तरमनवरतं चटचटायितान् 'चटचटा' इति शब्दं कुर्वतः । आकिरन्तं प्रक्षिपन्तम् । 'कॄ विक्षेपे' धातुः । **तस्येति** । होमकर्तुः पुरुषस्याग्रे पुरोभागे । स किंकरः । निदेशः आज्ञा । आदिष्ट आज्ञप्तः । निकृष्टाशयेन दुष्टचित्तेन । एनां कनकलेखाम् । अलघीयसा गुरुणा त्रासेनोद्वेगेन । अस्रजर्जरेणाश्रुक्लिन्नेन । रणरणिकागृहीतेन व्याकुलताक्रान्तेन । क्रन्दन्तीं रुदतीम् । कीर्णा विक्षिप्ताऽतएव ग्लाना म्लानिमापन्ना च शेखरस्रक् शिरोधृतमाला यस्मिन्नेतादृशे । शीर्णनहने शिथिलबन्धे । 'णह बन्धने' धातुः । शिरसिजानां शिरोरुहाणां संचये कलापे । निगृह्य गृहीत्वा । असिना खड्गेन । शिलावत् पाषाणवत् शितेन तीक्ष्णेन । शिरश्चिकर्तिषया मस्तकं छेत्तुमिच्छया । झटित्याशु । आच्छिद्य बलादाक्षिप्य । शस्त्रमेव शस्त्रिका ताम् । निकृत्य छेदयित्वा । सजटाजालं जटाभारसहितम् । निकटस्थस्यासन्नवर्तिनः । जीर्णसालस्य जरद्वृक्षस्य । 'अनोकहः कुटः सालः' इत्यमरः । स्कन्धरन्ध्रे शाखाद्वारे । न्यदधां निक्षिप्तवान् । निध्याय विलोक्य । क्षीणाधिगतमनोव्यथः । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । कदर्यस्य क्षुद्रस्य 'कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः' इत्यमरः । कदर्थनात्पीडनात् । 'क्लेशनं तु कदर्थनम्' इत्यमरः । साधीयः कृतं समीचीनमाचरितम् । नरकाको गर्हितमनुष्यः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

रसज्ञानाय नीतः शीतेतरदीधितिदेहजस्य नगरम्, तदत्र दयानिधेरनन्ततेजसस्तेऽयं जनः कांचिदाज्ञां चिकीर्षति । आदिश, अलं कालहरणेन' इत्यनंसीत् । आदिशं च तम्—'सखे, सैषा सज्जनाचरिता सरणिः, यदणीयासि कारणेऽनणीयानादरः संदृश्यते । न चेदिदं नेच्छसि सेयं संनताङ्गयष्टिरक्लेशार्हा सत्यनेनाकृत्यकारिणात्यर्थं क्लेशिता, तन्नयैनां निजानिलयम् । नान्यदितः किंचिदस्ति चित्ताराधनं नः' इति । अथ तदाकर्ण्य कर्णशेखरानिलीननीलनीरजायितां धीरतरलतारकां दृशं तिर्यक्किंचिदञ्चितां संचारयन्ती, सलिलचरकेतनशरासनानतां चिल्लिकालतां ललाटरङ्गस्थलीनर्तकीं लीलालसं लालयन्ती, कण्टकितरक्तगण्डलखा, रागलज्जान्तरालचारिणी, चरणाग्रेण तिरश्चीननखार्चिश्चन्द्रिकेण धरणितलं साचीकृताननसरसिजं लिखन्ती, दन्तच्छदकिसलयलङ्घिना हर्षास्रसलिलधाराशीकरकणजालक्लेदितस्य स्तनतटचन्दनस्यार्द्रतां निरस्यतास्यान्तरालनिःसृतेन तनीयसानिलेन हृदयलक्ष्यदलनदक्षिणरतिसहचरशरस्यदायितेन तरङ्गि-

---

कारणानां यातनाविशेषाणाम् । 'कारणा तु यातना तीव्रवेदना' इत्यमरः । नारकिणां नरकसंबन्धिनाम् । रसज्ञानाय रसपरिचयार्थम् । शीतेतररश्मिरुष्णकिरणः सूर्यस्तद्देहजस्य तत्पुत्रस्य यमस्येत्यर्थः । नगरं संयमिनीपुरम् । अनन्ततेजसो बहुपराक्रमवतः । अयं जनः मदात्मकः । चिकीर्षति विधातुमिच्छति आदिशाज्ञापय । कालहरणेन समयविलम्बेनालं न किमपि प्रयोजनम् । अनंसीत्प्रणनाम । सज्जनैः साधुपुरुषैराचरिताऽनुष्ठिता सरणिः पद्धतिः । अणीयासि अत्यल्पे । अनणीयानतिबहुलः । आदरः सत्कारः । इदं मामुद्दिश्योपकारं न चेन्नेच्छसि अवश्यमेव कर्तुमिच्छसि यदि । सन्नताङ्गयष्टिर्नताङ्गी अक्लेशार्हा क्लेशं सोढुमशक्ता । अकृत्यकारिणाऽनुचितविधायिना । अनेन मान्त्रिकेण । अत्यर्थं नितरां क्लेशितोपद्रुता । निजनिलयं स्वगृहम् । इतोऽन्यदितः परम् । नोऽस्माकं चित्ताराधनं मनःसन्तोषणं नास्ति । **अथेति** । कर्णशेखरे श्रवणावतंसे निलीनं लग्नं यन्नीलनीरजं नीलकमलं तदायितां तद्वदाचरन्तीम् । धीरा निश्चला तरला कम्पायमाना च तारका कनीनिका यस्या एवंभूताम् । अञ्चितां कुटिलिताम् । सलिलचरो मत्स्यः केतनं ध्वजचिह्नं यस्यैवंभूतस्य मन्मथस्य शरासनमिव धनुरिवानतां वक्रीभूतां चिल्लिकालतां भ्रूवल्लीम् । ललाटं भालदेश एव रङ्गस्थली नृत्यस्थानं तत्र नर्तकीं नृत्यं कुर्वतीम् । लीलया विलासेनालसं सौम्यं मन्दं वा । 'अलसं मन्दसौम्ययोः' इत्यजयः । कण्टकिते संजातपुलके 'तदस्य संजातं तारकादिभ्य इतच्' इतीतच् । रक्ते च गण्डलेखे कपोलपाल्यौ यस्यास्तादृशी । रागोऽनुरागो, लज्जा मन्दाक्षं तयोरन्तराले मध्ये चरतीत्येवंशीला । चरणाग्रेण प्रपदेन । तिरश्चीनास्तिर्यक् प्रसरन्त्यो नखार्चिषो नखकान्तय एव चन्द्रिका यस्य तथाविधेन । धरणितलं भूतलम् । साचीकृतमधोमुखतया कृतमाननसरसिजं मुखपद्मं यस्मिन्कर्मणि यथा तथा । दन्तच्छदकिसलयमधरपल्लवं लङ्घयत्यतिक्रम्य गच्छतीत्येवंशीलेन । हर्षास्रसलिलधाराशीकरकणजालेनानन्दवाष्पसंपातबिन्दुसन्दोहेन क्लेदितस्यार्द्रीकृतस्य । स्तनतटचन्दनस्य कुचदेशे लिप्तमलयजस्य । निरस्यता

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

तद्दर्शनचन्द्रिकाणि कानिचिदेतान्यक्षराणि कलकण्ठीकलान्यसृजत्—'आर्य, केन कारणेनैनं दासजनं कालहस्तादाच्छिद्यानन्तरं रागानिलचालितरणरणिकातरङ्गिण्यनङ्गसागरे किरासि। यथा ते चरणसरसिजरजःकणिका तथाहं चिन्तनीया। यद्यस्ति दया तेऽत्रजने, अनन्यसाधारणः करणीयः स एव चरणाराधनक्रियायाम्। यदि च कन्यागाराध्यासने रहस्यक्षरणादनर्थ आशङ्क्येत, नैतदस्ति। रक्ततरा हि नस्तत्र सख्यश्चेट्यश्च। यथा न कश्चिदेतज्ज्ञास्यति तथा यतिष्यन्ते' इति। स चाहं देहजेनाकर्णाकृष्टसायकासनेन चेतस्यतिनिर्दयं ताडितस्तत्कटाक्षकालायसनिगडगाढसंयतः किंकराननिहितदृष्टिरगादिषम्—'यथेयं रथचरणजघना कथयति तथा चेन्नाचरेयम्, नयेत नक्रकेतनः क्षणेनैकेनाकीर्तनीयां दशाम्। जनं चैनं सह नयानया कन्यया कन्यागृहं हरिणनयनया' इति। नीतश्चाहं निशाचरेण शारदजलधरजालकान्ति कन्यकानिकेतनम्। तत्र च कांचित्कालकलां चन्द्राननानिदेशाच्चन्द्रशालैकदेशे तद्दर्शनचलितधृतिरतिष्ठम्। सा च स्वच्छन्दं

---

दूरीकुर्वता। आस्यान्तरालान्मुखमध्यदेशान्निःसृतेन बहिरागतेन। तनीयसाल्पेन अनिलेन निश्वासमारुतेन। हृदयं कामिजनचेतोरूपं लक्ष्यं शरव्यं यस्यैवंविधस्य, दलने मनोविदारणे दक्षिणस्यातिसमर्थस्य रतिसहचरशरस्य मदनसायकस्य स्यदायितेन वेगवदाचरितेन। 'रंहस्तरसी तु रयः स्यदः। जवः' इत्यमरः। तरङ्गिता दशनचन्द्रिका दन्तकान्तिर्यैस्तादृशानि। कलकण्ठी कोकिलाङ्गना तस्या इव कलान्यव्यक्तमधुराणि। **आर्येति**। कालहस्तान्मृत्युहस्तात्। आच्छिद्याक्षिप्य। रागोऽनुराग एवानिलो वायुस्तेन चालिता उत्क्षिप्ताः रणरणिकौत्सुक्यमेव तरङ्गा ऊर्मयस्तद्वति तादृशतरङ्गपूर्णे। 'औत्सुक्यं रणरणिका' इति महीपः। अनङ्गसागरे कामसमुद्रे। अत्र परम्परितरूपकमलंकारः। किरासि निक्षिपसि। चरणसरसिजस्य पादकमलस्य रजःकणिका धूलीलवः। अत्रजने मयीत्यर्थः। चरणाराधनक्रियायां पादशुश्रूषाकर्मणि। कन्यागारस्य मदीयान्तःपुरस्याध्यासने तत्र निवासे इत्यर्थः। रहस्यक्षरणाद्गोप्यवृत्तान्तभङ्गात्। चेट्यः परिचारिकाः। यतिष्यन्ते उद्यमं करिष्यन्ति। **स चाहमिति**। मन्त्रगुप्तः। देहजेन कामेन। आकर्णं श्रवणपर्यन्तं कृष्टमाकृष्टं सायकासनं धनुर्येनैवंविधेन। चेतासि मनसि। अतिनिर्दयं करुणारहितम्। तस्याः कलिङ्गराजकन्यायाः कनकलेखायाः कटाक्षैरपाङ्गदर्शनैरेवायसनिगडैर्लोहशृंखलाभिर्गाढं दृढं यथा तथा संयतो बद्धः सन्। किंकरस्यानने मुखे निहिता न्यस्ता दृष्टिर्येन तादृशः। अगादिषमुक्तवान्। रथचरणं चक्रं तद्वज्जघनं कटिपुरोभागो यस्याः सा। 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः। नाचरेयं न कुर्याम्। नक्रकेतनो मन्मथः। अकीर्तनीयामवाच्यां दशामवस्थां मरणरूपामित्यर्थः। हरिणनयनया मृगाक्ष्या। निशाचरेण राक्षसेन। शारदजलधरकान्ति शरन्मेघसमानतेजः। कन्यकानिकेतनं कन्यागृहम्। कालस्य समयस्य कलां लेशम्। चन्द्र इवाननं मुखं यस्या एवंविधायाः कनकलेखाया निदेशादाज्ञया।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

शयानाः करतलालससंघटनापनीतनिद्राः काश्चिदधिगतार्थाः सखीरकार्षीत्। अथागत्य ताश्चरणनिहितशिरसः क्षरदस्रकरालितेक्षणा निजशेखरकेसराग्रसंलग्नषट्चरणगणरणितसंशयितकलगिरः शनैरकथयन्–'आर्य, यदत्यादित्यतेजसस्त एषा नयनलक्ष्यतां गता, ततः कृतान्तेन न गृहीता। दत्ता चेयं चित्तजेन गरीयसा साक्षीकृत्य रागानलम्। तदनेनाश्चर्यरत्नेन नलिनाक्षस्य ते रत्नशैलशिलातलस्थिरं रागतरलेनालंक्रियतां हृदयम्। अस्याश्चरितार्थं स्तनतटं गाढालिङ्गनैः सदृशतरस्य सहचरस्य च' इति। ततः सखीजनेनातिदक्षिणेन दृढतरीकृतस्नेहनिगलस्तया संनताङ्ग्या संगत्यारंसि।

अथ कदाचिदायासितजायारहितचेतसि, लालसालिलङ्घनग्लानघनकेसरे, राजदरण्यस्थलीललाटलीलायिततिलके, ललितानङ्गराजाङ्गीकृतनिर्निद्रकर्णिका-

---

चन्द्रशालायाः शिरोगृहस्यैकदेशे कस्मिंश्चित्प्रदेशे। 'चन्द्रशाला शिरोगृहम्' इत्यमरः। तस्याः कन्याया दर्शनेन चलितधृतिर्गतधैर्यः। **सा चेति**। स्वच्छन्दं स्वेच्छया। शयाना निद्रां विदधतीः। करतलेनालसं मन्दं यत्संघट्टनं ताडनं तेनापनीता दूरीकृता निद्रा यासां तथाविधाः। अधिगतार्था विदितमद्वृत्तान्ताः। चरणयोर्मत्पादयोर्निहितं स्थापितं शिरः याभिरेवंभूताः। क्षरता निःसरताऽस्रेणाश्रुणा करालितानि प्राप्तविकाराणीक्षणानि चक्षूंषि यासां ताः। निजशेखरकेसरस्यात्मीयशिरोमाल्यस्याग्रे कोटौ संलग्नाः सक्ताः ये षट्चरणा भ्रमरास्तेषां गणस्य पङ्क्ते रणितसंशयिता गुञ्जातुल्या कलाऽव्यक्तमधुरा च गीर्वाणी यासां ताः। अत्यादित्यतेजसः सूर्यातिशायितेजोयुक्तस्य। ते तव। एषा राजकन्या कनकलेखा। नयनलक्ष्यतां लोचनगोचरत्वं गता प्राप्ता। ततस्तस्माद्धेतोः। कृतान्तेन मृत्युना। चित्तजेन कामेन। गरीयसाऽतिमहता गुरुस्थानापन्नेन च। साक्षीकृत्य साक्षितया स्थापयित्वा। रागमनुरागमेवानलं हुतभुजम्। आश्चर्येणाश्चर्यजनकेनानेन रत्नेन कन्यारत्नेनेत्यर्थः। नलिनाक्षस्य कमलनेत्रस्य। रत्नशैलस्य मणिमयगिरेः शिलातलमिव स्थिरं निर्भरम्। चरितार्थं सप्रयोजनम्। गाढं दृढं यथा तथाऽऽलिङ्गनैराश्लेषैः। सदृशतरस्यातितरामनुरूपस्य। सहचरस्य सहायस्य पत्युरिति भावः। अतिदक्षिणेन नितरां निपुणेन। दृढतरीकृतः स्नेहनिगलः प्रेमपाशो यस्यैवंविधः। संगत्य मिलित्वा अरंसि क्रीडां कृतवान्। 'रमु क्रीडायाम्'।

**अथेति**। एवं गुप्तरीत्या कन्यासंगानन्तरम्। कलिङ्गराजः क्रीडारसजातासक्तिरासीत्समयविशेषे इति वक्ष्यन्कोऽसौ समय इत्याशंकानिरासाय समयं विशिनष्टि–**आयासितेत्यादिना**। आयासितं पीडितं जायारहितानां भार्यावियुक्तानां चेतो मनो यत्रैतादृशे। 'भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी' इत्यमरः। लालसा मधुलुब्धा येऽलिनो मधुकरास्तेषां लङ्घनेन बलादाक्रमणेन ग्लानः घनः कुसुमनिविडः केसरः पुन्नागवृक्षो यत्रैवंविधे। 'पुन्नागे पुरुषस्तुङ्गकेसरो देववल्लभः' इत्यमरः। राजन्ती शोभमाना याऽरण्यस्थली वनभूमिरूपा नायिका तस्या ललाटलीलायितो भालदेशतिलकवदाचरितस्तिलकस्तदाख्यवृक्षविशेषो

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

रकाञ्चनच्छत्रे, दक्षिणदहनसारथिरयाहृतसहकारचञ्चरीककलिके, कालाण्डजकण्ठरागरक्तरक्ताधरारतिरणाग्रसंनाहशालिनि, शालीनकन्यकान्तःकरणसंक्रान्तरागलङ्घितलज्जे, दर्दुरगिरितटचन्दनाश्लेषशीतलानिलाचार्यदत्तनानालतानृत्यलीले काले, कलिङ्गराजः सहाङ्गनाजनेन सह च तनयया सकलेन च नगरजनेन दश त्रीणि च दिनादि दिनकरकिरणजाललङ्घनीये, रणदलिसङ्घलङ्घितनतलताग्रकिसलयालीढसैकततटे, तरलतरङ्गशीकरासारसङ्गशीतले सागरतीरकानने क्रीडारसजातासक्तिरासीत् । अथ संततगीतसंगीतसंगताङ्गनासहस्रशृङ्गारहेलानिरर्गलानङ्गसंघर्षहर्षितश्च रागतृष्णैकतन्त्रस्तत्र रन्ध्र आन्ध्रनाथेन जयसिंहेन

---

यत्रैवंभूते । 'तिलकः क्षुरकः श्रीमान्' इत्यमरः । ललितः सुन्दराङ्गो योऽनङ्गः काम एव राजा तेनाङ्गीकृतं धृतं निर्निद्रो विकसितः कर्णिकारो द्रुमोत्पलः एव काञ्चनच्छत्रं स्वर्णातपत्रं यस्मिन्नेतादृशे । 'अथ द्रुमोत्पलः । कर्णिकारः परिव्याधः ' इत्यमरः । दक्षिणेन दक्षिणदिग्जातेन दहनसारथिनाऽग्निसहायेन वायुनेत्यर्थः । रयेण वेगेनाहृताः स्वगन्तव्यां दिशमुत्तरां नीताः सहकारे चूतवृक्षे वर्तमानाश्चञ्चरीका अलयः, कलिकाः कोरकाश्च यत्रैवंभूते । ' आम्रश्चूतो रसालश्च सहकारोऽतिसौरभः' 'कलिका कोरकोऽस्त्रियाम् ' इत्यमरः । कालाण्डजाः कोकिलाङ्गनास्तासामिव कण्ठो यासां ता अतिमधुरभाषिण्य इति भावः । ' वनप्रियः परभृतः पिकः कालाण्डजः स्मृतः' इति वैजयन्ती । तादृश्यो रागरक्ता अनुरागविशिष्टाश्च या रक्ताधराः उत्तमनायिकास्तासां रतिरणस्य सुरतयुद्धस्याग्रसन्नाहः प्रथमोद्योगस्तच्छालिनि तद्विशिष्टे । शालीना धैर्यरहिताः 'शालीनकौपीने अधृष्टाकार्ययोः ' इति निपातनात्साधुता । तादृश्यो याः कन्यका अंकुरिततारुण्या बालास्तासामन्तःकरणे मनसि संक्रान्तो नवीनतया प्रादुर्भूतो यो रागस्तेन लंघिताऽतिक्रान्ता लज्जा त्रपा यस्मिन्नेतादृशे । दर्दुराख्यस्य गिरेः पर्वतस्य तटे वर्तमानानां चन्दनानां पटीराणामाश्लेषेण संपर्केण शीतलः शिशिरो योऽनिलो वायुस्तेनैवाचार्येण नृत्याचार्येण विटेन दत्ता कारिता नानालतानामेव वारवधूनामित्यर्थान्नृत्यलीला नर्तनक्रीडा यस्मिन्नेतादृशे । ' दर्दुरस्तोयदे भेके वाद्यभाण्डादिभेदयोः ' इति मेदिनी । एतादृशे काले समये ग्रीष्माख्ये इति यावत् । कलिङ्गराजः कर्दनाख्यः । तनयया पुत्र्या कनकलेखया । दिनकरस्य तिग्मांशोः किरणजालेन रश्मिसमूहेनालंघनीयेऽनतिक्रमणीये । रणद्भिर्गुञ्जारवं कुर्वद्भिरलिसंघैः भ्रमरश्रेणिभिर्लंघितान्याक्रान्तान्यत एव नतानि नीचैरवलम्बमानानि यानि लताग्रवर्तीनि किसलयानि पल्लवास्तैरालीढो व्याप्तः सैकततटो बालुकामयप्रदेशो यत्रैवंविधे । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । तरलाश्चञ्चला ये तरङ्गा ऊर्मयस्तेषां शीकरासारेण विन्दुप्रसारेण सह सङ्गात्संपर्कात् शीतले शिशिरीकृते । सागरस्य समुद्रस्य तीरकानने तटवनोद्देशे । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु, 'गहनं काननं वनम् ' इत्यमरः । क्रीडारसे विहाररसे जातासक्तिरुत्पन्नाभिलाषः । **अथेति** । संततमनवरतं गीते गाने संगीते नृत्यादौ च संगतमासक्तं यदङ्गनासहस्रं स्त्रीचक्रं तस्य शृङ्गारहेलया शृङ्गारलीलया निरर्गलो निष्प्रतिबन्धमुत्पन्नो यो

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

सलिलतरणसाधनानीतेनानेनानेकसंख्येनानीकेन द्रागागत्यागृह्यत सकलत्रः सा चानीयत त्रासतरलाक्षी दयिता नः सह सखीजनेन कनकलेखा । तदाहं दाहेनानङ्गदहनजनितेनान्तरिताहारचिन्ताश्चिन्तयन्दयितां गलितगात्रकान्तिरित्यतर्कयम्—'गता सा कलिङ्गराजतनया जनयित्रा जनयित्र्या च सहारिहस्तम् । निरस्तधैर्यस्तां स राजा नियतं संजिघृक्षेत् । तदसहा च सा सती गररसादिना सद्यः संतिष्ठेत । तस्यां च तादृशीं दशां गतायां जनस्यास्यानन्यजेन हन्येत शरीरधारणा । सा का स्याद्गतिः ' इति ।

अत्रान्तर आन्ध्रनगरादागच्छन्नग्रजः कश्चिदैक्ष्यत । तेन चेयं कथा कथिता—"यथा किल जयसिंहेनानेकनिकारदत्तसंघर्षणाजिघांसितः स कर्दनः कनकलेखादर्शनैधितेन रागेणारक्ष्यत । सा च दारिका यक्षेण केनचिदधिष्ठिता न तिष्ठत्यग्रे नरान्तरस्य । आयस्यति च नरेन्द्रसार्थसंग्रहणेन तन्निराकरिष्यन्नरेन्द्रो न चास्ति सिद्धिः' इति । तेन चाहं दर्शिताशः शंकरनृत्यरङ्गदेशजातस्य जरत्सालस्य स्कन्धरन्ध्रान्तर्जटाजालं निष्कृष्य तेन जटिलतां गतः कन्थाचीरसंचयान्तरितस-

---

मदनसंघर्षो मदनोद्रेकस्तेन हर्षितः सन्तुष्टः । ' हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ' इत्यमरः । रागोऽनुरागस्तृष्णा योषिदाद्युपभोगेच्छा तयोरेकतन्त्रोऽधीनः । तत्र रन्ध्रे तस्मिन्नवकाशे । आन्ध्रनाथेन तद्देशाधिपेन । सलिलतरणसाधनं नौकारूपं तेनानीतेन तत्र प्रापितेन । अनीकेन सैन्येन । द्रागाशु । अत्यागृह्यत गृहीतोऽभूत् । सकलत्रो भार्यादिसहितः । त्रासेन भयेन तरलाक्षी चञ्चललोचना । नोऽस्माकं दयिता प्रिया कनकलेखा । **तदेति** । दाहेनोष्मणा । अनङ्गदहनजनितेन कामाग्निसमुत्पादितेन । अन्तरिता दूरीकृताऽऽहारचिन्ता भोजनेच्छा यस्यैवंविधः । गलिता च्युता गात्रकान्तिः शरीरत्विड् यस्य प्राप्तवैवर्ण्य इत्यर्थः । अतर्कयं विचारं कृतवान् । अरिहस्तं शत्रुपाणिम् । निरस्तधैर्यो धैर्यहीनः । स राजा जयसिंहः । नियतमवश्यमेव । संजिघृक्षेद्वशीकर्तुमिच्छेत् । तदसहा तत्सोढुमक्षमा । सती पतिव्रता । गररसादिना विषमिश्रितजलादिना । संतिष्ठेत त्यक्तप्राणा भवेत् । ' समवप्रविभ्यः स्थः ' इत्यात्मनेपदम् । तादृशीं दशां गतायां मृतायां सत्यामित्यर्थः । अनन्यजेन कामेन । ' कुसुमेषुरनन्यजः ' इत्यमरः । शरीरधारणा प्राणधृतिरित्यर्थः ।

**अत्रान्तर इति** । अस्मिन्नवसर इत्यर्थः । अग्रजो ब्राह्मणः । ऐक्ष्यत दृष्टः । इयं वक्ष्यमाणा । अनेकनिकारैर्नानाविधापकारैर्दत्तसंघर्षणः कृतोपद्रवः । 'अपराधोऽपकारश्च निकारोऽपि समाः ' इति वैजयन्ती । पूर्वोक्तरीत्या जिघांसितो हन्तुमिष्टश्च । कनकलेखाया दर्शनेनैधितेन संवर्धितेन । अरक्ष्यत रक्षितो न तु हतः । दारिका कन्या । नरान्तरस्य पुरुषान्तरस्य । आयस्यति प्रयतनं करोति । 'यसु प्रयतने' । नरेन्द्रसार्थस्य मान्त्रिकसमूहस्य संग्रहणेनैकत्रीकरणेन । तं यक्षं निराकरिष्यन्दूरीभावयिष्यन् । नरेन्द्रो राजा जयसिंहः । दर्शिताशः समुत्पादितपुनःप्राप्तीच्छः । जरत्सालस्य जीर्णवृक्षस्य । 'अनोकहः कुटः सालः ' इत्यमरः । स्कन्धरन्ध्रान्तः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कलगात्रः कांश्चिच्छिष्यानग्रहीषम्। तांश्च नानाश्चर्यक्रियातिसंहिताज्जनादाकृष्टान्न-चेलादित्यागान्नित्यहृष्टानकार्षम्। अयासिषं च दिनैः कैश्चिदान्ध्रनगरम्। तस्य नात्यासन्ने सलिलराशिसदृशस्य कलहंसगणदलितनलिनदलसंहतिगलितकिञ्जल्क-शकलशारस्य सारसश्रेणिशेखरस्य सरसस्तीरकानने कृतनिकेतनः स्थितः शिष्य-जनकथितचित्रचेष्टाकृष्टसकलनागरजनाभिसंधानदक्षः सन्दिशि दिशीत्यकीर्त्यै जनेन—'य एष जरदरण्यस्थलीसरस्तीरे स्थण्डिलशायी यतिस्तस्य किल सकलानि सरहस्यानि सषडङ्गानि च छन्दांसि रसनाग्रे संनिहितानि, अन्यानि च शास्त्राणि, येन यानि न ज्ञायन्ते स तेषां तत्सकाशादर्थनिर्णयं करिष्यति। असत्येन नास्यास्यं संसृज्यते। सशरीरश्चैष दयाराशिः। एतत्संग्रहेणाद्य चिरं चरितार्था दीक्षा। तच्चरणरजःकणैः कैश्चन शिरसि कीर्णैरनेकस्यानेक आतङ्कश्चिरं चिकित्सकैरसंहार्यः संहृतः। तदङ्घ्रिक्षालनसलिलसेकैर्निष्कलङ्कशिरसां नश्यन्ति क्षणेनैकेनाखिलनरेन्द्र-

---

शाखाविलान्तरालात् जटाजालं सटाकलापम्। निष्कृष्यादाय। जटिलतां जटायुक्तताम्। 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इतीलच्। कन्थाचीरसंचयेन कषायरक्तवस्त्रखण्डसं-हत्याऽन्तरितसकलगात्रो निगूढसर्वावयवः। शिष्यानन्तेवासिनः। 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः। अग्रहीषं वशीकृतवान्। नानाविधाभिराश्चर्यक्रियाभिरद्भुतजनकचेष्टाभिरतिसंहिता-त्प्रतारितात्। आकृष्टस्यावार्जितस्यान्नचेलादेर्भक्ष्यवस्त्रादेस्त्यागाद्वितरणात्। 'चेलं वसनमंशुकम्' इत्यमरः। अयासिषं गतवान्। नात्यासन्ने किञ्चिद्दूरवर्तिनी प्रदेशे। सलिलराशिसदृशस्य समुद्र-तुल्यस्य। 'सदृक्षः सदृशः सदृक्' इत्यमरः। कलहंसगणेन राजहंसविशेषसमूहेन दलितायाः खण्डि-ताया नलिनदलसंहतेः पद्मपत्रवृन्दाद्गलितेन किञ्जल्कशकलैः केसरखण्डैः शारस्य चित्रवर्णस्य। 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' 'स्त्रियां तु संहतिर्वृन्दम्' किञ्जल्कः केसरोऽस्त्रियाम्' 'भित्तं शकलखण्डे वा' इति सर्वत्रामरः। सारसश्रेणिशेखरस्य जलचरपक्षिविशेषपङ्क्तिभूषि-तस्येत्यर्थः। सरसः कासारस्य। 'कासारः सरसी सरः' इत्यमरः। कृतनिकेतनो विहितनिवा-सस्थानः। शिष्यजनैश्छात्रवर्गैः कथिताभिस्तत्र तत्र प्रकटीकृताभिश्चित्रचेष्टाभिराश्चर्यक्रियाभि-राकृष्टानां मत्समीपमागतानां सकलनागरजनानामतिसंधाने प्रतारणकार्ये दक्षो निपुणः। अकीर्त्यै प्रख्यातोऽभूवम्। **य एष इति**। जरदरण्यस्थलीसरस्तीरे जीर्णवनप्रदेशस्थिततडागरोधसि। स्थण्डिले शेत इति स्थण्डिलशायी। 'स्थण्डिलाच्छयितरि व्रते' इति णिनिः। यतिः संन्यासी। सषडङ्गानि शिक्षाद्यङ्गयुक्तानि। छन्दांसि वेदाः। रसनाग्रे जिह्वाग्रभागे। स यतिः। तत्सका-शाद्वेदशास्त्रसकाशात्। अर्थनिर्णयं कार्यनिर्धारणम्। असत्येन मिथ्यावचनेन। आस्यं मुखं न संसृज्यते स्पृष्टमपि न भवति। सशरीरो मूर्तिमान्। एतत्संग्रहेण दयारक्षणेन। तस्य यतेः चर-णरजःकणैः पादधूलीलवैः। कीर्णैर्यदृच्छया पतितैः किमुत श्रद्धया धारितैरिति भावः। आतङ्कः पिशाचादिभयम्। चिकित्सकैर्मन्त्रवादिभिरसंहार्योऽप्रतीकार्यः। संहृतो दूरीकृतः। तस्य यते-रङ्घ्रिक्षालनसलिलस्य पादमार्जनजलस्य सेकैरभिषेकैः निष्कलङ्कं निष्पापं शिरो येषां तादृशानाम्।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

यन्त्रलङ्घिनश्चण्डतारा ग्रहाः । न तस्य शक्यं शक्तेरियत्ताज्ञानम् । न चास्याहंकारकणिका' इति । सा चेयं कथानेकजनास्यसंचारिणी तस्य कनकलेखाधिष्ठानधनदाज्ञाकरनिराक्रियाक्रियातिसक्तचेतसः क्षत्रियस्याकर्षणायाशकत् । स चाहरहरागत्यादरेणातिगरीयसार्चयन्नर्थैश्च शिष्यान्संगृह्णन्नधिगतक्षणः कदाचित्काङ्क्षितार्थसाधनाय शनैरयाचिष्ट । ध्यानधीरः स्थानदर्शितज्ञानसंनिधिश्चैनं निरीक्ष्य निचाय्याकथयम्—'तात, स्थान एष हि यत्नः । तस्य हि कन्यारत्नस्य सकलकल्याणलक्षणैकराशेरधिगतिः क्षीरसागररशनालंकृताया गङ्गादिनदीसहस्रहारयष्टिराजिताया धराङ्गनाया एवासादनाय साधनम् । न च स यक्षस्तदधिष्ठायी केनाचिन्नरेन्द्रेण तस्या लीलाञ्चितनीलनीरजदर्शनाया दर्शनं सहते, तदत्र सह्यतां त्रीण्यहानि, यैरहं यतिष्येऽर्थस्यास्य साधनाय' इति । तथादिष्टे च हृष्टे क्षितीशे गते निशि निशि निर्निशाकरार्चिषि नीरन्ध्रान्धकारकणनिकरनिगीर्णदशदिशि निद्रानिगडितनिखिलजनदृशि निर्गत्य जलतलनिलीनगाहनीयं नीरन्ध्रं कृच्छ्राच्छि-

---

अखिलनरेन्द्राणां निखिलमन्त्रवादिनां यन्त्राणि चक्राणि लङ्घयन्त्यतिगच्छन्त्येवंशीलाः । चण्डतरा अतिक्रूरा ग्रहाः शन्यादयः । इयत्ताज्ञानं परिमित्यवगतिः । अस्याहंकारकणिका गर्वलेशोऽपि नास्ति । अनेकजनानामास्यसंचारिणी मुखान्मुखं प्रसरन्ती । कनकलेखा मत्प्रियाऽधिष्ठानमाश्रयस्थानं यस्यैवंविधस्य धनदाज्ञाकरस्य कुबेरकिंकरस्य यक्षस्य निराक्रियायां दूरीभावनेऽतिसक्तचेतसोऽत्यासक्तचित्तस्य तस्य क्षत्रियस्य जयसिंहस्येत्यर्थः । आकर्षणाय वशीकरणायाशकत्समर्था जाता । **स चेति** । जयसिंहः । अहरहः प्रतिदिनम् । अतिगरीयसा महत्तरेण । अर्थैर्द्रविणैः । संग्रह्णन् वशीकुर्वाणः । अधिगतक्षणः प्राप्तावसरः सन् । कांक्षितस्याभीष्टस्यार्थस्य यक्षनिराकरणरूपप्रयोजनस्य साधनाय संपादनार्थम् । अयाचिष्ट प्रार्थितवान् । ध्यानेन समाध्यवस्थया धीरो निश्चलः । स्थानेऽवकाशे लब्धे सति दर्शिता ज्ञानस्य कालदेशादिव्यवहितज्ञानस्य संनिधिर्मयि सान्निध्यं येनैतादृशः । निचाय्य किंचिद्विचारं कृत्वा । स्थाने युक्ततर इत्यर्थः । 'युक्ते द्वे सांप्रतं स्थाने ' इत्यमरः । यत्नो यक्षदूरीकरणोद्योगः । हि यस्मात्कारणात् । अधिगतिः प्राप्तिः । क्षीरसागर एव रशना मेखला 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ' इत्यमरः । तयाऽलंकृतायाः प्रासाधितायाः । गङ्गादिनदीसहस्रमेव हारयष्टिर्मुक्ताहारस्तया राजितायाः शोभमानायाः । धराभूमिरेवाङ्गना कामिनी तस्याः । आसादनायोपलब्धये । साधनं निमित्तम् । नरेन्द्रेण मान्त्रिकेण । लीलाञ्चिते विलासयुक्ते नीलनीरजवन्नीलकमलवच्च दर्शने नयने यस्यास्तादृश्याः । ' दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु ' इति मेदिनी । सह्यतां क्षमा विधीयताम् । त्रीण्यहानि दिनत्रयपर्यन्तम् । ' कालाध्वनोरत्यन्तसंयोगे ' इति द्वितीया । यतिष्ये प्रयत्नं करिष्यामि । क्षितीशे राजनि जयसिंहे । निशि निशि प्रत्यहं रात्रौ । निर्निशाकरार्चिषि चन्द्रप्रकाशरहितायाम् । नीरन्ध्रान्धकारस्य गाढतमसः कणनिकरेण विन्दुनिकुरुम्बेन निगीर्णाः कवलिताः दश दिशो यत्रैवंविधायाम् । निद्रया निगडिताः निमीलिता निखिलजनानां दृशो दृष्टयो

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

द्रीकृतान्तरालं तदेकतः सरस्तटं तीर्थासंनिकृष्टं केनचित्खननसाधनेनाकार्षम् । घनशिलेष्टकाच्छन्नच्छिद्राननं तत्तीरदेशं जनैरशङ्कनीयं निश्चित्य, दिनादिस्नाननिर्णिक्तगात्रश्च नक्षत्रसंतानहारयष्ट्यग्रग्रथितरत्नम्, क्षणदान्धकारगन्धहस्तिदारणैककेसारिणम्, कनकशैलशृङ्गरङ्गलास्यलीलानटम्, गगनसागरघनतरङ्गराजिलङ्घनैकनक्रम्, कार्याकार्यसाक्षिणम्, सहस्रार्चिषं सहस्राक्षदिगङ्गनाङ्गरागरागायितकिरणजालम्, रक्तनीरजाञ्जलिनाराध्य निजनिकेतनं न्यशिश्रियम् ।

याते च दिनत्रये, अस्तागिरिशिखरगैरिकतटसाधारणच्छाये । अचलराजकन्यकाकदर्थनयान्तारिक्षाख्येन शंकरशरीरेण संसृष्टायाः संध्याङ्गनायाः रक्तचन्दनचर्चितैकस्तनकलशदर्शनीये दिनाधिनाथे, जनाधिनाथः स आगत्य जनस्यास्य

---

यस्यामेवंविधायाम् । जलतले सलिलभागे निलीनेन निमग्नेन गाहनीयं प्रवेष्टुमुचितम् । छिद्रीकृतान्तरालमुत्खातमध्यम् । एकतः सरस्तटं तडागकूलसमीपे । 'एकतः क्वचिदन्तिके' इति वैजयन्ती । 'एकतः सर्वतोयोगे शेषार्थे कर्म वेष्यते' इति द्वितीया । तीर्थस्य जलावरोहणसोपानस्यासन्निकृष्टमनासन्नवर्ति । खननसाधनेन सुरङ्गास्येन यन्त्रेण । घनाभिर्गुर्वीभिः शिलाभिरश्मभिरिष्टकाश्चतुष्कोणपक्वमृत्खण्डैश्चाच्छन्नं पिहितं छिद्राननं बिलमुखं यत्रैवंभूतम् । अशङ्कनीयं सन्देहानास्पदम् । दिनादौ प्रभाते स्नानेनावगाहनेन निर्णिक्तगात्रः संशुद्धदेहः । 'निर्णिक्तं शोधितं मृष्टम्' इत्यमरः । नक्षत्रसंतानस्य तारकाश्रेण्या एव हारयष्टेर्मुक्ताहारस्याग्रे ग्रथितमूतं रत्नं मध्यमणिमिव वर्तमानम् । क्षणदान्धकारो रजनीतमोनिवह एव गन्धहस्ती उन्मत्तगजस्तस्य दारणे संहरणे एकं मुख्यं क्षममिति भावस्तादृशं केसरिणं सिंहम् । 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः । कनकशैलस्य सुवर्णाचलस्य सुमेरोः शृङ्गं शिखरमेव रङ्गं नृत्यवेदिका तत्र लास्यलीलायां नृत्यक्रीडायां नटं विटपुरुषम् । गगनमाकाश एव सागरो जलधिस्तत्र वर्तमाना ये घना वारिधरास्त एव तरङ्गा ऊर्मयस्तेषां राज्याः परंपराया लङ्घने तरणे एकनक्रं जलचरविशेषरूपम् । सहस्रार्चिषं सूर्यम् । सहस्राक्ष इन्द्रस्तस्य या दिक्पूर्वा तस्या एवाङ्गनाया योषाया अङ्गरागायितं गात्रविलेपनतुल्यं किरणजालं रश्मिकलापो यस्यैवंभूतम् । रक्तनीरजाञ्जलिना रक्तकमलयुताञ्जलिजलधारया । आराध्योपास्य । निजनिकेतनं स्वगृहम् । न्यशिश्रियं प्राप्तवान् ।

**याते चेति** । अतीते सति । अस्तागिरिशिखराणामस्ताचलशृङ्गाणां गैरिकतटैः धातुविशेषयुक्तसानुभिः साधारणच्छाये समानकान्तौ । अचलराजकन्यका हिमवद्दुहिता गौरी तस्याः कदर्थया सापत्न्यप्रयुक्तेन कुत्सितवाक्येन । अन्तरिक्षाख्येन वियन्नाम्ना शंकरशरीरेण महादेववपुषा । गगनस्य शंकरवपुस्त्वं चाष्टमूर्तित्ववर्णनावसरे 'या सृष्टिः स्रष्टुराद्या' इति श्लोके 'श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्' इति कालिदासेनाप्युक्तम् । संसृष्टायाः संगतायाः । सन्ध्याया एवाङ्गनायाः स्त्रियाः । रक्तचन्दनेन चर्चितो लिप्तः एकः स्तनकलशः कुचकुम्भस्तद्वद्दर्शनीये मनोहरे । दिनाधिनाथे सूर्ये । जनाधिनाथः स राजा जयसिंहः । धरणिन्यस्तयोर्भुवि निहितयो-



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

धरणिन्यस्तचरणनखकिरणच्छादितकिरीटः कृताञ्जलिरतिष्ठत् । आदिष्टश्च—'दिष्ट्या दृष्टेष्टसिद्धिः। इह जगति हि न निरीहं देहिनं श्रियः संश्रयन्ते। श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसांनिध्यानि। यतस्ते साधीयसा सञ्चरितेनानाकलितकलङ्केनार्चितेनात्यादररचितेनाकृष्टचेतसा जनेनानेन सरस्तथा संस्कृतम्, यथेह तेऽद्य सिद्धिः स्यात्। तदेतस्यां निशि गलादर्धायां गाहनीयम्। गाहनानन्तरं च सलिलतले सततगतीनन्तःसंचारिणः संनिगृह्य यथाशक्ति शय्या कार्या। ततश्च तटस्खलितजलस्थगितजलजखण्डचलितदण्डकण्टकाग्रदलितदेहराजहंसत्रासजर्जररसितसंदत्तकर्णस्य जनस्य क्षणादाकर्णनीयं जनिष्यते जलसंघातस्य किंचिदारटितम्। शान्ते च तत्र सलिलरटिते क्लिन्नगात्रः किंचिदारक्तदृष्टिर्येनाकारेण निर्यास्यति निचाय्य तं निखिलजननेत्रानन्दकारिणं न यक्षः शक्ष्यत्यग्रतः स्थितये । स्थिरतरनिहितस्नेहशृङ्खलानिगडितं च कन्यकाहृदयं क्षणेनैकेनासहनीयदर्शनान्तरायं स्यात्। अस्याश्च धराङ्गनाया नात्यादृतनिराकृतारिचक्रं चक्रं करतलगतं चिन्तनीयं न तत्र संशयः । तच्चेदिच्छस्यनेकशास्त्रज्ञानधीरधिषणैरधिकृतैरितरैश्च हितैषिगणैराकलय्य जालिकशतं चानाय्य,

---

श्चरणयोः पादयोर्नखानां किरणैः कान्तिभिश्छादितकिरीटः पिहितशिरोभूषणः सन् । **आदिष्टश्चेति**। मया कथितः। दिष्ट्या भाग्यवशात्। इष्टसिद्धिर्मनीषितप्राप्तिः। निरीहं निष्कामम्। देहिनं पुरुषम्। श्रियः संपदः। न संश्रयन्ते नोपस्थिता भवन्ति। श्रेयांसि कल्याणानि। अनलसानामुद्यमिनाम्। नित्यसांनिध्यान्यनवरतसंनिहितानि । तदुक्तमाचार्यैः 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः' इति । साधीयसाऽतिसमीचीनेन । अनाकलितकलङ्केन अस्पृष्टदूषणेन। आकृष्टचेतसा वशीकृतचित्तेन। सरस्तडागः। निश्यर्धायामर्धरात्रसमये। सततगतीन्वायून् प्राणादीन्। 'मातरिश्वा सदागतिः' इत्यमरः । अन्तःसञ्चारिणो हृदयकोशवर्तिनः। संनिगृह्य निरुध्य। तटात्सरःकूलात्स्खलितानां निपतितानां, जले स्थगितानां निमग्नानां, जलजखण्डस्य पद्मकदम्बस्य चलितैः कम्पनशीलैः कण्टकाग्रैः सूच्यग्रभागैर्दलितदेहानां क्षतगात्राणां राजहंसानां हंसविशेषाणां त्रासजर्जरं भयकातरं यद्रसितं दीनरवस्तत्र संदत्तकर्णस्यावहितश्रवणस्य। 'राजहंसास्तु ते चंचुचरणैर्लोहितैः सिताः' इत्यमरः। आकर्णनीयं श्रोतुमुचितम्। आरटितं शब्दितम्। **शान्त इति**। उपरते सति । क्लिन्नगात्र आर्द्रशरीरः । आकारेण स्वरूपेण। निर्यास्यति जलान्निर्गमिष्यति। निचाय्य दृष्ट्वा। अग्रतः स्थितये पुरोभागे निवासितुमित्यर्थः। स्थिरतरमतिदृढं यथा तथा निहितेन हृदये स्थापितेन स्नेहेनानुरागेणैव शृंखलया निगडितं बद्धम्। असहनीयो न क्षन्तुमुचितो दर्शने तडागोत्थितपुरुषवीक्षणेऽन्तरायो विघ्नो यस्यैवंविधम्। नात्यादृतमादररहितं यथा तथैव निराकृतं दूरीकृतमरिचक्रं शत्रुमण्डलं यस्मिन्नेतादृशम्। धीरधिषणैस्तीक्ष्णबुद्धिभिः। 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः। हितैषिगणैराप्तवर्गैः। आकलय्य सम्यग्विचार्य । जालिका आनायजीविनस्तेषां

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

अन्तरङ्गनरशतैर्यथेष्टदृष्टान्तरालं सरः क्रियेत, रक्षा च तीरात्रिंशद्दण्डान्तराले सैनिकजनेन सादरं रचनीया। कस्तत्र तज्जानाति यच्छिद्रेणारयश्चिकीर्षन्ति' इति। तत्त्वस्य हृदयहारि जातम्, तदधिकृतैश्च तत्र कृत्ये रन्ध्रदर्शनासहैरिच्छां च राज्ञा कन्यकातिरागजनितां नितान्तनिश्चलां निश्चित्यार्थ एष न निषिद्धः। तथास्थितश्च तदासादनदृढतराशयश्च स आख्यायत—'राजन्, अत्र ते जनान्ते चिरं स्थितम्, न चैकत्र चिरस्थानं नः शस्तम्। कृतकृत्यश्चेह न द्रष्टासि। यस्य ते राष्ट्रे ग्रासाद्यासादितं तस्य ते किंचिदनाचर्य कार्यं गतिरार्यगर्ह्या' इति। तत्रैतच्चिरस्थानस्य कारणम्। तच्चाद्य सिद्धम। गच्छ गृहान्। यथार्हजलेन हृद्यगन्धेन स्नातः सितस्रगङ्गरागः शक्तिसदृशेन दानेनाराधितधरणितलतैतिलगणस्तिलस्नेहसिक्तयष्ट्यग्रग्रथितवर्तिकाग्निशिखासहस्रग्रस्तनैशान्धकारराशिरागत्यार्थसिद्धये यतेथाः' इति। स किल कृतज्ञतां दर्शयन्—'असिद्धिरेषा सिद्धिः, यदसांनिधिरिहार्याणाम्। कष्टा चेयं निःसङ्गता, या निरागसं दासजनं त्याजयति। न च निषेधनीया गरीयसां गिरः' इति स्नानाय गृहानयासीत्। अहं च निर्गत्य निर्जने निशीथे सरस्तीररन्ध्रनिलीनः सन्नीषच्छिद्रदत्तकर्णः स्थितः। स्थिते चार्धरात्रे कृतयथादिष्टाक्रियः स्थानस्थानरचितरक्षः स राजा जालिकजना-

---

शतम्। 'जालं समूह आनाये गवाक्षेऽपि' इत्यमरः। यथेष्टमप्रतिहतं यथा तथा दृष्टान्तरालमीक्षितमध्यम्। दण्डः प्रकाण्डः। 'दण्डोऽस्त्री लगुडे पुमान्। व्यूहभेदे प्रकाण्डे च' इति मेदिनी। प्रकाण्डश्च षोडशहस्तविशिष्टपरिमाणविशेषः। 'काण्डान्तात्क्षेत्रे' इति सूत्रे तथा व्याख्यानात्। छिद्रेण रन्ध्रेण। अरयः शत्रवः। चिकीर्षन्ति कर्तुमिच्छन्ति। **तत्त्विति**। मदुक्तम्। अस्य जयसिंहस्य। कन्यकायामतिरागेणात्यासक्त्या जनितामुत्पादिताम्। नितान्तनिश्चलामतिदृढाम्। न निषिद्धो न निवारितः। तदासादने सरसि निमज्ज्य रूपान्तरलाभे दृढतराशयो निश्चलमतिः। जनान्ते देशमध्ये। 'जनो जनपदे प्रोक्तः' इति हलायुधः। न चिरस्थानं शस्तं 'यत्रास्तमितशायिनः' इति यतिधर्मनिरूपणात्। ग्रासादि कवलादिकम्। आसादितं मया प्राप्तम्। अनाचर्याविधाय। गतिर्देशान्तरगमनम्। आर्यैः सज्जनैर्गर्ह्या निन्द्या। चिरस्थानस्य बहुकालनिवासस्य। हृद्यगन्धेन मनोहारिपरिमलयुक्तेन। सिता शुभ्रा स्रङ्मालाऽङ्गरागो विलेपश्च यस्यैवंविधः। आराधितास्तोषिता धरणितले भूतले वर्तमानास्तैतिलगणाः देवा ब्राह्मणा येनैवंविधः। तिलस्नेहेन तिलतैलेन सिक्तासु, यष्टीनां लगुडानामग्रे ग्रथितासु बद्धासु वर्तिकासु यदग्निशिखासहस्रं तेन ग्रस्तो विनाशितो नैशान्धकारराशिर्येनैवंविधः। यतेथा उद्यमं कुरुष्व। कृतज्ञतामुपकारस्मरत्वम्। असांनिधिरसांनिध्यम्। आर्याणां पूज्यानाम्। कष्टा दुःखदात्री। निःसङ्गता साधुसंगरहितता। निरागसमनपराधिनम्। 'आगोऽपराधो मन्तुश्च' इत्यमरः। गरीयसामतिमहात्मनां गिरो वचनानि। अयासीद्गतः। **अहं चेति**। मन्त्रगुप्तः। सरस्तीरस्य तडागकूलस्य रन्ध्रे बिले निलीनः गुप्तः। छिद्रे सूक्ष्मविवरे दत्तकर्णो निहितश्रवणः। कृताऽनुष्ठिता यथादिष्टं मदुपदेशानुसारेण क्रिया येनैवंभूतः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

नानीय निराकृतान्तःशल्यं शङ्काहीनः सरःसलिलं सलीलगतिरगाहत । गतं च कीर्णकेशं संहतकर्णनासं सरसस्तलं हास्तिनं नक्रलीलया. नीरातिनिलीनतया तं तथा शयानं कंधरायां कन्थया व्यग्रहीषम् । खरतरकालदण्डघट्टनातिचण्डैश्च करचरणघातैर्निर्दयदत्तनिग्रहः क्षणेनैकेनाजहात्स चेष्टाम् । ततश्चाकृष्य तच्छरीरं छिद्रे निधाय नीरान्निरयासिषम् ।

सङ्गतानां च सैनिकानां तदत्यचित्रीयताकारान्तरग्रहणम् । गजस्कन्धगतः सितच्छत्रादिसकलराजचिह्नराजितश्चण्डतरदण्डिदण्डताडनत्रस्तजनदत्तान्तरालया राजवीथ्या यातस्तां निशां रसनयननिरस्तनिद्रारतिरनैषम् । नीते च जनाक्षिलक्ष्यतां लाक्षारसदिग्धदिग्गजशिरःसदृक्षे शक्रदिगङ्गनारत्नादर्शेऽर्कचक्रे कृतकरणीयः किरणजालकरालरत्नराजिराजितराजार्हासनाध्यासी यथासदृशाचा-

---

सन् । स्थानस्थाने तत्र तत्र प्रदेशे रचितरक्षः कृतात्मगुप्तिः । स राजा जयसिंहः । जालिकजनानायजीविपुरुषान् । निराकृतं त्यक्तमन्तःशल्यं मनोदुःखं यस्मिन्कर्मणि तद्यथा तथा । सरःसलिलमगाहत तडागजले निमज्जति स्म । कीर्णा विक्षिप्ताः केशाः शिरोरुहा यस्यैवंभूतम् । संहतं पिहितं कर्णनासं श्रोत्रे नासिका च येनैवंविधम् । तलमधोभागम् । हास्तिनं गजप्रमाणकम् । 'पुरुषहस्तिभ्यामण् च' इत्यणि 'इनण्यनपत्ये' इति प्रकृतिभावः । नक्रस्य मकरस्येव लीलया विलासेन । नीरे जले अतिनिलीनया नितरां निमग्नया । 'नीरक्षीराम्बुशम्बरम्' इत्यमरः । कन्धरायां ग्रीवादेशे । 'अथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः । कन्थयाऽऽवरणवस्त्रेण 'कन्था मृन्मयभित्तौ च तथा प्रावरणान्तरे' इति मेदिनी । न्यग्रहीषं निरुद्धवान् । खरतरोऽतिकठिनः यः कालदण्डो यमहस्तस्थितलगुडस्तेन यद्घट्टनं प्रहरणं तद्वदतिचण्डैः सुदुःसहैः । करचरणाघातैस्तत्प्रहारैः । निर्दयमनुकम्पाशून्यं यथा तथा दत्तनिग्रहः कृतशिक्षणः । अजहातपरितत्याज । 'ओहाक् त्यागे' । चेष्टां चैतन्यम् । तस्य जयसिंहस्य शरीरम् । छिद्रे रोधोबिले । निधाय स्थापयित्वा । नीराज्जलात् । निरयासिषं बहिरागतोऽहम् ।

**सङ्गतानामिति** । एकत्र संस्थितानाम् । सैनिकानां सेनासमवेतानाम् । अत्यचित्रीयत सुतरां विस्मयकारकं जातम् । आकारान्तरग्रहणं रूपान्तरधारणम् । गजस्य राजमातङ्गस्य स्कन्धगतः अंसोपविष्टः । सितच्छत्रं श्वेतातपत्रम् । तदादिभी राजचिह्नै राजितः शोभितः । चण्डतरं निर्दयं यद् दण्डिनां वेत्रपाणीनां किङ्कराणां दण्डताडनं यष्टिप्रहारस्तस्मात्त्रस्तैर्भीतैर्जनैर्दत्तान्तरालया त्यक्तमध्यया । राजवीथ्या राजमार्गेण । रसेन प्रीत्या नयनाद्यापनान्निरस्ता निद्रारतिः निद्रानन्दो यस्यैवंविधः । अनैषमतिवाहितवान् । जनाक्षिलक्ष्यतां लोकनयनगोचरताम् । लाक्षारसेनालक्तकलेपेन दिग्धं विलिप्तं यद्दिग्गजस्य शिरो मस्तकं तत्सदृशे तत्समाने । शक्रस्येन्द्रस्य या दिक् प्राची तस्या एवाङ्गनाया योषितो रत्नादर्शे मणिमयमुकुरतुल्ये । 'दर्पणे मुकुरादर्शौ' इत्यमरः । अर्कचक्रे सूर्यबिम्बे । कृतकरणीयो विहितसन्ध्याद्याचारः । किरणजालैः प्रभापटलैः कराला व्याप्ता या रत्नानां राजिः पङ्क्तिस्तया विराजितं शोभितं राजार्हं राजयोग्यं च यदासनं सिंहासनं तदध्यास्ते एवं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

रदर्शिनः शङ्कायन्त्रिताङ्गान्संनिधिनिषादिनः सहायानगादिषम्—'दृश्यतामार्षी शक्तिरार्षी, यत्तस्य यतेरजेयस्येन्द्रियाणां संस्कारेण नीरजसा नीरजसांनिध्यशालिनि सहर्षालिनि सरसि सरसिजदलसंनिकाशच्छायस्याधिकतरदर्शनीयस्याकारान्तरस्य सिद्धिरासीत् । अद्य सकलनास्तिकानां जयेत लज्जानतं शिरः । तदिदानीं चन्द्रशेखरनरकशासनसरसिजासनादीनां त्रिदशेशानां स्थानान्यादररचितनृत्यगीताराधनानि क्रियन्ताम् । ह्रियन्तां च गृहादितः क्लेशनिरसनसहान्यर्थिसार्थैर्धनानि' इति । आश्चर्यरसातिरेकहृष्टदृष्टयस्ते 'जय जगदीश, जयेन सातिशयं दश दिशः स्थगयन्निजेन यशसादिराजयशांसि' इत्यसकृदाशास्यारचयन्यथादिष्टाः क्रियाः । स चाहं दयितायाः सखीं हृदयस्थानीयां शशाङ्कसेनां कन्यकां कदाचित्कार्यान्तरागतां रहस्याचाक्षि—'कच्चिदयं जनः कदाचिदासीद्दृष्टः' इति । अथ सा हर्षकाष्ठां गतेन हृदयेनेषदालक्ष्य दशनदीधितिलतां लीलालसं लासयन्ती, ललिताञ्चितकरशाखान्तरितदन्तच्छदकिसलया, हर्षजलक्लेदजर्जरनिरञ्जनेक्षणा, रचिताञ्जलिः 'नितरां जाने यदि न

---

शीलः । यथासदृशान्स्वस्वाधिकारयोग्यानाचारात्राजमर्यादा दर्शयन्त्येवंविधान् । शङ्कया 'राज्ञोऽस्य रूपेण सह कदाचित्स्वभावोऽपि परिवृत्तो भवितुमर्हति, अतः किंवायं कथयिष्यति' इति भीत्या यन्त्रिताङ्गानतिसंकुचितगात्रान् । संनिधिनिषादिनः समीपवर्तिनः । सहायानमात्यादीन् । अगादिषमादिष्टवान् । **दृश्यतामिति** । आर्षी ऋषिसंबन्धिनी । यतेर्मुनीश्वरस्य । अजेयस्येन्द्रियाणां चक्षुरादीन्द्रियैरनाकर्षणयोग्यस्य । वशीकृतेन्द्रियस्येति भावः । नीरजसा रजोगुणसंपर्करहितेन । नीरजसांनिध्येन पद्मानां तत्र संनिहिततया शालिनि विशेषशोभान्विते । सहर्षाः पद्मस्थितमकरन्दास्वादनेन सानन्दा अलिनो मधुपा यस्मिन्नेतादृशे । सरसितडागे । सरसिजदलैः पद्मपलाशैः संनिकाशा समाना छाया कान्तिर्यस्यैवंविधस्य । सिद्धिरुपलब्धिः । नास्तिकानां निरीश्वरवादिनाम् । लज्जानतं त्रपयाऽधोमुखम् । चन्द्रशेखरो महादेवः । नरकशासनो विष्णुः । सरसिजासनो ब्रह्मा तदादीनां त्रिदशेशानां देवमुख्यानां स्थानान्यायतनानि । ह्रियन्तां यथेष्टं गृह्यन्ताम् । गृहादितो मदीयराजगृहादित्यर्थः । क्लेशनिरसने कष्टनिवारणे सहानि समर्थानि । अर्थिसार्थैर्याचकवर्गैः । आश्चर्यरसातिरेकेण विस्मयातिशयेन हृष्टदृष्टयः फुल्लनयनाः । जय सर्वोत्कर्षेण वर्तस्व । स्थगयन्निःसारीकुर्वन् । यशसा कीर्त्या । आदिराजानां मनुमान्धातृप्रमुखानाम् । आशास्य प्रार्थनां विधाय । आरचयन्व्यदधत । **स चाहमिति** । मन्त्रगुप्तः । दयिताया मत्प्रियायाः कनकलेखायाः । हृदयस्थानीयामत्यन्तरङ्गभूताम् । कार्यान्तरमुद्दिश्यागतां मन्निकटं प्राप्ताम् । आचक्षि कथितवान् । कच्चिदिति प्रश्ने । हर्षस्यानन्दस्य काष्ठामुपरितनीं सीमाम् । दशनानां दन्तानां दीधितिलतां किरणश्रेणीम् । ललितं सुन्दरं यथा तथाऽञ्चितेनेषत्संकोचितेन करेण शाखयेवाऽन्तरितः पिहितो दन्तच्छद ओष्ठः किसलयः पल्लव इव ययैतादृशी सती । हर्षजलस्यानन्दबाष्पस्य क्लेदेनार्द्रीभावेन जर्जरं विशीर्णमत एव निर्गतं चाञ्जनं नेत्रकज्जलं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

स्यादैन्द्रजालिकस्य जालं किंचिदेतादृशम् । कथं चैतत् । कथय, इति स्नेहनिर्यन्त्रणं शनैरगादीत् । अहं चास्यै कार्त्स्न्येनाख्याय, तदाननसंक्रान्तेन संदेशेन संजनय्य सहचर्या निरतिशयं हृदयाह्लादम्, ततश्चैतया व्यथितया निरर्गलीकृतातिसत्कृतकलिङ्गनाथन्यायदत्तया संगत्यान्ध्रकलिङ्गराजराज्यशासी तस्यास्यारिणा लिलङ्घयिषितस्याङ्गराजस्य साहाय्यकायालघीयसा साधनेनागत्यात्र ते सखिजनसंगतस्य यादृच्छिकदर्शनानन्दराशिलङ्घितचेता जातः ' इति ।

तस्य तत्कौशलं स्मितज्योत्स्नाभिषिक्तदन्तच्छदः सह सुहृद्भिरभिनन्द्य 'चित्रमिदं महामुनेर्वृत्तम् । अत्रैव खलु फलितमातिकष्टं तपः तिष्ठतु तावन्नर्म । हर्षप्रकर्षस्पृशोः प्रज्ञासत्त्वयोर्दृष्टमिह स्वरूपम्' इत्यभिधाय, पुनः ' अवतरतु भवान्' इति बहुश्रुते विश्रुते विकचराजीवसदृशं दृशं चिक्षेप देवो राजवाहनः ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते मन्त्रगुप्तचरितं नाम सप्तम उच्छ्वासः ॥ ७ ॥

---

## अष्टमोच्छ्वासः ॥ ८ ॥

अथ सोऽप्याचचक्षे–'देव, मयापि परिभ्रमता विन्ध्याटव्यां कोऽपि कुमारः क्षुधा तृषा च क्लिश्यन्नक्लेशार्हः क्वचित्कूपाभ्याशेऽष्टवर्षदेशीयो दृष्टः । स च

---

याभ्यामेवंभूते ईक्षणे नेत्रे यस्या एवंविधा सती । जालं कपटम् । स्नेहेन प्रेम्णा निर्यन्त्रणमप्रतिरुद्धम् । कार्त्स्न्येन समग्रतया । तस्याः शशांकसेनाया आनने मुखे संक्रान्तेन प्रतिबिम्बितेन । हृदयाह्लादं मनःसन्तोषं संजनय्योत्पाद्य । निरर्गलीकृतेन बन्धनान्मोचितेन, अत्यन्तं सत्कृतेन पूजितेन कलिङ्गनाथेन कर्दननाम्ना न्यायेन न्यायमनुसृत्य दत्तया मह्यमर्पितया । संगत्य रहःसंगं प्राप्य । आन्ध्रकलिङ्गराजयोर्जयसिंहकर्दनयो राज्यं शास्तीत्येवंशीलः । आरिणा शत्रुणा चण्डवर्मणा । लिलङ्घयिषितस्याक्रान्तुमिष्टस्य । अङ्गराजस्य सिंहवर्मणः । अलघीयसा महता साधनेन युद्धसामग्र्या सैन्येन सह । आगत्याङ्गदेशं प्राप्य । ते राजवाहनस्य, सखिजनैरपहारवर्मादिभिर्मित्रगणैः संगतस्य सहितस्य । यादृच्छिकमविचारेणोत्पन्नं यद्दर्शनं तज्जनितेनानन्दराशिना हर्षातिरेकेण लंघितचेता व्याप्तहृदयः ।

तस्येति । मन्त्रगुप्तस्य । कौशलं सामर्थ्यम् । अभिनन्द्य प्रशस्य । चित्रमाश्चर्यजनकम् । वृत्तमाचरणम् । अत्रैव भूलोक एव नर्म परिहासवचनम् । प्रज्ञासत्त्वयोर्बुद्धिबलयोः । बहु यथा तथा श्रुतमधीतं राजनीत्यादिकं येन स तस्मिन् । चिक्षेप निहितवान् ॥

इति श्रीदशकुमारचरितव्याख्याने मनोरमाख्याने सप्तम उच्छ्वासः समाप्तः ॥ ७ ॥

---

### अथाष्टम उच्छ्वासः ॥ ८ ॥

इदानीं विश्रुतः स्वकथां वर्णयितुमारभते–देवेति । परिभ्रमता देशाटनं कुर्वता । क्षुधा बुभुक्षया । तृषा जलपानाशया च । क्लिश्यन्दुःखमनुभवन् । अक्लेशार्हः विषादायोग्यः सुकुमारगात्रः इति भावः । कूपस्योन्धोरभ्याशे निकटे ' पुंस्येवान्धुः प्रहिः कूपः ' इत्यमरः । अष्टवर्षदेशीयः

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

त्रासगद्गदमगदत्—' महाभाग, क्लिष्टस्य मे क्रियतामार्य, साहाय्यकम् । अस्य मे प्राणापहारिणीं पिपासां प्रतिकर्तुमुदकमुदञ्चन्निह कूपे कोऽपि निष्कलो ममैकशरणभूतः पतितः । तमलमस्मि नाहमुद्धर्तुम्, । इति अथाहमभ्येत्य व्रतत्या कयापि वृद्धमुत्तार्य, तं च बालं वंशनालीमुखोद्धृताभिरद्भिः फलैश्च पञ्चषैः शरक्षेपोच्छ्रितस्य लकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य, तरुतलनिषण्णस्तं जरन्तमब्रवम्—'तात, क एष बालः, को वा भवान्, कथं चेयमापदापन्ना' इति । सोऽश्रुगद्गदमगदत्—' श्रूयतां महाभाग विदर्भो नाम जनपदः तस्मिन्भोजवंशभूषणम्, अंशावतार इव धर्मस्य, अतिसत्त्वः, सत्यवादी, वदान्यः, विनीतः, विनेता प्रजानाम्, रञ्जितभृत्यः, कीर्तिमान्, उदग्रः, बुद्धिमूर्तिभ्यामुत्थानशीलः, शास्त्रप्रमाणकः, शक्यभव्यकल्पारम्भी, संभावयिता बुधान्, प्रभावयिता सेवकान्, उद्भावयिता बन्धून्, न्यग्भाव-

---

ईषदपरिपूर्णाष्टवर्षः । 'ईषदसमाप्तौ कल्पप्–' इति देशीयः । त्रासेनोद्वेगेन गद्गदं स्वरभंगविशिष्टं यथा तथा । अगददाख्यातवान् । महाभाग हे सौम्यपुरुष । साहाय्यकं सहायभावः । पिपासां जलतृष्णाम् । प्रतिहर्तुं निवारयितुम् । उदञ्चन्कूपान्निष्कासयन् । निष्कलः प्रवयाः । 'निष्कलः स्थविरः समौ ' इति वैजयन्ती । तं कूपे निपतितं वृद्धम् । नालमस्म्यहं समर्थो नैव भवामि । ' अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ' इत्यमरः । व्रतत्या रज्जुस्थानमापादितया लतया । ' वल्ली तु व्रततिर्लता ' इत्यमरः । उत्तार्योद्धृत्य । वंशनाली वेण्वग्रभागनिबद्धपात्रविशेषयुक्तं जलोद्धरणयन्त्रं तस्या मुखेनोद्धृताभिः । पञ्चषैः पञ्चभिः षड्भिर्वा । 'संख्ययाऽव्ययासन्न–' इति बहुव्रीहिसमासे ' बहुव्रीहौ संख्येये डजबहुगणात्' इति समासान्तो डच् । शरक्षेपो बाणानामूर्ध्वपतनं तावत्पर्यन्तमुच्छ्रितस्योन्नतस्य । लकुचवृक्षस्य वृक्षविशेषस्य । ' लकुचो लिकुचो डहुः ' इत्यमरः । शिखराद्वृक्षाग्रात् । पाषाणेनाश्मना पातितैः स्रंसितैः । प्रत्यानीता जनिता प्राणवृत्तिः प्राणादिवायुसंचारो यस्यैवंभूतम् । तरुतले वृक्षाधोभागे निषण्ण उपविष्टः । जरन्तं जीर्णम् । 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इत्यमरः । आपद्विपत्तिः कूपपतनरूपाऽऽपन्ना जाता । स वृद्धः । **श्रूयतामिति** । जनपदो देशः । अंशेन कलयाऽवतारः प्रादुर्भावः । अत्यधिकं सत्त्वं बलं गुणो वा यस्यैवंविधः । ' सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः । पिशाचादावात्मभावे बले प्राणेषु जन्तुषु' इति हैमः । सत्यमेव वदतीत्येवंशीलः । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । वदान्यो दानशौण्डः । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः । विनीतो महत्सु पुरुषेषु नमनशीलः । विनेता विनयकारकः । रञ्जिता द्रव्यादिदानेनात्मनि प्रीतिमापादिता भृत्याः सेवका येनैवंविधः । कीर्तिमान्यशस्वी । बुद्धिर्मनीषा, मूर्तिः शरीरं ताभ्यामुत्थानशीलः उन्नतस्वभावः । शास्त्रमेव प्रमाणं कार्याकार्यनिर्णायकं यस्यैवंभूतः । ' शेषाद्विभाषा ' इति कप् । शक्यं स्वसाध्यम्, भव्यं श्रेयस्करम्, ' भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्' इत्यमरः । कल्पो न्यायादनपेतः । 'कल्पो न्याय्ये विधौ शास्त्रे संवर्ते ब्रह्मवासरे । कल्पद्रुमे विकल्पे च' इति महीपकोशः । एतादृशमारभते शक्यभव्यकल्पारम्भी । संभावयिता बहुमन्ता । तृन्नन्तमेतन्न तु

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

यिता शत्रून्, असंबद्धप्रलापेष्वदत्तकर्णः, कदाचिदप्यवितृष्णो गुणेषु, अतिनदीष्णः कलासु, नेदिष्ठो धर्मार्थसंहितासु, स्वल्पेऽपि सुकृते सुतरां प्रत्युपकर्ता, प्रत्यवेक्षिता कोशवाहनयोः, यत्नेन परीक्षिता सर्वाध्यक्षाणाम्, उत्साहयिता कृतकर्मणामनुरूपैर्दानमानैः, सद्यः प्रतिकर्ता दैवमानुषीणामापदाम्, षाड्गुण्योपयोगनिपुणः मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य, पुण्यश्लोकः, पुण्यवर्मा नामासीत् । स पुण्यैः कर्मभिः प्राप्य पुरुषायुषम्, पुनरपुण्येन प्रजानामगण्यतामरेषु । तदनन्तरमनन्तवर्मा नाम तदायतिरवनिमध्यतिष्ठत् । स सर्वगुणैः

---

तृजन्तम् । तथा सति 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधाप्रवृत्तेः 'कर्तृकर्मणोः कृति' इति सूत्रेण 'बुधान्' इत्यादौ षष्ठ्यापत्तेः । बुधान्पण्डितान् । प्रभावयिता सेवकान्वेतनजीविनां विशेषकाले दत्तैरर्थैः प्रभावं द्रव्याढ्यतां संजनयन् । न्यग्भावयिता तिरस्कुर्वाणः । असंबद्धेषु परस्परविरुद्धेषु प्रलापेषु निरर्थकवचनेषु । 'प्रलापोऽनर्थकं वचः' इत्यमरः । अवितृष्णो न संतुष्टः अतिनदीष्णो निपुणतरः । 'ष्णा शौचे' इत्यस्मान्नद्युपपदकात् 'आतोऽनुपसर्गे कः' इति कप्रत्यये 'निनदीभ्यां स्नातेः कौशले' इति षत्वम् । नेदिष्ठः समीपवर्ती । 'अन्तिकबाढयोर्नेदसाधौ' इति नेदादेशः । 'नदीष्णाभिज्ञनिष्णातप्रवीणनिपुणा अपि-' इति कोशः । धर्मार्थयोः प्रतिपादिकासु संहितासु सूतादिमहर्षिप्रणीतपुराणादिरूपासु । शिष्टैर्वाच्यमानास्विति शेषः । सुतरां नितान्तम् । प्रत्यवेक्षिता स्वयमन्वेषणशीलः । कोशो धनसंचयालयः, वाहनं गजादि, तयोः । सर्वेषामध्यक्षाणामधिकारिणाम् । उत्साहयितोत्साहजनकः । कृतकर्मणां संपादितमहाकार्याणाम् । दानैर्वेतनवितरणैर्मानैः पारितोषिकप्रदानैश्च । सद्यस्तत्कालमेव । दैवानां दैवजनितानां 'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं महत् । इति पञ्चविधं दैवम्' इत्युक्तानां, मानुषीणां शत्रुवर्गजनितानां च । आपदां कष्टानाम् । षाड्गुण्यं 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः' इत्यमरोक्तगुणषट्कम् । 'चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्' इति स्वार्थे ष्यञ्प्रत्ययः । तस्योपयोगे प्रयोगे निपुणः कुशलः । प्रणेता शिक्षकः । चातुर्वर्ण्यस्य ब्राह्मणादिवर्णचतुष्टयस्य । पुण्यश्लोकः पूतयशाः । 'पद्ये यशसि च श्लोकः' इत्यमरः । अतिसत्त्व इत्यादिनोक्तगुणानां राजन्यवश्यंभाव्यता च कथिता कामन्दकीये—'न्यायेनार्जनमर्थस्य वर्धनं रक्षणं तथा । सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम् । नयविक्रमसंपन्नः सूत्थानाश्चिन्तयेच्छ्रियम् । नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः ॥ शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता । उत्साहो वाग्मिता दार्ढ्यमापत्क्लेशसहिष्णुता । 'प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता । कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः ।' इति । याज्ञवल्क्येऽपि—'ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनो रिपौ । स्याद्राजा भृत्यवर्गे च प्रजासु च यथा पिता ।' इति ॥ **स इति ।** पुण्यवर्मा । पुरुषायुषं पुरुषाणां जीवनकालं शतसंवत्सरपर्यन्तमित्यर्थः । 'अचतुरविचतुर—' इत्यत्र निपातनात्साधुता । प्राप्य जीवित्वा । प्रजानां प्रकृतीनामपुण्येनाभाग्येन । अगण्यतामरेषु देवलोकं गत इति भावः । तदनन्तरं पुण्यवर्मणः स्वर्गवासानन्तरम् । तदायतिस्तस्मात्पुण्यवर्मण

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

समृद्धोऽपि दैवाद्दण्डनीत्यां नात्यादृतोऽभूत् । तमेकदा रहसि वसुरक्षितो नाम मंत्रिवृद्धः पितुरस्य बहुमतः प्रगल्भवागभाषत—'तात, सर्वैवात्मसंपदभिजनात्प्रभृत्यन्यूनैवात्रभवति लक्ष्यते । बुद्धिश्च निसर्गपट्वी, कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तरा तवेतरेभ्यः प्रतिविशिष्यते । तथाप्यसावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेषु,अनग्निसंशोधितेव हेमजातिर्नातिभाति बुद्धिः। बुद्धिहीनो हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते । न च शक्तः साध्यं साधनं वा विभज्य वर्तितुम् । अयथावृत्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते । न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय । अतिक्रान्तशासनाश्च प्रजा यत्किंचनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः संकिरेयुः । निर्मर्यादश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानं च भ्रंशयेत ।

---

आयत्तिरुत्पतिर्यस्यैवंविधः तत्पुत्र इति यावत् । अवनिं भुवम् । अध्यतिष्ठदधिष्ठितोऽभूत् । 'अधिशीङ्स्थासां कर्म' इति कर्मताऽवनेः । सर्वैरखिलैर्गुणै राजगुणैः । दैवाददृष्टवशतः । दण्डनीत्यां राजनीत्यामर्थशास्त्ररूपायाम् । न अत्यादृतो नात्यादरयुक्तः । तमनन्तवर्माणम् । एकदा कस्मिंश्चित्समये मन्त्रिवृद्धः सचिवमुख्यः । 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः । प्रगल्भा गम्भीरार्थयुक्ता वाग्वाणी यस्यैवंविधः । अभाषतोपदिदेश । अभिजनात्कुलात् । 'सन्ततिर्गोत्रजननकुलान्याभिजनान्वयौ' इत्यमरः । अन्यूना परिपूर्णैव । अत्र भवति त्वयि । निसर्गेण स्वभावत एव पट्वी निपुणा । 'वोतो गुणवचनात्' इति ङीष् । इतरेभ्योऽन्यजनापेक्षया । प्रतिविशिष्यते समुत्कृष्टा वर्तते । आत्मनो बुद्धेः संस्कारं परिचयम् । अर्थशास्त्रेषु दण्डनीतिषु । अप्रतिपद्यालब्ध्वा । 'आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः' इत्यमरः । अनग्निसंशोधिता वह्न्यावतप्ता । हेमजातिः सुवर्णजातिः । 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' इत्यमरः । नातिभाति नात्यन्तं प्रकाशयुक्ता भवति । भूभृद्राजा । अत्युच्छ्रितो नितरामुन्नतोऽपि । परैः शत्रुभिः । 'अभियातिपरारातिप्रत्यर्थिपरिपन्थिनः' इत्यमरः । अध्यारुह्यमाणमभिभूयमानम् । चेतयतेअवबुध्यते । 'चिती संज्ञाने' । साध्यं कार्यम् । साधनं कारणम् । विभज्य पृथग्विविच्य वर्तितुं व्यवहर्तुम् । अयथावृत्तो यथोचितव्यापाररहितः । कर्मसु कर्तव्याकर्तव्येषु । प्रतिहन्यमानः प्रतिरुद्ध्यमानः । स्वैरात्मीयजनैः । परैः शत्रुवर्गैः । परिभूयतेऽनादरं प्राप्यते । अवज्ञातस्य परिभूतस्य । प्रभवति शक्ता भवति । योगः अप्राप्तप्राप्तिः, क्षेमः प्राप्तसंरक्षणम्, 'अप्राप्तप्रापणं योगः क्षेमः प्राप्तस्य रक्षणम्' इति, तयोराराधनाय साधनाय । अतिक्रान्तशासना उल्लङ्घितराजनिदेशाः।यत्किंचनवादिन्यः स्वेच्छया कथयन्त्यः ।यथाकथंचिद्वर्तिन्यः स्वेच्छया व्यवहरन्त्यः। स्थितीर्मर्यादाः । संकिरेयुः संकीर्णा विदधीरन् । इतो लोकाद्भूलोकात् । अमुतः स्वर्गात् । स्वामिनं राजानम् । भ्रंशयेत पातयेत् । तदुक्तं याज्ञवल्क्येन—'अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः । तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान्' । कामन्दकेनापि—'अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा । वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥ स्वर्गानन्त्याय

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा । दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति । तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात्' अतो विहाय बाह्यविद्यास्वभिषङ्गमागमय दण्डनीतिं कुलविद्याम् । तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्वीम् । इति एतदाकर्ण्य स्थान एव गुरुभिरनुशिष्टम् । तथा क्रियते' इत्यन्तःपुरमविशत् । तां च वार्तां पार्थिवेन प्रमदासंनिधौ प्रसङ्गेनोदीरितामुपनिशम्य समीपोपविष्टश्चित्तानुवृत्तिकुशलः प्रसादवित्तो गीतनृत्यवाद्यादिष्ववाह्यो बाह्यनारीपरायणः पटुरयंत्रितमुखो बहुभङ्गिविशारदः परमर्मान्वेषणपरः परिहासयिता

---

धर्मोऽयं सर्वेषां वर्णिलिङ्गिनाम् । तस्याभावे च लोकोऽयं संकरान्नाशमाप्नुयात् । सर्वस्यास्य यथान्यायं भूपतिः संप्रवर्तकः । तस्याभावे धर्मनाशस्तदभावे जगच्च्युतिः ॥' इति । चाणक्येनाऽपि—'राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजाः ॥' इति । आगमो वेदः स एव दीपस्तेन दृष्टेन प्रकाशितेन । अध्वना मार्गेण । लोकस्य यात्रा स्थितिः । दिव्यमनुत्तमम् । व्यवहितं तिरोभूतं, विप्रकृष्टं दूरवर्ति एतदादिषु । विषयेषु पदार्थेषु । अप्रतिहतवृत्ति अविहतव्यापारम् । तेन शास्त्ररूपचक्षुषा । सतोर्विद्यमानयोरपि । आयतयोर्दीर्घयोर्विशालयोर्विस्तृतयोः । अन्धो दृष्टिरहित एव । अत एव कालिदासेनैवं वर्णितो राजा रघुः ।—'कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने । चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना' इति । बाह्यविद्यासु अन्यविद्यासु । अभिषङ्गमासक्तिम् । 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति वैजयन्ती । आगमय शिक्षय । दण्डनीतिमर्थशास्त्रम् । कुलविद्यां राजकुलोचितां परम्पराप्राप्तां च । आवर्जिताऽऽत्मन्युत्पादिता शक्तिः प्रभावोत्साहमन्त्रजत्वेन त्रिधारूपा, सिद्धिः कार्यसिद्धिश्च येनैवंविधः । अस्खलितशासनोऽच्युतनिदेशः । शाधि परिपालय । 'शासु अनुशिष्टौ' । 'शा हौ' इति शादेशः । उदधिमेखलां समुद्ररशनां तावत्पर्यन्तपरिमितामिति भावः । उर्वीं भूमिम् । **एतदिति** । वसुरक्षितनाम्नोऽमात्यवर्यस्योपदेशवाक्यम् । स्थाने एवोचितमेव । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । अनुशिष्टमुपदिष्टम् । अविशत्प्रविवेश । तां च वार्तां वसुरक्षितोपदेशवार्त्ताम् । पार्थिवेन राज्ञाऽनन्तवर्मणा । प्रमदासंनिधौ अवरोधस्त्रीसमाजसमक्षम् । 'प्रमदा मानिनी कान्ता' इत्यमरः । उदीरितां कीर्तिताम् । उपनिशम्य श्रुत्वा । चित्तानुवृत्तौ राज्ञोऽन्तःपुरवासिनीनां मनःसन्तोषणे कुशलो निपुणः । प्रसादेनावनीपत्यनुग्रहेण वित्तः लोकप्रसिद्धः । अबाह्यो न पृथग्भूतः तत्समयेऽवश्यसंनिहित इत्यर्थः । बाह्यनारीपरायणो वेश्याद्यासक्तः । अयन्त्रितं न पिहितं मुखं यस्यैवंविधः बहुभाषीत्यर्थः । बहुषु भङ्गीषु वक्रोक्तिषु विशारदः कुशलः । 'भङ्गी स्याद्वक्रभाषितम्' इति वैजयन्ती । परेषां मर्मणां छिद्राणामन्वेषणे प्रयत्नपुरःसरं ज्ञाने पर आसक्तः । परिवादोऽन्यनिन्दा तत्र रुचिः प्रीतिर्यस्यैवंभूतः । पैशुन्येन परमर्मप्रकाशनेन द्वयोरपि कलहोत्पादने पण्डितः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

परिवादरुचिः पैशुन्यपण्डितः सचिवमण्डलादप्युत्कोचहारी सकलदुर्नयोपाध्यायः कामतंत्रकर्णधारः कुमारसेवको विहारभद्रो नाम स्मितपूर्वं व्यज्ञपयत्—'देव, दैवानुग्रहेण यदि कश्चिद्भाजनं भवति विभूतेः, तमकस्मादुच्चावचैरुपप्रलोभनैः कदर्थयन्तः स्वार्थं साधयन्ति धूर्ताः। तथाहि। केचित्प्रेत्य किल लभ्यैरभ्युदयातिशयैराशामुत्पाद्य, मुण्डयित्वा शिरः, बद्ध्वा दर्भरज्जुभिः, अजिनेनाच्छाद्य, नवनीतेनोपालिप्य, अनशनं च शाययित्वा, सर्वस्वं स्वीकरिष्यन्ति। तेभ्योऽपि घोरतराः पाषण्डिनः पुत्रदारशरीरजीवितान्यपि मोचयन्ति। यदि कश्चित्पटुजातीयो नास्यै मृगतृष्णिकायै हस्तगतं त्यक्तुमिच्छेत्। तमन्ये परिवार्याहुः—'एकामपि काकिणीं कार्षापणलक्षमापादयेम, शस्त्रादृते सर्वशत्रून् घातयेम, एकशरीरिणमपि मर्त्यं चक्रवर्तिनं विदधीमहि, यद्यस्मदुद्दिष्टेन मार्गेणाचर्यते' इति। स पुनरिमान्प्रत्याह—'कोऽसौ मार्गः' इति। पुनरिमे ब्रुवते—'ननु चतस्रो राजविद्यास्त्रयी वार्तान्वीक्षिकी दण्डनीतिरिति। तासु तिस्रस्त्र-

---

सचिवमण्डलादमात्यवर्गात्। उत्कोचोऽधिकारं विनाऽपि गुप्तरूपेण यद्गृह्यते धनं सः, तं हरति बलाद्गृह्णाति एवंशीलः। सकलानां दुर्नयानां दुष्टव्यवहाराणामुपाध्यायः शिक्षकः। कामतन्त्रं कामशास्त्रं तत्र कर्णधारः प्रेरयिता। कुमारसेवकः कौमारावस्थामारभ्यैव राज्ञः परिचारकः। व्यज्ञपयद्विज्ञापयामास। देवेति। हे राजन्ननन्तवर्मन्। भाजनं पात्रम्। विभूते राजसंपदः। अकस्मात्कारणं विनैव। उच्चावचैर्नानाप्रकारैः। उपप्रलोभनैर्वञ्चनाप्रचुरवचनैः। कदर्थयन्तो दूषयन्तः। धूर्ता वञ्चकाः। प्रेत्य जन्मान्तरे स्वर्गादौ वा। 'प्रेत्यामुत्र भवान्तरे' इत्यमरः। किलेत्यनिश्चिते। अभ्युदयातिशयैः श्रेयोविशेषैः। मुण्डयित्वा वपनं कारयित्वा। अजिनेन मृगचर्मणा। 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः। नवनीतेन दधिसारेण। अनशनं निराहारम्। तेभ्योऽपि तदपेक्षयाऽपि घोरतरा अतिनिष्ठुराः। पाषण्डिनो नास्तिकाः। मोचयन्ति परित्याजयन्ति। 'प्रकारवचने जातीयर्' इति सूत्रेण जातीयर् पटुजातीय इत्यत्र। मृगतृष्णिकायै आशायै। हस्तगतं करास्थितं राज्यादिकम्। आहुः ब्रुवन्ति। 'ब्रुवः पञ्चानामादित—'इत्याहादेशो लट्प्रथमपुरुषबहुवचनस्योसादेशश्च। काकिणीं विंशतिवराटकान्। 'वराटकानां दशकद्वयं यत्सा काकिणी' इति भास्कराचार्यः। कार्षापणं। 'रुपया' इति प्रसिद्धं कर्षपरिमितं रजतम्। आपादयेम विदधीमहि। शस्त्रादृते खड्गाद्यायुधं विनैव। 'अन्यारादितरर्ते—' इति पञ्चमी। घातयेम विनाशयेम। 'हन हिंसागत्योः' इत्यतो णिचि 'हो हन्तेर्ञ्णिन्नेषु' 'हनस्तोऽचिण्णलोः' इति कुत्वतादेशौ। एकशरीरिणमसहायमपि। मर्त्यं पुरुषम्। चक्रवर्तिनं बहुराष्ट्रप्रवर्तकं सार्वभौममित्यर्थः। अस्माभिरुद्दिष्टेन प्रदर्शितेन। आचर्यते गम्यते। स राजा। त्रयी त्रयो वेदाः। 'स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी' इत्यमरः। वार्ता जीविकार्जनतन्त्रम्। आन्वीक्षिकी तर्कशास्त्रम्। दण्डनीतिरर्थशास्त्रम्। 'आन्वीक्षिकी

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

यीवार्तान्वीक्षिक्यो महत्यो मन्दफलाश्च, तास्तावदासताम्। अधीष्व तावद्दण्डनीतिम्। इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता। सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमा' इति। स 'तथा' इत्यधीते। शृणोति च। तत्रैव जरां गच्छति। तत्तु किल शास्त्रं शास्त्रान्तरानुबन्धि। सर्वमेव वाङ्मयमविदित्वा न तत्त्वतोऽधिगंस्यते। भवतु कालेन बहुनाल्पेन वा तदर्थाधिगतिः। अधिगतशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यम्। आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः संपद्यते। इयत ओदनस्य पाकायैतावदिन्धनं पर्याप्तमिति मानोन्मानपूर्वकं देयम्। उत्थितेन च राज्ञा क्षालिताक्षालिते मुखे मुष्टिमर्धमुष्टिं वाभ्यन्तरीकृत्य कृत्स्नमायव्ययजातमह्नः प्रथमेऽष्टमे वा भागे श्रोतव्यम्। शृण्वत एवास्य द्विगुणमपहरन्ति तेऽध्यक्षधूर्ताश्चत्वारिंशतं चाणक्योपदिष्टानाहरणोपायान्सहस्रधात्मबुद्ध्यैव ते विकल्पयितारः। द्वितीयेऽन्योन्यं विवदमानानां जनानामाक्रोशाद्दह्यमानकर्णः कष्टं जीवति। तत्रापि प्राड्विवाकादयः स्वेच्छया जयपराजयौ विदधानाः, पापेनाकीर्त्या च

---

दण्डनीतिस्तर्कविद्याऽर्थशास्त्रयोः' इत्यमरः। तत्तत्प्रतिपाद्यविषयास्त्वेवम्। 'आन्वीक्षिक्यां तु विज्ञानं धर्माधर्मौ त्रयीस्थितौ। अर्थानर्थौ च वार्तायां दण्डनीत्यां नयानयौ' इति मनुः। महत्योऽतिविस्तृता दुरवगाहाश्च। मन्दफला अल्पप्रयोजनाः। आसतामनावश्यककोटौ तिष्ठन्तु। अधीष्व पठ। मौर्यार्थे मौर्यराजं निजशिष्यमुद्दिश्य। संक्षिप्ता संकोचेन प्रतिपादिता। अनुष्ठीयमानाऽऽचर्यमाणा। यथोक्तकर्मसु शस्त्रं विनैव शत्रुमारणादिषु क्षमा शक्ता। अधीते पठितुमारभते। तत्रैव दण्डनीत्यभ्यासकाल एव। जरां वृद्धताम्। शास्त्रान्तरानुबन्धि अन्यशास्त्रसापेक्षम्। वाङ्मयं वाग्जालम्। अविदित्वा न बुद्ध्वा। तत्त्वतो यथार्थतया। नाधिगंस्यतेऽवगता नैव भविष्यति। तदर्थस्य राजनीतिशास्त्रार्थस्यावगतिः परिज्ञानम्। अधिगतशास्त्रेण पठितविद्येन। विश्वास्यं विश्वसितुमुचितम्। आत्मकुक्षेः स्वोदरस्यापि। इयानेतावत्परिमितः। 'किमिदंभ्यां वो घः' इति परिमाणार्थे वतुप् वस्य घश्च। ओदनोऽन्नम्। पाकाय संस्काराय। इन्धनं दारु। मानः प्रस्थादिपरिमाणम्। उन्मानं तुलादिपरिमाणम्। 'तुलावच्छेद उन्मानं मानः प्रस्थादिभिः कृतः' इति वैजयन्ती। तत्पूर्वकम्। उत्थितेन भोजनाद्विरतेन। मुष्टिं तत्परिमितं भक्ष्यावशिष्टम्। अभ्यन्तरीकृत्य कालान्तरार्थं संरक्ष्य। कृत्स्नं समस्तम्। श्रोतव्यमाकर्णनीयम्। शृण्वत एवास्य आकर्णयन्तमप्येनं राजानमनादृत्य। 'षष्ठी चानादरे' इति षष्ठी। अपहरन्ति मुष्णन्ति। अध्यक्षधूर्ता वञ्चकाधिकारिणः। आहरणोपायान् चौर्योपायान्। सहस्रधा सहस्रप्रकारेण। विकल्पयितारः संशयं कुर्वन्तः। द्वितीये इत्यादौ सर्वत्र 'अह्नो भागे' इति योजनीयम्। विवदमानानां कलहकारिणाम्। आक्रोशात् 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषितम्। तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति' इत्यमरः। प्राड्विवाको व्यवहारनिर्वाहकः। 'द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ' इत्यमरः। विदधाना निर्णयन्तः।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

भर्तारमात्मनश्चार्थैर्योजयन्ति । तृतीये स्नातुं भोक्तुं च लभते । भुक्तस्य यावदन्धःपरिणामस्तावदस्य विषभयं न शाम्यत्येव । चतुर्थे हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति । पञ्चमे मंत्रचिन्तया महान्तमायासमनुभवति । तत्रापि मंत्रिणो मध्यस्था इवान्योन्यं मिथः संभूय दोषगुणौ दूतचारवाक्यानि शक्याशक्यतां देशकालकार्यावस्थाश्च स्वेच्छया विपरिवर्तयन्तः, स्वपरमित्रमण्डलान्युपजीवन्ति । बाह्याभ्यन्तरांश्च कोपान् गूढमुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनमवशमवगृह्णन्ति । षष्ठे स्वैरविहारो मंत्रो वा सेव्यः ॥ सोऽस्यैतावान्स्वैरविहारकालो यस्य तिस्रस्त्रिपादोत्तरा नाडिकाः । सप्तमे चतुरङ्गबलप्रत्यवेक्षणप्रयासः । अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेशः । पुनरुपास्यैव संध्याम्, प्रथमे रात्रिभागे गूढपुरुषा द्रष्टव्याः । तन्मुखेन चातिनृशंसाः शस्त्राग्निरसप्रणिधयोऽनुष्ठेयाः । द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभेत । तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत किल । कथमिवास्या-

---

भर्तारं राजानम् । अर्थैरुत्कोचरूपेण गृहीतद्रव्यैः । लभतेऽवकाशमिति शेषः । भुक्तस्य कृतभोजनस्य । 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इति सूत्रेण कर्माधिकरणयोरेव क्तस्य विधानेऽपि भुक्तमस्यास्तीत्यर्थे क्तान्तादर्श आद्यच् । यावत् यावता कालेन । अन्वसोऽन्नस्य परिणामः पाकः । विषभयं 'विषमन्ने केनचिन्मद्वैरिणा योजितं किं स्यात्' इति भीतिः । न शाम्यति नैवापगता भवति । हिरण्यप्रतिग्रहाय स्वकीयकरद्रव्यादानाय । मन्त्राचिन्तया गुप्तभाषणविचारेण । आयासं खेदम् । मध्यस्थास्तटस्था इव । मिथः संभूय परस्परं मिलिताः सन्तः । दूतः प्रेष्यः, चारो गूढपुरुषः, तयोर्वाक्यानि । शक्याशक्यतां साध्यासाध्यत्वम् । अत्र शत्रोः इति शेषः । विपरिवर्तयन्तः विपर्यासं कुर्वन्तः । गूढमप्रकाशम् । प्रकाशं प्रत्यक्षे । प्रशमयन्तः शान्तिं कारयन्तः । अवशं स्वयं विचारशून्यम् । स्वैरविहारो यथेच्छया क्रीडनम् । **सोऽस्येति** । स्वैरविहारस्य कालः समयः । तिस्रस्त्रिपादोत्तरा नाडिका यामार्धपर्यन्तमित्यर्थः । चतुरङ्गं द्यूतक्रीडाप्रकारः । सेनापतिसखस्य चमूपतिसमेतस्य । 'राजाहःसखिभ्यष्टच्' इति तत्पुरुषसमासान्तष्टच् । विक्रमचिन्ता स्वबलाबलविचारस्तज्जातः क्लेशो दुःखम् । द्रष्टव्याः विचारणीयाः । तन्मुखेन चारद्वारा । अतिनृशंसा नितरां क्रूराः । शस्त्रप्रणिधिः खड्गादिना शत्रोर्मारयिता चारः । अग्निप्रणिधिर्गृहदाहादिना मारकः । रसप्रणिधिर्विषदायी चारः । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इति मेदिनी । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यते' इति न्यायेन प्रणिधिशब्दस्य शस्त्रादिना सह प्रत्येकमन्वयः । 'यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः' इत्यमरः । अनुष्ठेयाः प्रयोक्तव्याः । श्रोत्रियश्छन्दोऽध्येता । 'श्रोत्रियं छन्दोऽधीते' इति निपातनात्साधुताऽस्य । 'श्रोत्रियच्छान्दसौ समौ' इत्यमरः । 'एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च । षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्' इति स्मृतिवचनं च । स्वाध्यायं वेदाभ्यासम् । तूर्यघोषेण वाद्यविशेषशब्देन । संविष्टः शयितः । 'संवेशः शयने स्थाने सत्समा-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

जस्रचिन्तायासविह्वलमनसो वराकस्य निद्रासुखमुपनमेत्। पुनः षष्ठे शास्त्रचिन्ताकार्यचिन्तारम्भः। सप्तमे तु मंत्रग्रहो दूताभिप्रेषणानि च। दूताश्च नामोभयत्र प्रियाख्यानलब्धानर्थान्वीतशुल्कबाधवर्त्मनि वाणिज्यया वर्धयन्तः, कार्यमाविद्यमानमपि लेशेनोत्पाद्यानवरतं भ्रमन्ति। अष्टमे पुरोहितादयोऽभ्येत्यैनमाहुः–'अद्य दृष्टो दुःस्वप्नः। दुःस्था ग्रहाः शकुनानि चाशुभानि। शान्तयः क्रियन्ताम्। सर्वमस्तु सौवर्णमेव होमसाधनम्। एवं सति कर्म गुणवद्भवति। ब्रह्मकल्पा इमे ब्राह्मणाः। कृतमेभिः स्वस्त्ययनं कल्याणतरं भवति। ते चामी कष्टदारिद्र्या बह्वपत्या यज्वानो वीर्यवन्तश्चाद्याप्यप्राप्तप्रतिग्रहाः। दत्तं चैभ्यः स्वर्ग्यमायुष्यमरिष्टनाशनं च भवति' इति बहु बहु दापयित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति। तदेवमहर्निशमविहितसुखलेशमायासबहुलमविरलकदर्थनं च नयतोऽनयज्ञस्यास्तां चक्रवर्तिता स्वमण्डलमात्रमपि दुरारक्ष्यं भवेत्। शास्त्रज्ञसमाज्ञातो हि यद्ददाति, यन्मानयति, यत्प्रियं ब्रवीति, तत्सर्वमतिसंधातुमित्यविश्वासः। अविश्वासता हि जन्मभूमिरलक्ष्म्याः। यावता च नयेन विना न लोकयात्रा स लोक एव सिद्धः नात्र शास्त्रेणार्थः। स्तनंधयोऽ-

---

रोहणेऽपि च' इत्यजयः। 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरश्च। शयीत निद्रां कुर्यात्। अजस्रं सर्वदा चिन्तया नानाविचारेण आयासेन श्रमेण च विह्वलमनसः खिन्नचित्तस्य। वराकस्य शोचनीयस्य। उपनमेत् संनिहितं भवेत्। उभयत्र स्वसेव्यराजनि तच्छत्रौ च। प्रियाख्यानेन प्रियभाषणेन लब्धान्प्राप्तान्। अर्थान्धनानि। वीताऽपगता शुल्कबाधा करदानोपद्रवो यत्रैतादृशे वर्त्मनि मार्गे। वाणिज्यया क्रयविक्रयव्यापारेण। वर्धयन्तो द्विगुणं त्रिगुणं वाऽऽपादयन्तः। लेशेन स्वल्परूपेण। अनवरतमजस्रम्। 'नित्यानवरताजस्रम्' इत्यमरः। अभ्येत्य तत्समीपं गत्वा। दुःस्थाः क्रूरस्थानवर्तिनः। ग्रहा रव्यादयो नव। सौवर्णं सुवर्णमयम्। सर्वमपि होमसाधनं होमोपकरणम्। एवं सति होमोपकरणे सुवर्णनिर्मिते सति। गुणवत्फलदायकम्। ब्रह्मकल्पा मुखचतुष्टयवत्त्वरूपैकांशेन हीनत्वेऽपि अन्यांशे तत्समाना एव। 'ईषदसमाप्तौ कल्पप्–' इति कल्पप्प्रत्ययः। स्वस्त्ययनं शान्तिकारकं कर्म कल्याणतरं श्रेयस्करतरम्। अप्राप्तप्रतिग्रहा अकृतप्रतिग्रहाः। स्वर्ग्यं स्वर्गप्रापकम्। आयुष्यमायुर्वर्धकम्। अरिष्टनाशनं कष्टनिवारकम्। तन्मुखेन ब्राह्मणद्वाराऽपि। उपांशु रहसि। **तदेवमिति**। आयासबहुलं कष्टप्रायम्। नयतो यापयतः। अनयज्ञस्य न नीतिज्ञस्य। स्वमण्डलमात्रं निजराष्ट्रमेकमपि। शास्त्रज्ञसमाज्ञातो नीतिशास्त्रज्ञत्वेन कीर्तितो लोकैः। 'यशः कीर्तिः समज्ञा च' इत्यमरः। अतिसंधातुं वञ्चयितुम्। अविश्वासता विश्वासरहितत्वम्। जन्मभूमिरुत्पत्तिस्थानम्। अलक्ष्म्या दारिद्र्यस्य। नात्र शास्त्रेणार्थोऽस्मिन्विषये शास्त्रं मन्दफलमिति भावः। स्तनंधयः शिशुः। 'नासिकास्तन-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पि हि तैस्तैरुपायैः स्तनपानं जनन्या लिप्सते तदपास्यातियन्त्रणामनुभूयन्तां यथेष्टमिन्द्रियसुखानि। यऽप्युपदिशन्ति 'एवमिन्द्रियाणि जेतव्यानि, एवमरिषड्वर्गस्त्याज्यः, सामादिरुपायवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः, संधिविग्रहचिन्तयैव नेयः कालः, स्वल्पोऽपि सुखस्यावकाशो न देयः' इति, तैरप्येभिर्मन्त्रिवकैर्युष्मत्तश्चौर्यार्जितं धनं दासीगृहेष्वेव भुज्यते। के चैते वराकाः। येऽपि मन्त्रकर्कशास्तन्त्रकर्तारः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयस्तैःकिमरिषड्वर्गो जितः, कृतं वा तैः शास्त्रानुष्ठानम्। तैरपि हि प्रारब्धेषु कार्येषु दृष्टे सिद्ध्यसिद्धी। पठन्तश्चापठद्भिरतिसंधीयमाना बहवः। नन्विदमुपपन्नं देवस्य, यदुत सर्वलोकस्य वन्द्या जातिः, अयातयामं वयः, दर्शनीयं वपुः, अपरिमाणा विभूतिः। तत्सर्वं सर्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात्सर्वकार्येष्वमुक्तसंशयेन तन्त्रावापेन मा कृथा वृथा। सन्ति हि ते दन्तिनां दशसहस्राणि, हयानां लक्षत्रयम्, अनन्तं च पादातम्। अपि च पूर्णान्येव हैमरत्नैः कोशगृहाणि। सर्वश्चैष जीवलोकः समग्रमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि रेचयिष्यति। किमिदमपर्याप्तं यदन्यायार्जितायासः क्रियते।

---

योर्म्याधेटोः' इति खश् 'अरुर्द्विषदजन्तस्य मुम्' इति मुम्। तैस्तैर्नानाविधैः। उपायै रोदनादिरूपैः। लिप्सते प्राप्तुमिच्छति। तत्तस्मात्कारणात्। अपास्य निराकृत्य। अतियन्त्रणां शास्त्रनिर्बन्धम्। इन्द्रियाणां चक्षुरादीनां सुखानि आह्लादजनकानि रूपादीनि। अरिषड्वर्गः कामादिशत्रुवर्गः। सामादिः सामदानभेददण्डाः। सन्धिः शत्रुणा सहैक्यभावः। विग्रहो युद्धम्। तयोश्चिन्तया विचारेण। मन्त्रिवकैः कुत्सितामात्यैः। 'अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः। शठो मिथ्या विनीतश्च बकव्रतिचरो द्विजः' इति मनुः। 'कुत्सितानि कुत्सनैः' इति समासः। चौर्यार्जितमन्ययायेन गृहीतम्। दासीगृहेषु गणिकागृहेषु। भुज्यतेऽनुभूयते। वराका धूर्ताः। मन्त्रकर्कशा मन्त्रशास्त्रनिपुणाः। कृतं वा तैनैव कृतमिति भावः। प्रारब्धेषूपक्रान्तेषु। अपठद्भिरशास्त्रज्ञैः। अतिसंधीयमानाः प्रतार्यमाणाः। नन्विति। उपपन्नं साधुतरम्। वन्द्याऽऽराध्या। जातिः क्षत्रियजातिः। अयातयामं नूतनम्। अपरिमाणेयत्ताशून्या। विभूतिः सम्पत्। सर्वेषामुपर्यविश्वासस्याविश्रम्भस्य हेतुना निदानभूतेन। सुखोपभोगस्य सुखानुभवस्य प्रतिबन्धिना विघ्नकारिणा। अमुक्तः संशयो यत्रैवंविधेन। सदा सन्देहयुक्तेनेत्यर्थः। तन्त्रावापेनात्मशत्रुराष्ट्रचिन्तया 'तन्त्रः स्वराष्ट्रचिन्तायामावापः परचिन्तनम्' इति कोशः। मा कृथा वृथा निष्प्रयोजनं मा कुरु। दन्तिनां हास्तिनाम्। हयानामश्वानाम्। अनन्तमपरिमितं पादातं पत्तिसमूहः। सामूहिकोऽणत्र। 'पादातं पत्तिसंहतिः' इत्यमरः। कोशगृहाणि घनानिक्षेपस्थानानि। समग्रं संपूर्णम्। भुञ्जानो भोजनं कुर्वन्। कोष्ठागाराणि धान्यसंचयस्थानानि। 'पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा' इत्यमरः। रेचयिष्यति धान्यै रिक्तं करिष्यति। किमिदमपर्याप्तं न किं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

जीवितं हि नाम जन्मवतां चतुःपञ्चान्यहानि । तत्रापि भोगयोग्यमल्पाल्पं वयः-खण्डम् । अपण्डिताः पुनरर्जयन्त एव ध्वंसन्ते । नार्जितस्य वस्तुनो लवमप्यास्वादयितुमीहन्ते । किं बहुना राज्यभारं भारक्षमेष्वन्तरङ्गेषु भक्तिमत्सु समर्प्य, अप्सरःप्रतिरूपाभिरन्तःपुरिकाभी रममाणो गीतसंगीतपानगोष्ठीश्च यथर्तु बध्नन्यथार्हं कुरु शरीरलाभम्' इति पञ्चाङ्गीस्पृष्टभूमिरञ्जलिचुम्बितचूडश्चिरमशेत । प्राहसीच्च प्रीतिफुल्ललोचनोऽन्तःपुरप्रमदाजनः । जननाथश्च सस्मितम् 'उत्तिष्ठ, ननु हितोपदेशाद्गुरवो भवन्तः । किमिति गुरुत्वविपरीतमनुष्ठितम्' इति तमुत्थाप्य क्रीडानिर्भरमातिष्ठत् । अथैषु दिनेषु भूयोभूयः प्रस्तुतेऽर्थे प्रेर्यमाणो मन्त्रिवृद्धेन, वचसाभ्युपेत्य मनसैवाचित्तज्ञ इत्यवज्ञातवान् । अथैवं मन्त्रिणो मनस्यभूत्—'अहो मे मोहाद्बालिश्यम् । अरुचितेऽर्थे चोदयन्नर्थीवाक्षिगतोऽहमस्य हास्यो जातः । स्पष्टमस्य चेष्टानामायथापूर्व्यम् । तथा हि । न मां स्निग्धं

---

संपूर्णमिदं संपूर्णमेवेति भावः । यद्यस्मात्कारणात् । अन्यायेनामार्गेणार्जिते संपादने आयासो यत्नः । **जीवितं हीति** । जन्मवतां प्राणिनाम् । अहानि दिनानि । चतुःपञ्चानि चत्वारि पञ्च वा । 'संख्ययाऽव्यया--' इति समासे 'बहुव्रीहौ संख्येये--' इति डच् । भोगयोग्यं सुखानुभवे साधु । अल्पाल्पमत्यल्पम् । अर्जयन्तो धनसंपादनं कुर्वन्त एव । ध्वंसन्ते विनाशं गच्छन्ति । 'ध्वंसु अधःपतने' । लवमेकमप्यंशम् । आस्वादयितुमुपभोक्तुमीहन्ते इच्छन्ति । किं बहुना अधिकभाषणेन किमपि फलं नास्तीति भावः । भारक्षमेषु निर्वहणदक्षेषु अन्तरङ्गेषु आप्तेषु । भक्तिमत्सु राजनि त्वयि विश्वासयुक्तेषु । समर्प्य न्यस्य । अप्सरःप्रतिरूपाभिरमरवेश्यासदृशीभिः । अन्तःपुरिकाभिरवरोधवासिनीभिरङ्गनाभिः । रममाणो विहरन् । यथर्तु ऋतुमनुसृत्य । बध्नन्कुर्वन् । यथार्हं यथोचितम् । शरीरलाभं जन्मधारणम् । पञ्चानामङ्गानां समाहारः पञ्चाङ्गी । 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वे 'द्विगोः' इति ङीप् । तया स्पृष्टा भूमिर्येनैवंभूतः । 'जानू बाहुद्वयं मूर्धा' इत्युत्पलिनी । अञ्जलिना करयुगलबन्धेन चुम्बिता स्पृष्टा चूडा यस्यैवंभूतः । चिरं बहुकालपर्यन्तम् । अशेत राजप्रणामाय पादयोः पतितस्तथैव स्थित इति भावः । प्रमदाजनः स्त्रीजनः । **जननाथ इति** । राजाऽनन्तवर्मा । गुरवो गुरुस्थानमापन्ना ममेत्यर्थः । किमिति किमर्थम् । गुरुत्वस्य विपरीतं प्रतिकूलं गुरोरल्पवयस्कत्वेऽपि शिष्यं प्रति प्रणामनिषेधादिति भावः । तं विहारभद्रनामानम् । प्रस्तुतेऽर्थे प्रकृतकार्ये दण्डनीत्यभ्यासरूपे । प्रेर्यमाणः प्रयोज्यमानः । मन्त्रिवृद्धेनामात्यवर्येण वसुरक्षितनाम्ना । वचसा 'स्थाने एव गुरुभिस्तुशिष्टं, तथा क्रियते' इत्यादिवाक्येन । अभ्युपेत्याङ्गीकृत्य । अचित्तज्ञः पराभिप्रायमजानानः । अवज्ञातवांस्तिरश्चकार । बालिश्यं मूर्खता । 'मूर्खवैधेयबालिशाः' इत्यमरः । अरुचितेऽनभीष्टेऽर्थे कार्ये । चोदयन्प्रेरयन् । अर्थीव याचक इव । अक्षिगतो द्वेषपात्रतां प्राप्तः । 'द्वेष्योऽक्षिगत इष्यते' इति हलायुधः । हास्यो निन्दनीयः । आयथापूर्व्यं पूर्वविपरीतभावः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पश्यति, न स्मितपूर्व भाषते, न रहस्यानि विवृणोति, न हस्ते स्पृशति, न व्यसनेष्वनुकम्पते, नोत्सवेष्वनुगृह्णाति, न विलोभनवस्तु प्रेषयति, न मत्सुकृतानि प्रगणयति, न मे गृहवार्तां पृच्छति, न मत्पक्षान्प्रत्यवेक्षते, न मामासन्नकार्येष्वभ्यन्तरीकरोति, न मामन्तःपुरं प्रवेशयति। अपि च मामनर्हेषु कर्मसु नियुङ्क्ते, मदासनमन्यैरवष्टभ्यमानमनुजानाति, मद्वैरिषु विश्रम्भं दर्शयति, मदुक्तस्योत्तरं न ददाति, मत्समानदोषान्विगर्हति, मर्माणि मामुपहसति, स्वमतमपि मया वर्ण्यमानं प्रतिक्षिपति, महार्हाणि वस्तूनि मत्प्राहितानि नाभिनन्दति, नयज्ञानां स्खलितानि मत्समक्षं मूर्खैरुद्घोषयति। सत्यमाह चाणक्यः—'चित्तज्ञानानुवर्तिनोऽनर्था अपि प्रियाः स्युः। दाक्षिणा अपि तद्भावबहिष्कृता द्वेष्या भवेयुः' इति। तथापि का गतिः। अविनीतोऽपि न परित्याज्यः पितृपितामहानुयातैरस्माद्दशैरयमाधिपतिः। अपरित्यजन्तोऽपि कमुपकारमश्रूयमाणवाचः कुर्मः। सर्वथा नयज्ञस्य वसन्तभानोरश्मकेन्द्रस्य हस्ते राज्यमिदं पतितम्। अपि नामापदो भाविन्यः प्रकृतिस्थमेनमापादयेयुः। अनर्थेषु सुलभव्यलीकेषु क्वचिदुत्पन्नोऽपि द्वेषः सद्वृत्तमस्मै रोचयेत्। भवतु भविता तावदनर्थः। स्तम्भितपिशुनजिह्वो यथाकथंचिदभ्रष्टपदास्तिष्ठेयम्' इति। एवं

---

स्निग्धं प्रणयसहितं यथा तथा। विवृणोति प्रकाशयति। व्यसनेषु संकटेषु। अनुकम्पते दयां करोति। अनुगृह्णाति मानदानादिना संभावयति। विलोभनवस्तु चित्ताह्लादकपदार्थम्। मम सुकृतानि उपकारान्। गृहवार्तां कुटुम्बसमाचारं पृच्छत्यनुयुंक्ते। आसन्नकार्येषु प्राप्तकार्येषु। अभ्यन्तरीकरोति विचारसहायतया स्थापयति। अनर्हेष्वयोग्येषु। अवष्टभ्यमानं बलादाक्रम्यमाणम्। विश्रम्भं विश्वासम्। उत्तरं प्रतिवचनमपि। प्रतिक्षिपति दूरीकरोति। महार्हाणि बहुमूल्यान्यपि। नयज्ञानां नीतिशास्त्रवेदिनाम्। स्खलितानि दूषणानि। मम समक्षमाभिमुख्ये। उद्घोषयति प्रकाशयति। चाणक्यो नीतिशास्त्रप्रवर्तकः। चित्तज्ञानमनुवर्तन्ते तदनुसारेण चरन्ति ये तादृशाः। प्रिया रुचिकराः। दाक्षिणाः सरला अपि। तस्य चित्तस्य भावबहिष्कृता आशयविपरीताचाराः। द्वेष्या मत्सरपात्राणि। अविनीतो गर्वितोऽपि। न परित्याज्यो विहातुमनुचितः। पितृपितामहानुयातैः पित्रादिकुलपरम्परया सचिवपदंप्राप्तैः। अधिपतिः राजाऽनन्तवर्मा। कमुपकारं कुर्मः कमप्युपकारं न कुर्म इति भावः। अश्रूयमाणा राज्ञाऽनाकर्ण्यमाना वाग्येषामेवंभूताः। अश्मकेन्द्रस्याश्मकदेशाधिपतेः। राज्यमिदं विदर्भनगरम्। अपि नामेति संभावनायाम्। भाविन्यो भविष्यन्त्यः। प्रकृतिस्थं न्यायमार्गवर्तिनमेनमनन्तवर्माणम्। आपादयेयुः कुर्युः। क्वचिन्मादृशेषु पुरुषेषूत्पन्नोऽपि जातोऽपि द्वेषो मत्सरः सुलभव्यलीकेषु सुलभापराधेष्वनर्थेषु वैरिकृतोपद्रवेषु जातेषु सत्सु अस्मै राज्ञे सद्वृत्तं सन्मार्गं रोचयेत्प्रियं कुर्यात्। 'व्यलीकमपराधः स्यात्' इत्यमरः। स्तम्भिता तूष्णींभावमापादिता पिशुनानां खलानां जिह्वा



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

गते मन्त्रिणि, राजानि च कामवृत्ते, चन्द्रपालितो नामाश्वकेन्द्रामात्यस्येन्द्रपालितस्य सूनुः, असद्वृत्तः पितृनिर्वासितो नाम भूत्वा, बहुभिश्चारणगणैर्बह्वीभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकच्छन्नाकिंकरैश्च परिवृतोऽभ्येत्य विविधाभिः क्रीडाभिर्विहारभद्रमात्मसादकरोत्। अमुना चैव संक्रमेण राजन्यास्पदमलभत। लब्धरन्ध्रश्च स यद्यद्व्यसनमारभते तत्तथेत्यवर्णयत्—'देव, यथा मृगया ह्यौपकारिकी न तथान्यत्। अत्र हि व्यायामोत्कर्षादापत्सूपकर्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजवः, कफापचयादारोग्यैकमूलमाशयाग्निदीप्तिः, मेदोपकर्षादङ्गानां स्थैर्यकार्कश्यातिलाघवादीनि, शीतोष्णवातवर्षक्षुत्पिपासासहत्वम्, सत्त्वानामवस्थान्तरेषु चित्तचेष्टितज्ञानम्, हरिणगवलगवयादिवधेन सस्यलोपप्रतिक्रिया, वृकव्याघ्रादिघातेन स्थलपथशल्यशोधनम्, शैलाटवीप्रदेशानां विविधकर्मक्षमाणामालोचनम्, आटविकवर्गविश्रम्भणम्, उत्साहशक्तिसंधुक्षणेन प्रत्यनीकवित्रासन-

---

रसना येनैवंविधः। 'पिशुनः सूचकः खलः' इत्यमरः। अभ्रष्टपदोऽच्युतामात्यस्थानः। **एवं गते इति**। कामवृत्ते स्वेच्छाप्रवृत्तौ। सूनुः पुत्रः। असद्वृत्तो दुर्मार्गचारी। पित्रेन्द्रपालितेन निर्वासितो गृहाद्दूरीकृतः। चारणगणैर्गायकनिवहैः। 'चारणो गायकः समौ' इत्यमरः। छन्नकिंकरैर्गूढसेवकपुरुषैः। अभ्येत्य विहारभद्रान्तिकं प्राप्य। आत्मसादात्माधीनम्। 'तदधीनवचने' इति सातिः। अमुना संक्रमेण नानाशिल्पप्रदर्शनद्वारेण। आस्पदं प्रतिष्ठाम्। 'आस्पदं प्रतिष्ठायाम्' इति साधुता। अलभत प्राप्तवान्। लब्धरन्ध्रः प्राप्तावकाशः। स राजाऽनन्तवर्मा। व्यसनम् 'स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यार्थदूषणे। दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम्' इति वैजयन्ती। 'मृगयाऽक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्यत्रिकं वृथाऽऽट्या च कामजो दशको गणः। पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम्। वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः' इति मनुश्च। आरभते कर्तव्यत्वेन कथयति। **देवेति**। यथा येन प्रकारेण। मृगया मृगवधायाटनम्। औपकारिकी उपकारे साधुः 'तत्र साधुः' इत्यधिकारे 'गुडादिभ्यष्ठञ्' इति ठञ्। अत्र मृगयायाम्। व्यायामस्य शारीरकपरिश्रमस्योत्कर्षादतिशयात्। आपत्सु सिंहव्याघ्रादिसंकटेषु। दीर्घस्यातिदूरस्याप्यध्वनो मार्गस्य लंघने गमने क्षमः समर्थः। जंघाजवो जंघावेगः। कफस्य श्लेष्मणोऽपचयाद्विनाशात्। आरोग्यस्य नीरोगताया एकमूलं मुख्यकारणम्। आशयाग्नेरुदराग्नेर्दीप्तिरुज्ज्वलनम्। मेदसो मांसलताया अपकर्षात्संकोचात्। शीतादेः सहत्वं सहनसमर्थता। सत्त्वानां प्राणिनामवस्थान्तरेषु हर्षशोकादिनानादशासु। चित्तचेष्टितस्य मनोव्यापारस्य ज्ञानमवगमः। हरिणा मृगाः। गवला अरण्यमहिषाः। 'रजस्वलो वाहरिपुः।' इत्यारभ्यान्ते 'अरण्यजेऽस्मिन्गवलः' इत्यभिधानचिन्तामणिः। गवया गोसदृशा मृगविशेषाः। तदादीनां दुष्टजन्तूनां वधेन संहरणेन। सस्यलोपस्य मृगादिकृतसस्यक्षयस्य प्रतिक्रिया प्रतीकारः' वृका ईहामृगाः। 'कोकस्त्वीहामृगो वृकः' इत्यमरः। स्थलपथस्य स्थलमार्गस्य शल्यशोधनं कण्टकापनयनम्। विविधकर्मसु क्षेत्रदेवतायतनप्रासादनिर्माणादिकार्येषु क्षमाणामुचितानामालोचनं

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मिति बहुतमा गुणाः। द्यूतेऽपि द्रव्यराशेस्तृणवत्त्यागादनुपमानमाशयौदार्यम्, जयपराजयानवस्थानाद्धर्षविषादयोरविधेयत्वम्, पौरुषैकनिमित्तस्यामर्षस्य वृद्धिः, अक्षहस्तभूम्यादिगोचराणामत्यन्तदुरुपलक्ष्याणां कूटकर्मणामुपलक्षणादनन्तबुद्धिनैपुण्यम्, एकविषयोपसंहाराच्चित्तस्यातिचित्रमैकाग्र्यम्, अध्यवसायसहचरेषु साहसेष्वतिरतिः, अतिकर्कशपुरुषप्रतिसंसर्गादनन्यधर्षणीयता, मानावधारणम्, अकृपणं च शरीरयापनमिति। उत्तमाङ्गनोपभोगेऽप्यर्थधर्मयोः सफलीकरणम्, पुष्कलः पुरुषाभिमानः भावज्ञानकौशलम्, अलोभक्लिष्टमाचेष्टितम्, अखिलासु कलासु वैचक्षण्यम्, अलब्धोपलब्धिलब्धानुरक्षणरक्षितोपभोगभुक्तानुसंधानरुष्टानुनयादिष्वजस्रमभ्युपायरचनया बुद्धिवाचोः पाटवम्, उत्कृष्टशरीरसंस्कारात्सुभगवेषतया लोकसंभावनीयता, परं सुहृत्प्रियत्वम्, गरीयसी परिजनव्यपेक्षा, स्मितपूर्वाभिभाषित्वम्, उद्रिक्तसत्त्वता, दाक्षिण्यानुवर्तनम्। अपत्योत्पादनेनोभयलोकश्रेयस्करत्वमिति। पानेऽपि नानाविधरागभङ्ग-

---

पर्यवेक्षणम्। अटव्यां भवा आटविकाः। 'तत्र भवः' इत्यधिकारे 'अध्यात्मादेष्ठञिष्यते' इति ठञ्। विश्रम्भणं विश्वासजननम्। संधुक्षणेन वर्धनेन। प्रत्यनीकस्य शत्रुसैन्यस्य वित्रासनं भयोत्पादनम्। **द्यूतेऽपीति**। अक्षक्रीडादिरूपे। द्रव्यराशेर्धनसंचयस्य। तृणवत्तृणेन तुल्यम् 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः। त्यागाद्वितरणात्। आशयस्य चित्तस्यौदार्यं दातृशीलता। 'उदारो दातृमहतोः' इत्यमरः। जयपराजययोरनवस्थानादस्थिरतया। हर्षविषादयोः सुखदुःखयोः। अविधेयत्वमनधीनता। अमर्षस्य कोपस्य। अक्षः पाशः। कूटकर्मणां कपटव्यापाराणाम्। उपलक्षणाद्दर्शनात्। बुद्धेर्नैपुण्यं तीक्ष्णता। एकस्मिन्नेव विषये उपसंहाराच्चित्तस्थिरीकरणात्। चित्तस्य। अतिचित्रं मुनीनामपि दुष्करतयाऽऽश्चर्यजनकमैकाग्र्यमेकाग्रता। अध्यवसाय उत्साहः सहचरो येषामेवंविधेषु साहसेषु हठकर्मसु। अतिरतिरत्यासक्तता। अतिकर्कशैर्निर्दयनरैः पुरुषैः सह प्रतिसंसर्गान्निरन्तरसंपर्कात्। अनन्यधर्षणीयताऽन्यजनैरनाभिभवनीयत्वम्। मानस्य चित्तसमुन्नतेरवधारणमात्मनि संरक्षणम्। अकृपणं दैन्यरहितं यथा तथा। शरीरयापनं देहयात्रासंपादनम्। **उत्तमाङ्गनेति**। तासां विशिष्टस्त्रीणामुपभोगे सुखानुभवे। पुष्कलः संपूर्णः। भावज्ञाने परचित्ताशयवेदने कौशलं सामर्थ्यम्। अलोभक्लिष्टं कार्पण्येनादूषितम्। आचेष्टितं व्यवहारः। अलब्धोपलब्धिरप्राप्तस्य प्राप्तिः। लब्धानुरक्षणं प्राप्तस्य परिपालनम्। रक्षितस्य उपभोगः सेवनम्। भुक्तस्यानुसंधानं कालान्तरे स्मरणम्। रुष्टानां कुपितानामनुनयः सान्त्वनमेवमादिष्वजस्रमनवरतमभ्युपायस्य रचनया करणेन। पाटवं नैपुण्यम्। उत्कृष्टमातिशययुक्तं यथा तथा शरीरस्य संस्कारान्मार्जनभूषणादिरूपात्। लोकसंभावनीयता जनबहुमानयोग्यता। परमुत्कृष्टम्। गरीयस्यतिमहती। उद्रिक्तसत्त्वतोत्कृष्टगुणवत्त्वम्। दाक्षिण्यस्य सरलभावस्यानुवर्तनमनुवृत्तिः। अपत्योत्पादनेन पुत्रजननेन। उभयलोकयोरिहामुत्र च श्रेयस्करत्वं कल्याणकरत्वम्।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पटीयसामासवानामासेवनात्स्पृहणीयवयोव्यवस्थापनम्, अहंकारप्रकर्षादशेषदुःखतिरस्करणम्, अङ्गजरागदीपनादङ्गनोपभोगशक्तिसंधुक्षणम्, अपराधप्रमार्जनान्मनःशल्योन्मार्जनम्, अश्राव्यशंसिभिरनर्गलप्रलापैर्विश्वासोपबृंहणम्, मत्सरानुबन्धादानन्दैकतानता, शब्दादीनामिन्द्रियार्थानां सातत्येनानुभवः, संविभागशीलतया सुहृद्वर्गसंवर्गणम्, अनुपमानमङ्गलावण्यम्, अनुत्तराणि विलसितानि, भयार्तिहरणाच्च साङ्ग्रामिकत्वमिति । वाक्पारुष्यं दण्डो दारुणो दूषणानि चार्थानामेव यथावकाशमौपकारिकाणि । नहि मुनिरिव नरपतिरुपशमरतिरभिभावितुमरिकुलमलम्, अवलम्बितुं च लोकतन्त्रम् ' इति । असावपि गुरूपदेशमिवात्यादरेण तस्य मतमन्ववर्तत । तच्छीलानुसारिण्यश्च प्रकृतयो विशृङ्खलमसेवन्त व्यसनानि । सर्वश्च समानदोषतया न कस्यचिच्छिद्रान्वेष-

---

**पानेऽपीति** । नानाविधानामनेकप्रकाराणां रागाणां वर्णानां रक्तपीतादीनां भङ्गेन परिपाट्या पटीयसामत्युत्कृष्टानाम् । आसवानां मदिराणाम् । ' मैरेयमासवः सीधुः ' इत्यमरः । आसेवनात्सम्यगुपयोगात् । स्पृहणीयस्य सर्वैरपि जनैरभिलषणीयस्य वयसो यौवनाख्यस्य व्यवस्थापनं चिरकालपर्यन्तं स्थिरत्वापादनम् । अहंकारप्रकर्षात् गर्वातिरेकात् । अङ्गजो मनसिजः । तस्य रागो मन्मथाभिलाषः । तस्य दीपनादुत्तेजनात् । अङ्गनोपभोगे स्त्रीरमणे शक्तेः संधुक्षणं संवर्धनम् । मनःशल्यानां मानसिकव्यथानामुन्मार्जनं निरसनम् । अश्राव्यमनाकर्णनीयं यथा तथा शंसन्ति कथयन्त्येतादृशैः । अनर्गलैरप्रतिहतैः प्रलापैर्निरर्थकवाक्यैः । ' प्रलापोऽनर्थकं वचः ' इत्यमरः । विश्वासस्य विश्रम्भस्योपबृंहणं वर्धनम् । मत्सरस्यान्यशुभद्वेषस्याननुबन्धादधारणात् । आनन्दैकतानता केवलमानन्दमयता । ' एकतानोऽनन्यवृत्तिः ' इत्यमरः । इन्द्रियार्थानां श्रोत्रादितत्तदिन्द्रियविषयाणाम् । सातत्येनानवरतभावेन । अनुभव उपभोगः । संविभागशीलतया ' स एतादृशः ' इति विविच्य परिज्ञानयुक्ततया । सुहृद्वर्गस्य मित्रगणस्य संवर्गणं संमेलनम् । अङ्गलावण्यं शरीरकान्तिविशेषः । भयं साध्वसम् । आर्तिः पीडा । ' भीतिर्भीः साध्वसं भयम् ' ' आर्तिः पीडा धनुष्कोट्योः ' इत्यमरः । तयोर्हरणान्निरसनात् । सांग्रामिकत्वं युद्धशूरता । ' तत्र साधुः ' इत्यधिकारे ' गुडादिभ्यष्ठञ् ' इति ठञ् । वाचां वाणीनां पारुष्यं क्रूरता । दारुणः कठिनः । यथावकाशं अवसरे सतीत्यर्थः । औपकारिकाणि उपकारे साधूनि । उपशमरतिः शान्तस्वभावः । अभिभावितुं तिरस्कर्तुम् । अरिकुलं शत्रुवर्गम् । नालं न समर्थो भवतीत्यर्थः । लोकतन्त्रं लोके कर्तव्यम् । 'तन्त्रं कुटुम्बकृत्ये स्यात्कारणे च परिच्छेद ' इति विश्वः । अवलम्बितुं स्वीकर्तुम् । **असावपीति** । असौ राजाऽनन्तवर्मा । अत्यादरेण अतिबहुमानपुरःसरम् । तस्येन्द्रपालितस्य । मतं सिद्धान्तम् । अन्ववर्ततानुसृत्याचरति स्म । तस्य राज्ञोऽनन्तवर्मणः शीलानुसारिण्यः स्वभावमनुकुर्वन्त्यः । प्रकृतयः ' स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः ' इत्युक्तानि राज्याङ्गानि । विशृंखलमप्रतिबन्धमसेवन्त

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

णायायतिष्ट । समानभर्तृप्रकृतयस्तन्त्राध्यक्षाः स्वानि कर्मफलान्यभक्षयन् । ततः क्रमादायद्वाराणि व्यशीर्यन्त । व्ययमुखानि विटविधेयतया विभोरहरहर्व्यवर्धन्त । सामन्तपौरजानपदमुख्याश्च समानशीलतयोपारूढविश्रम्भेण राज्ञा सजानयः पानगोष्ठीष्वभ्यन्तरीकृताः स्वंस्वमाचारमत्यचारिषुः । तदङ्गनासु चानेकापदेशपूर्वमपाचरन्नरेन्द्रः । तदन्तःपुरेषु चामी भिन्नवृत्तेषु मन्दत्रासा बहुसुखैरवर्तन्त । सर्वश्च कुलाङ्गनाजनः सुलभभङ्गिभाषणरतो भग्नचारित्रयन्त्रणस्तृणायापि न गणयित्वा भर्तॄन्धातृगणमन्त्रगान्यशृगोत् । तन्मूलाश्च कलहाः सामर्षाणामुदभवन् । अहन्यन्त दुर्बला बलिभिः । अपहृतानि धनवतां धनानि तस्करादिभिः । अपहृतपरिभूतयः प्रहताश्च पातकपथाः । हतबान्धवा हृतवित्ता वधबन्धातुराश्च मुक्तकण्ठमाक्रोशन्नश्रुकण्ठ्यः प्रजाः । दण्डश्चायथाप्रणीतो भयक्रोधावजनयत् । कृशकुटुम्बेषु लोभः पदमधत्त । विमानिताश्च तेजस्विनोऽ-

---

उपभुंजते स्म । व्यसनानि 'स्त्रियोऽक्षाः-' इत्यादिना पूर्वोक्तानि । समानदोषतया परकीयाणां दोषाणां स्वस्मिन्नपि विद्यमानतयेति भावः । छिद्रान्वेषणाय दोषगवेषणाय । नायतिष्ट प्रयत्नं न चकार । तन्त्राध्यक्षाः कार्यनिर्वाहकाः । स्वानि कर्मफलानि स्वकृतकर्मफलभूतद्रव्याणि । अभक्षयन् स्वयमेवानुभवन्ति स्म न तु राज्ञे समर्पयामासुरित्यर्थः । क्रमात्कालक्रमेण । आयस्य धनागमस्य द्वाराणि मुखानि । व्यशीर्यन्त शिथिलान्यभूवन् । व्ययस्य धनविनाशस्य मुखानि । विटानां षिद्गानां विधेयतया वचस्करतया । विभो राज्ञोऽनन्तवर्मणः । व्यवर्धन्त बहुलीभूतानि । सामन्ता आसन्नवर्तिनो राजान आत्मापेक्षया हीनाः । पौराः पुरवासिनो जनाः । जानपदा देशवासिनः । समानशीलतया आत्मवत् दुष्कार्यकारितयेति भावः । उपारूढविश्रम्भेण जातविश्वासेन । सजानयो भार्यासहिताः । 'जायाया निङ्' इति बहुव्रीहिसमासान्तो निङ् । पानगोष्ठीषु मद्यादिसेवनसमाजेषु । अभ्यन्तरीकृताः प्रियमित्रतां प्रापिताः । स्वंस्वमाचारं निजनिजकुलधर्ममत्यचारिषुरुल्लंघयन्ति स्म । तेषां सामन्तादीनामङ्गनासु अन्तःपुरिकासु । अनेकापदेशपूर्वं नानाविधकपटपुरःसरम् । अपाचारद्व्यभिचारमकरोदित्यर्थः । नरेन्द्रो राजाऽनन्तवर्मा । तस्यानन्तवर्मणोऽन्तःपुरेषु अवरोधेषु । अमी सामन्तादयः । भिन्नवृत्तेषु उच्छिन्नकुलधर्मेषु । मन्दत्रासा भयरहिताः । **सर्वश्चेति** । कुलाङ्गनाजनः कुलस्त्रीवर्गः । भङ्गिभाषणेषु 'वृषापेहि परक्षेत्रादायाति क्षेत्रपालकः' इत्यादिरूपवक्रोक्तिषु रतः आसक्तः । भग्नमुच्छिन्नं चारित्रस्य पातिव्रत्यस्य यन्त्रणमात्मनि धारणं यस्यैवंभूतः । तृणायापि न गणयित्वा तृणतुल्यमपि न विचार्य नितरामनादृत्येत्यर्थः । 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति चतुर्थी । धातृगणस्य जारवर्गस्य 'धाता जारे विधातरि' इत्यजयः । मन्त्रणानि गुप्तभाषणानि । तन्मूला स्त्रीचारित्रभङ्गनिमित्तकाः । सामर्षाणां कोपयुक्तानाम् । पातकपथा दुष्टमार्गाः । वधे हननकर्मणि, बन्धे निग्रहे चातुरा आसक्ताः । आक्रोशन् विलपन्ति स्म । अश्रुकण्ठ्य अस्रजलकणप्रतिरुद्धकण्ठस्वरा इत्यर्थः । दण्डः प्रजानां शिक्षा । अयथाप्रणीतः अमार्गेण विहितः । अजनयदुत्पादयामास । कृशेषु निर्धनेषु कुटुम्बेषु गृहेषु । लोभोऽ-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मानेनादह्यन्त । तेषु तेषु चाकृत्येषु प्रासरन्परोपजापाः । तदा च मृगयुवेषमृगबाहुल्यवर्णनेनाद्रिद्रोणीरनपसारमार्गाः शुष्कतृणवंशगुल्माः प्रवेश्य द्वारतोऽग्निविसर्गैः, व्याघ्रादिवधे प्रोत्साह्य तन्मुखपातनैः, इष्टकूपतृष्णोत्पादनेनातिदूरहारितानां प्राणहारिभिः क्षुत्पिपासाभिवर्धनैः, तृणगुल्मगूढतटप्रदरपातहेतुभिर्विषममार्गप्रधावनैः, विषमुखीभिः क्षुरिकाभिश्चरणकण्टकोद्धरणैः विष्वग्विसरविच्छिन्नानुयातृतयैकाकीकृतानां यथेष्टघातनैः, मृगदेहापराद्धैर्नामेषुमोक्षणैः, सपणबन्धमधिरुह्याद्रिशृङ्गाणि दुरधिरोहाण्यनन्यलक्ष्यैः प्रभ्रंशनैः, आटविकच्छद्मना विपिनेषु विरलसैनिकानां प्रतिरोधनैः, अक्षद्यूतपक्षियुद्धयात्रोत्सवादिसंकुलेषु बलवदनुप्रवेशनैः, इतरेषां हिंसोत्पादनैः,गूढोत्पादितव्यलीकेभ्योऽ-

---

त्याशा । विमानिता अनादृतास्तेजस्विनः प्रतापवन्तः । अमानेन मानहान्या । अदह्यन्त नितरां विषण्णा जाताः 'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति न्यायात् । तेषु तेषु नानाविधेषु अकृत्येषु दुष्कर्मसु । परेषां शत्रूणामुपजापा भेदाः । 'उपजापः कृतो भेदः' इत्यमरः । **तदा चेति** । तस्मिन्समये । मृगयुर्व्याधः 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः' इत्यमरः । तद्वेषस्य तन्नेपथ्यस्य, मृगाणां हरिणादीनां बाहुल्यस्य भूयस्त्वस्य च वर्णनेन संकीर्तनेन । अद्रिद्रोणीर्गिरिनितम्बान् । 'अद्रिद्रोणी स्यादापद्वेतिः' इति वैजयन्ती । अनपसारमार्गा न वर्ततेऽपसाराय बहिरागमनाय मार्गो यत्रैतादृशीः । शुष्काणामनार्द्राणां तृणानां वंशानां वेणूनां च गुल्मा स्तम्बा यत्रैवंविधाः । 'स्तम्बो गुल्मस्तृणादिनः' इत्यमरः । प्रवेश्य प्रवेशं कारयित्वा । द्वारतो द्वारदेशे । सार्वविभक्तिकस्तसिः । अग्निविसर्गैर्वह्निदानैः । व्याघ्रः शार्दूलः । प्रोत्साह्य उत्साहमुत्पाद्य । तन्मुखे व्याघ्रास्ये पातनैः । इष्टस्य तृषासमये वाञ्छितस्य कूपस्य प्रहेः तृष्णोत्पादनेन 'अत्र कूपो वर्तते' इति कथयित्वाऽऽशाजननेन । अतिदूरं हारितानां नीतानाम् । क्षुत्पिपासयोर्बुभुक्षातृषोरभिवर्धनैरुद्दीपनैः । तृणगुल्मैस्तृणपुञ्जैर्गूढमाच्छादितं यत्तटं नद्यादेः कूलं तत्र ये प्रदरा गर्तास्तेषु पातस्य निपतनस्य हेतुभिः कारणभूतैः । विषममार्गे दुर्गमाध्वनि प्रधावनैः पलायनैः । विषमुखीभिर्गरललिप्ताग्राभिः । छुरिकाभिरल्पशस्त्रैः । चरणयोः पादयोर्ये कण्टकाः पलायनकाले संलग्ना वेण्वादीनामग्रभागास्तेषामुद्धरणैस्तद्व्याजेनेति भावः । विष्वक् समन्ततः विसरात्सङ्घाद्विच्छिन्ना अन्यत्र गता अनुयातारः सहाया येषामेवंभूततया । 'समूहनिवहव्यूहसन्दोहविसरव्रजाः' इत्यमरः । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इति च । एकाकीकृतानां निःसहायीकृतानाम् । यथेष्टं स्वेच्छया घातनैर्मारणैः । मृगदेहाल्लक्ष्यभूताद्धारिणकायात् अपराद्धैर्नामान्यत्र स्खलितैरिव । इषुमोक्षणैर्बाणप्रयोगैः । सपणबन्धम् 'अहं त्वया जितश्चेन्मदीयमियद्द्रव्यं त्वं गृहाण, त्वं मया जितश्चेदहं ग्रहीष्यामि त्वदीयम्' इति निश्चयपुरःसरम् । अद्रेः पर्वतस्य शृङ्गाणि शिखराणि । दुरधिरोहाणि आरोढुमशक्यानि । अनन्यलक्ष्यैरितरदर्शनायोग्यैः । प्रभ्रंशनैः निपातनैः । आटविकच्छद्मना वनवासिताप्रदर्शनव्याजेन । विपिनेष्वरण्येषु । विरलसैनिकानामल्पसैन्यानाम् । बलवद्बलात्कारपूर्वम् । अनुप्रवेशनैः प्रेरणैः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

प्रियाणि प्रकाशं लब्ध्वा साक्षिषु तद्विख्याप्याकीर्तिगुप्तिहेतुभिः पराक्रमैः, परकलत्रेषु सुहृत्त्वेनाभियोज्य जारान्भर्तॄनुभयं वा प्रहृत्य तत्साहसोपन्यासैः, योग्यनारीहारितानां संकेतेषु प्रागुपनिलीय पश्चादभिद्रुत्याकीर्तनीयैः प्रमापणैः, उपप्रलोभ्य बिलप्रवेशेषु निधानखननेषु मन्त्रसाधनेषु च विघ्नव्याजसाध्यैर्व्यापादनैः, मत्तगजाधिरोहणाय प्रेर्य प्रत्यपायनिवर्तनैः, व्यालहस्तिनं कोपयित्वा लक्ष्यीकृतमुख्यमण्डलेष्वपक्रमणैः, दायाद्यर्थे विवदमानानुपांशु हत्वा प्रतिपक्षेष्वयशःपातनैः, सामन्तपुरजनपदेष्वयथावृत्तानप्रकाशमभिप्रहृत्य तद्वैरिनामघोषणैः, योग्याङ्गनाभिरहर्निशमभिरमय्य राजयक्ष्मोत्पादनैः, वस्त्राभरणमाल्याङ्गरागादिषु रसविधानकौशलैः, चिकित्सामुखेनामयोपबर्हणैरन्यैश्चाभ्युपायैरश्मकेन्द्रप्रयुक्तास्तीक्ष्णरसदादयः प्रक्षपितप्रवीरमनन्तवर्मकटकं जर्जरमकुर्वन् । अथ वसन्तभानुर्भानुवर्माणं नाम वानवास्यं प्रोत्साह्यानन्तवर्मणा व्यग्राहयत् । तत्परामृष्टराष्ट्रपर्यन्तश्चानन्तवर्मा तमभियोक्तुं बलसमुत्थानमकरोत् । सर्वसाम-

---

गूढमव्यक्तं यथातथोत्पादितं व्यलीकं दुःखं यैस्तेभ्यः। लब्ध्वा ज्ञात्वा । विख्याप्य कथयित्वा । अकीर्तेरपयशसो गुप्तौ प्रच्छादने हेतुभिः । परकलत्रेषु परभार्यासु । अभियोज्य संगमय्य । जारानुपपतीन् । प्रहृत्य ताडयित्वा । योग्यनारीभिर्हारितानां सख्यादिप्रेषणेनाहूतानां पुरुषाणां संकेतेषु संगमार्थं निश्चितस्थानेषु । प्राक्पूर्वमेवोपनिलीय समीपे कुत्रचिद्गूढं स्थित्वा। प्रमापणैः मारणैः । ‘ प्रमापणं विशसनं मारणं प्रविघातनम् ’ इत्यमरः । उपप्रलोभ्य वञ्चयित्वा । निधानखननेषु भूम्यन्तर्गुप्तधनोद्धरणेषु । व्यापादनैर्मारणैः। प्रेर्य उत्साहमुत्पाद्य । प्रत्यपायानामुपरितःपतनादीनां निवर्तनैर्जननैः । व्यालहस्तिनं दुष्टगजम् । ‘ व्यालो दुष्टगजः प्रोक्तः ’ इति हलायुधवचनादत्र करिकलभन्याय एवाश्रयणीयः । लक्ष्यीकृतस्य स्वहन्तव्यत्वेन निश्चितस्य मुख्येषु प्रधानभूतेषु मण्डलेषु राष्ट्रेषु । अपक्रमणैः संचारणैः । दायाद्यर्थे पैतृकधनविभागार्थम् । विवदमानान् कलहं कुर्वतः । उपांशु रहसि । प्रतिपक्षेषु हतस्य वैरिषु । अयशःपातनैरकीर्तिसंपादनैः । अयथावृत्तानसाधुकारिणः । अप्रकाशं गुप्तं यथा तथा । तस्य वैरिणां शत्रूणां नाम्नां नामधेयानां घोषणैरुत्कीर्तनैः। अभिरमय्य क्रीडां कारयित्वा । राजयक्ष्मणः क्षयरोगविशेषस्योत्पादनैः । रसविधाने विषप्रयोगे कौशलैः सामर्थ्यैः । ‘रसाधानं विषाधानम्’ इति वैजयन्ती । चिकित्सामुखेन रोगशमनापदेशेन आमयानां रोगाणामुपबृंहणैः परिवर्धनैः । ‘ स्त्री रुग्रुजाचोपतापरोगव्याधिगदामयाः’ इत्यमरः । अश्मकेन्द्रेण तद्देशाधिपतिना वसन्तभानुना प्रयुक्ता विहिताः । ‘तीक्ष्णा मर्मणि घातकाः ’ इति वैजयन्ती । रसं विषं ददाति रसदः तदादयः । प्रक्षपितप्रवीरं विनाशितप्रधानयोद्धृकम् । अनन्तवर्मणः कटकं सेनानिवेशस्थानम् । जर्जरं प्रशिथिलम् । **अथेति** । वानवास्यं वनस्वामिनम् । ‘ वानवास्यो वनप्रभुः ’ इति निघण्टुः । प्रोत्साह्य गुप्तं धनदानादिना संतोषितं कृत्वा । व्यग्राहयद्योधयामास । तेन भानुवर्मणा परामृष्टाः स्वायत्तीकृता राष्ट्रस्य पर्यन्ताः परिसरभागा यस्यैवंविधः । तं भानुवर्माणम् । अभियोक्तुं निग्रहीतुम् । बलसमुत्थानं सैन्यसंग्रहम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

न्तेभ्यश्चाश्मकेन्द्रः प्रागुपेत्यास्य प्रियतरोऽभूत् । अपरेऽपि सामन्ताः समगंसत । गत्वा चाभ्यर्णे नर्मदारोधसि न्यविशन् । तस्मिंश्चावसरे महासामन्तस्य कुन्तलपतेरवन्तिदेवस्यात्मनाटकीयां क्ष्मातलोर्वशीं नाम चन्द्रपालितादिभिरतिप्रशस्तनृत्यकौशलामाहूयानन्तवर्मा नृत्यमद्राक्षीत् । अतिरक्तश्च भुक्तवानिमां मधुमत्ताम् । अश्मकेन्द्रस्तु कुन्तलपतिमेकान्ते समभ्यधत्त—'प्रमत्त एष राजा कलत्राणि नः परामृशति । कियत्यवज्ञा सोढव्या । मम शतमास्ति हस्तिनाम्, पञ्चशतानि च ते । तदावां संभूय मुरलेशं वीरसेनमृचीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं सासिक्यनाथं च नागपालमुपजपाव । ते चावश्यमस्याविनयमसहमाना अस्मन्मतेनैवोपावर्तेरन् । अयं च वानवास्यः प्रियं मे मित्रम् । अमुनैनं दुर्विनीतमग्रतो व्यतिषक्तं पृष्ठतः प्राहरेम । कोशवाहनं च विभज्य गृह्णीमः' इति । हृष्टेन चामुनाभ्युपेते, विंशतिं वरांशुकानाम्, पञ्चविंशतिं काञ्चनकुंकुमपलानाम्, प्राभृतीकृत्याप्तमुखेन तैः सामन्तैः संमन्त्र्य तानपि स्वमतावस्थापयत् । उत्तरेद्युस्तेषां सामन्तानां वानवास्यस्य च अनन्तवर्मा नयद्वेषादामिषत्वमगमत् । वसन्तभानुश्च तत्कोशवाहनमवशीर्णमात्माधिष्ठितमेव कृत्वा

---

सर्वेभ्यः सामन्तेभ्यः समीपवर्तिभ्यो राजभ्यः । अश्मकेन्द्रो वसन्तभानुः । प्राक्पूर्वमेवोपेत्य साहाय्यदानार्थमिति व्याजेनागत्य । समगंसत संगता अभूवन् । 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदम् । अभ्यर्णे निकटे । नर्मदाया नदीभेदस्य रोधसि कूले । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इत्यमरः । न्यविशन्सेनास्थानं कल्पयामासुः । 'निवेशः शरणं क्षयः' इति गृहपर्यायेऽमरः । कुन्तलपतेः कुन्तलदेशाधिपस्य । अवन्तिदेवस्यैतन्नाम्नः । आत्मनाटकीयां स्वकीयनृत्यकारिणीम् । क्ष्मातलोर्वशीं स्वस्तले यथोर्वश्यतिसुन्दरी तद्वद्भूतलेऽतिरमणीयाम् । अतस्तन्नाम्नैव विश्रुतां च । अतिप्रशस्यं सर्वश्लाघ्यं नृत्ये कौशलं सामर्थ्यं यस्या एवंभूताम् । अद्राक्षीत्पश्यति स्म । अतिरक्तो नितरां तस्यामासक्तः । इमां क्ष्मातलोर्वशीम् । मधुना मद्येन मत्तामस्वाधीनचित्ताम् । **प्रमत्त इति** । एष राजाऽनन्तवर्मा । कलत्राणि जायाः । नोऽस्माकम् । परामृशति स्पृशति । ता उपभुंक्ते इत्यर्थः । कियती किंपरिमाणाऽवज्ञाऽवमानना । सोढव्या क्षन्तव्या । स्वपत्नीपरामर्शस्तु न कदाऽप्यस्माभिः क्षन्तव्य इति भावः । हस्तिनां गजानाम् । संभूय परस्परं मिलित्वा मुरलेशं मुरलदेशाधिपतिम् । उपजयाव अनन्तवर्मोपरि दोषप्रकाशनेन तस्मात्पृथक्कुर्वः । ते च वीरसेनादयः । अस्यानन्तवर्मणोऽविनयं धाष्टर्यम् । वानवास्यः वनाधिपतिः । अग्रतः पुरोभागे व्यतिषक्तं प्रतिरुद्धम् । अमुनाऽवन्तिदेवेन । अभ्युपेतेऽङ्गीकृते । वरांशुकानामुत्कृष्टदुकूलानाम् । काञ्चनानां सुवर्णानां कुंकुमानां काश्मीरजन्मनां पलानां परिमाणविशेषाणाम् । प्राभृतीकृत्योपायनत्वेन दत्त्वा । 'प्राभृतं तु प्रदेशनम् । उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । संमन्त्र्य वार्तालापं कृत्वा । उत्तरेद्युः परदिने । नयद्वेषाद्दुर्नीतेः । आमिषत्वं भोग्यवस्तुतामगमद्रतो युद्धे मृतोऽभूदिति भावः । 'आमिषं पुन्नपुंसकम् । भोग्य-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

यथाप्रयासं यथाबलं च विभज्य गृह्णीत । युष्मदनुज्ञया येनकेनचिदंशेनाहं तुष्यामि ' इति शाठ्यात्सर्वानुवर्त्ती, तेनैवामिषेण निमित्तीकृतेनोत्पादितकलहः सर्वसामन्तानध्वंसयत् । तदीयं च सर्वस्वं स्वयमेवाग्रसत् । तानवास्यं केनचिदंशेनानुगृह्य प्रत्यावृत्य सर्वमनन्तवर्मराज्यमात्मसादकरोत् । अस्मिंश्चान्तरे मन्त्रिवृद्धो वसुरक्षितः कैश्चिन्मौलैः संभूय बालमेनं भास्करवर्माणम्, अस्यैव ज्यायसीं भगिनीं त्रयोदशवर्षां मञ्जुवादिनीम्, अनयोश्च मातरं महादेवीं वसुंधरामादायापसर्पन्नापदोऽस्या भावितया दाहज्वरेण देहमजहात् । अस्मादृशैर्मित्रैस्तु नीत्वा माहिष्मतीं भर्तृद्वैमातुराय भ्रात्रे मित्रवर्मणे सापत्या देवी दर्शिताभूत् । तां चार्यामनार्योऽसावन्यथाभ्यमन्यत । निर्भर्त्सितश्च तया 'सुतमियमखण्डचारित्रा राज्यार्हं चिकीर्षति' इति नैर्घृण्यात्तमेनं बालमजिघांसीत् । इदं तु ज्ञात्वा देव्याहमाज्ञप्तः–' तात, नालीजङ्घ, जीवतानेनार्भकेण यत्र क्वचिदवधाय जीव । जीवेयं चेदहमप्येनमनुसारिष्यामि । ज्ञापय मां क्षेमप्रवृत्तः स्ववार्ताम्' इति । अहं तु संकुले राजकुले कथंचिदेनं निर्गमय्य विन्ध्याटवीं व्यगाहिषि । पादचारिणं चैनमाश्वासयितुं घोषे क्वचिदहानि कानिचिद्विश्रमय्य, तत्रापि राजपुरुषसंपातभीतो दुरध्वमपासरम् । तत्रास्य दारुणपिपासा-

---

वस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च ' इति मेदिनी । तस्यानन्तवर्मणः कोशं घनसंग्रहं वाहनं गजादिकं च । अवशीर्णं परिक्षिप्तम् । आत्माधिष्ठितं स्वाधीनमेव । यथाप्रयासं स्वस्वपरिश्रमानुरूपम्, यथाबलं निजनिजशक्त्यनुरूपं च । अंशेन येन केनचित्स्वल्पेनापि भागेन । तुष्यामि सुतुष्टो भवामि । शाठ्यात्कपटाचरणात् । सर्वाननुसृत्य वर्तत इत्येवंशीलः सर्वानुवर्ती । तेनैवावशिष्टकोशवाहनेन । अध्वंसयद्युद्धे परस्परं नाशयामास । तदीयं सामन्तानामपि सम्बन्धि । अग्रसत्कवलयामास । केनचिदंशेन स्वल्पपारितोषिकेण । अनुगृह्य सन्तोष्य । आत्मसादात्माधीनम् । ' तदधीनवचने ' इति सातिः । **अस्मिंश्चेति** । अन्तरे अवसरे । मौलैः कुलपरम्परया बहुकालात् सेवकैः । संभूय मिलित्वा । ज्यायसीं भगिनीं पूर्वसहोदरीम् । अपसर्पन्देशाद्बहिः पलायनं कुर्वन् । भावितयाऽवश्यमुत्पत्स्यमानतया । देहमजहात् स्वर्गं गतः इति भावः । नीत्वा प्रापय्य । माहिष्मतीं तदाख्यां नगरीम् । भर्तुरनन्तवर्मणो द्वैमातुराय पितुर्द्वितीयभार्योत्पन्नाय । सापत्या भास्करवर्मणा पुत्रेण कन्यया मञ्जुवादिन्या च सहिता । देवी अनन्तवर्मणो महिषी वसुन्धराख्या अन्यथा प्रकारान्तरेणागताम् । अभ्यमन्यत विचारितवान् । अखण्डचारित्रा अक्षतपातिव्रतया । राज्यार्हं राज्ययोग्यं चिकीर्षति विधातुमिच्छति । नैर्घृण्यान्निर्दयतया । अजिघांसीद्धन्तुमिच्छति स्म । अर्भकेण पुत्रेण । अवधाय अवहितो भूत्वा । संकुले निबिडे । व्यगाहिषि प्रविष्टवान् । घोषे शबरालये । ' घोष आभीरपल्ली स्यात्पक्वणः शबरालयः ' इत्यमरः । राजपुरुषाणां मित्रवर्मणः किङ्कराणां सम्पातादागमनाद्भीतस्त्रस्तः ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

पीडितस्य वारि दातुकामः कूपेऽस्मिन्नपभ्रश्य पतितस्त्वयैवमनुगृहीतः । स्वमेवास्यातः शरणमेधि विशरणस्य राजसूनोः' इत्यञ्जलिमबध्नात् । 'किमीया जात्यास्य माता' इत्यनुयुक्ते मयामुनोक्तम्—'पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोसलेन्द्रात्कुसुमधन्वनोऽस्य माता जाता' इति । 'यद्येवमेतन्मातुर्मत्पितुश्चैको मातामहः' इति सस्नेहं तमहं सस्वजे । वृद्धेनोक्तम्—'सिन्धुदत्तपुत्राणां कतमस्ते पिता' इति । 'सुश्रुतः' इत्युक्ते सोऽत्यहृष्यत् । अहं तु 'तपनयावलिप्तमश्मकनयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयम्' इति प्रतिज्ञाय कथमस्यैनां क्षुधं क्षपयेयम्' इत्यचिन्तयम् । तावदापतितौ च कस्यापि व्याधस्य त्रीनिषूनतीत्य द्वौ मृगौ स च व्याधः । तस्य हस्तादवशिष्टमिषुद्वयं कोदण्डं चाक्षिप्यावधिषम् । एकश्च सपत्राकृतोऽन्यश्च निष्पत्राकृतोऽपतत् । तं चैकं मृगं दत्त्वा मृगयवे, अन्यस्यापलोमत्वचः क्लोमापोह्य,

---

दुरध्वं कण्टकाद्यावृततया दुर्गमं मार्गम् । 'उपसर्गादध्वनः' इति समासान्तोऽच् । 'व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः' इत्यमरः । अपभ्रश्य स्खलित्वा । शरणमेधि रक्षको भव । 'अस भुवि' इत्यस्माल्लोण्मध्यमैकवचनम् । **किमीयेति** । कस्यां जातावुत्पन्नेति प्रश्नाशयः । 'तत्र भवः' इत्यर्थे 'वृद्धाच्छः' इति छः । अस्य कुमारस्य भास्करवर्मणः । अनुयुक्ते पृष्टे सति । मया विश्रुतेन । अमुना नालजंघेन वृद्धेन । पाटलिपुत्रस्य पाटलिपुत्राख्यनगरीनिवासिनः । वैश्रवणस्य तदाख्यस्य वणिजो व्यापारिणः । दुहितरि कन्यायाम् । कोसलेन्द्रात्कोसलदेशाधिपात् । एतन्मातुः एतस्य भास्करवर्मणो मातुः वसुन्धरायाः । मत्पितुश्च मम विश्रुतस्य पितुः सुश्रुतस्य । मातामहो मातुः पिता । 'मातृपितृभ्यां पितरि डामहच्' इमि डामहच् । सस्नेहं सप्रणयम् । तं भास्करवर्माणम् । अहं विश्रुतः । सस्वजे आलिङ्गितवान् । वृद्धेन नालीजंघेन । तमश्मकं वसन्तभानुनामानमश्मकदेशाधिपम् । अनयेन दुर्नीत्याऽवलिप्तं गर्वितम् । नयेन न्यायमार्गेणैव । उन्मूल्य राज्यभ्रष्टं विधाय । पित्र्ये पदे पितुरनन्तवर्मणः संबन्धिनि स्थाने । 'पितुर्यच्च' इति तत आगत इत्यर्थे यति च रूपमिदम् । प्रतिष्ठापयेयं प्रतिष्ठितं कुर्याम् । प्रतिज्ञाय संकल्पं कृत्वा । कथं केन प्रकारेण । क्षुधं बुभुक्षाम् । क्षपयेयं शान्तां कुर्याम् । तावत्तस्मिन्समये । व्याधस्य मृगयोः । इषून्बाणानतीत्योल्लंघ्य । मृगौ हरिणौ । अवशिष्टं मुक्तातिरिक्तम् । कोदण्डं धनुः । 'धनुश्चापो धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः । आक्षिप्य गृहीत्वा । अवधिषम् प्रहृतवान् । 'हन हिंसागत्योः' इत्यतो लुङि 'लुङि च' इति वधादेशः । सपत्राकृतः पत्रेण पक्षेण सह विद्धः । सपुंखशरप्रवेशेन हृदये पीडितः सन् मृत इति भावः । 'वाहने तु च्छदे पत्रम्' ति भागुरिः। निष्पत्राकृतः शरपुंखस्य कायं विद्ध्वा बहिर्निर्गमान्मृतः । 'सपत्रनिष्पत्रादतिव्यथने' इति डाच् । मृगयवे व्याधाय । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः' इत्यमरः । अपलोमा रोमरहिता त्वक्चर्म यस्यैवंभूतस्य । 'तनूरुहं रोम लोम'

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

निष्कुलाकृत्य विकृत्योर्वङ्घ्रिग्रीवादीनि शूलाकृत्य दावाङ्गारेषु, तप्तेनामिषेण तयोरात्मनश्च क्षुधमतार्षम् । एतस्मिन्कर्मणि मत्सौष्ठवेनातिहृष्टं किरातमस्मि पृष्टवान्—'अपि जानासि माहिष्मतीवृत्तान्तम्' इति । असावाचष्ट—'तत्र व्याघ्रत्वचो दृतीश्च विक्रीयाद्यैवागतः किं न जानामि। प्रचण्डवर्मा नाम चण्डवर्मानुजो मित्रवर्मदुहितरं मञ्जुवादिनीं विलिप्सुरभ्येतीति तेनोत्सवोत्तरा पुरी' इति। अथ कर्णे जीर्णमब्रवम्—'धूर्तो मित्रवर्मा दुहितरि सम्यक्प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन प्रत्याकृष्य बालकं जिघांसति । तत्प्रतिगत्य कुशलमस्य मद्वार्ता च देव्यै रहो निवेद्य पुनः कुमारः शार्दूलभक्षित इति प्रकाशमाक्रोशनं कार्यम् । स दुर्मतिरन्तःप्रीतो बहिर्दुःखं दर्शयन्देवीमनुनेष्यति । पुनस्तया त्वन्मुखेन स वाच्यः—'यदपेक्षया त्वन्मतमत्यक्रमिषं सोऽपि बालः पापेन मे परलोकमगात् । अद्य तु त्वदादेशकारिण्येवाहम्' इति । स तथोक्तः प्रीतिं प्रतिपद्या-

---

इत्यमरः । क्लोम मास्तिष्कम् । 'तिलकं क्लोम मस्तिष्कम्' इत्यमरः । अपोह्य निरस्य । निष्कुलाकृत्य कुलमन्तरवयवानामस्थ्यादीनां समूहः । तन्निर्गतं यस्मादेवंभूतं विधाय । 'निष्कुलान्निष्कोषणे' इति डाच् । विकृत्य खण्डयित्वा । 'कृती छेदने' । शूलाकृत्य शूलाग्रे प्रोतं पक्त्वा । 'शूलात्पाके' इति डाच् । दावाङ्गारेषु वनवह्निखण्डेषु । 'दवदावौ वनानले' इत्यमरः । तप्तेन परिपक्वेनामिषेण मांसेन । अतार्षं निवारितवान् । एतस्मिन्कर्मणि मृगवधमांसनिष्कासनपाकादौ । मम सौष्ठवेन साधुकारितया । किरातं शबरम् । अस्मि अहमित्यर्थेऽव्ययम् । अपि जानासि वेत्सि किम् ? असौ किरातः । **तत्रेति** । माहिष्मतीनगर्याम् । व्याघ्रत्वचः शार्दूलचर्माणि । दृतीश्चर्मसंपुटाश्च । 'दृतिश्चर्मपुटे मत्स्ये ना' इति मेदिनी । विक्रीय मौल्यग्रहणपूर्वकं दत्त्वा । आगतः प्रतिनिवृत्तः । किं न जानाम्यवश्यं जानामीति भावः । चण्डवर्मानुजः उत्तरपीठिकाप्रथमोच्छ्वासे सिंहवर्मणा सह योद्धुमागतो यस्तस्य चण्डवर्मणोऽनुजः कनीयान्भ्राता । मित्रवर्मणो माहिष्मतीपतेर्दुहितरं कन्यास्थानीयां तद्भ्रातृकन्यामित्यर्थः । विलिप्सुराप्तुमिच्छुः । अभ्येत्यागच्छति । इति हेतोरिति शेषः । उत्सवोत्तरोत्सवव्यग्रा । जीर्णं वृद्धं नालीजंघम् । **धूर्त इति** । वञ्चनाशीलः । सम्यक्साधु यथा तथा प्रतिपत्त्या यथोचितविवाहादिकार्यकरणेन । मातरं जननीं वसुंधराम् । विश्वास्य विश्वासं जनयित्वा । तन्मुखेन तद्द्वारा । प्रत्याकृष्य आनाय्य । जिघांसति व्यापादयितुमिच्छति । तत्तस्माद्धेतोः । प्रतिगत्य माहिष्मतीं पुनर्गत्वा । कुशलं क्षेमवार्ताम् । अस्य कुमारस्य भास्करवर्मणः । मम विश्रुतस्य वार्ता वृत्तान्तश्च । देव्यै अनन्तवर्मणोऽग्रमहिष्यै वसुंधरायै । रह एकान्ते । निवेद्य कथयित्वा । शार्दूलेन व्याघ्रेण भक्षितो निगीर्णः । प्रकाशं जनसम्मुखम् । आक्रोशनं रोदनम् । स दुर्मतिः मित्रवर्मा । अन्तर्मनसि प्रीतः स्वेन जिघांसितस्य दैवान्मृतबुद्ध्या संतुष्टः । अनुनेष्यति सान्त्वयिष्यति । यदपेक्षया यस्य पुत्रस्यापेक्षया तमुद्दिश्येत्यर्थः । अत्यक्रमिषमतिप्रवृत्ताऽहम् । मे पापेन दुष्कर्मणा । परलोकं स्वर्गमगाद्गतः । त्वदादेशकारिणी तवाज्ञापालयित्री । 'वत्सनाभ' इति विषभेदस्य नाम ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

भिपत्स्याति। पुनरनेन वत्सनाभनाम्ना महाविषेण संनीय तोयं तत्र मालां मज्ज-यित्वा तया स वक्षसि मुखे च हन्तव्यः। 'स एवायमसिप्रहारः पापीयस-स्तव भवतु यद्यस्मि पतिव्रता'। पुनरनेनागदेन संगमितेऽम्भसि तां मालां मज्जयित्वा स्वदुहित्रे देया। मृते तु तस्मिंस्तस्यां च निर्विकारायां सत्याम्, सतीत्येवैनां प्रकृतयोऽनुवर्तिष्यन्ते। पुनः प्रचण्डवर्मणे संदेश्यम्–'अनायक-मिदं राज्यम्। अनेनैव सह बालिकेयं स्वीकर्तव्या' इति। तावदावां कापालिक-वेषच्छन्नौ देव्यैव दीयमानभिक्षौ पुरो बहिरुपश्मशानं वत्स्यावः। पुनरार्यप्रा-यान्पौरवृद्धानाप्तांश्च मन्त्रिवृद्धानेकान्ते ब्रवीतु देवी–'स्वप्नेऽद्य मे देव्या विन्ध्य-वासिन्या कृतः प्रसादः। अद्य चतुर्थेऽहनि प्रचण्डवर्मा मरिष्यति। पञ्चमेऽ-हानि रेवातटवर्तिनि मद्भवने परीक्ष्य वैजन्यम्, जनेषु निर्गतेषु कपाटमुद्घाट्य त्वत्सुतेन सह कोऽपि द्विजकुमारो निर्यास्यति। स राज्यमिदमनुपाल्य बालं ते प्रतिष्ठापयिष्यति। स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य स्थापितः। सा चेयं वत्सा मञ्जुवादिनी तस्य द्विजातिदारकस्य दारत्वेनैव कल्पिता' इति। तदेतदतिरहस्यं युष्मास्वेव गुप्तं तिष्ठतु यावदेतदुपपत्स्यते' इति। स सांप्रतमति-प्रीतः प्रयातोऽर्थश्चयायं यथाचिन्तितमनुष्ठितोऽभूत्। प्रतिदिशं च लोकवादः

---

' पुंसि क्लीबे च काकोलकालकूटहलाहलाः। सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः। दारदो वत्सनाभश्च विषभेदा अमी नव॥' इत्यमरः। संनीय मिश्रयित्वा। तोयं जलम्। तत्र तादृशे जले। हन्तव्यः। प्रहर्तव्यः असिप्रहारः खड्गताडनम्। अगदेनौषधेन। संगमिते योजितेऽम्भसि सलिले। स्वदुहित्रे निजकन्यकायै मञ्जुवादिन्यै। तस्मिन्मित्रवर्मणि। निर्विकारायां विषबाधा-रहितायाम्। सती पतिव्रता। ' सती साध्वी पतिव्रता ' इत्यमरः। एनां वसुन्धराम्। संदेश्यं विज्ञापनीयम। अनायकं राजहीनम्। स्वीकर्तव्योद्वहनीया। तावत्प्रचण्डवर्मणा राज्यमञ्जुवा-दिन्योः स्वायत्तीकरणात्पूर्वमेव। आवामहं विश्रुतोऽयं भास्करवर्मा च। कापालिकः भिक्षार्थं कपालं गृहीत्वा चरतीत्येवंशीलः। तस्य वेषेण छन्नौ गूढौ। देव्या महिष्या वसुन्धरयैव दीयमाना भिक्षा याभ्यामेवंविधौ। पुरो माहिष्मतीनगर्याः। उपश्मशानं पितृवनसमीपे। ' अव्ययं विभक्ति–' इत्यादिना सप्तम्यर्थेऽव्ययीभावः। वत्स्यावो निवासं करिष्यावः। **पुनरिति**। प्रसादोऽनुग्रहः। रेवातटवर्तिनि नर्मदाकूलस्थिते। मम भवने आलये। वैजन्यं जनराहित्यम्। कपाटं द्वारपिधानम्। निर्यास्यति बहिरागमिष्यति। स द्विजपुत्रः। ते वसुं-धराया बालं भास्करवर्माणम्। प्रतिष्ठापयिष्यति राज्येऽभिषिक्तं करिष्यति। स बालस्त्वदीयः कुमारो भास्करवर्मा। खल्वित्यसंदेहे। मया विन्ध्यवासिन्या। तिरस्कृत्य व्यवहितं कृत्वा। द्विजातिदारकस्य ब्राह्मणकुमारस्य। दारत्वेन भार्यात्वेन। गुप्तमाच्छन्नं यथा तथा। एतत्प्र-चण्डवर्ममरणादिकम्। उपपत्स्यते निष्पन्नं भविष्यति। स नालीजंघो वृद्धः। यथाचिन्तित-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

प्रासर्पत्–'अहो माहात्म्यं पतिव्रतानाम्। असिप्रहार एव हि स मालाप्रहारस्तस्मै जातः। न शक्यमुपाधियुक्तमेतत्कर्मेति वक्तुम्। यतस्तदेव दत्तं दाम दुहित्रे स्तनमण्डनमेव तस्यै जातं न मृत्युः। योऽस्याः पतिव्रतायाः शासनमतिवर्तते स भस्मैव भवेत्' इति।

अथ महाव्रतिवेषेण मां च पुत्रं च भिक्षायै प्रविष्टौ दृष्ट्वा प्रस्नुतस्तनी प्रत्युत्थाय हर्षाकुलमब्रवीत्–'भगवन्, अयमञ्जलिः। अनाथोऽयं जनोऽनुगृह्यताम्। अस्ति ममैकः स्वप्नः स किं सत्यो न वा' इति। मयोक्तम्–'फलमस्याद्यैव द्रक्ष्यसि' इति। 'यद्येवं बहु भागधेयमस्या वो दास्याः। स खल्वस्याः सानाथ्यशंसी स्वप्नः' इति मद्दर्शनरागबद्धसाध्वसां मञ्जुवादिनीं प्रणमय्य, भूयोऽपि सा हर्षगर्भमब्रूत–'तच्चेन्मिथ्या सोऽयं युष्मदीयो बालकपाली श्वो मया निरोद्धव्यः' इति। मयापि सस्मितं मञ्जुवादिनीरागलीनदृष्टिलीढधैर्येण 'एवमस्तु' इति लब्धभैक्षः, नालीजङ्घमाकार्य निर्गम्य ततश्च तं चानुयान्तं शनैरपृच्छम्–'कासावल्पायुः प्रथितः प्रचण्डवर्मा' इति। सोऽब्रूत–'राज्यमिदं ममेत्यपास्तशङ्को राजास्थानमण्डप एव तिष्ठत्युपास्यमानः कुशीलवैः' इति। 'यद्येवमुद्याने तिष्ठ' इति तं जरन्तमादिश्य तत्प्राकारैकपार्श्वे क्वचिच्छून्यमाठिकायां मात्रा-

---

मिच्छानुसारेण। लोकवादो जनश्रुतिः। अहो इत्यद्भुतेऽव्ययम्। तस्मै मित्रवर्मणे। उपाधियुक्तं कपटयुतम्। दाम माला। स्तनमण्डनं कुचालङ्करणम्। शासनमाज्ञामतिवर्तते उल्लंघयति।

**अथेति**। व्रतिवेषेण संन्यासिरूपेण। भिक्षायै भिक्षामादातुम्। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी। प्रस्नुतो बाले स्वकीये वात्सल्यात्क्षरत्पयसौ स्तनौ यस्या एवंभूता। 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष्। प्रत्युत्थायाभिमुखमागत्य। अस्य स्वप्नस्य। अद्यैवास्मिन्नेव दिने। भागधेयं भाग्यम्। अस्या वसुन्धराया ममेत्यर्थः। नाथेन रक्षकेण सह वर्तते सनाथा तस्याभावः सानाथ्यं तच्छंसति सूचयतीत्येवंशीलः। मम विश्रुतस्य दर्शने रागेणासक्त्या बद्धमुत्पन्नं साध्वसं भयं पतित्वेन मनसा चिन्तितस्य प्रथमदर्शनकाले कन्यानां साधारणतयोत्पद्यमानं यस्या एवंभूताम्। प्रणमय्य नमस्कार्य। तत्स्वप्नदर्शनम्। मिथ्या निष्फलम्। बालः कुमारश्चासौ कपाली कपालधार्ययं भिक्षुकः। श्व आगामिनि दिने। सस्मितं मन्दहासयुक्तम्। मञ्जुवादिन्या रागलीनयाऽनुरागनिमग्नया दृष्ट्या कटाक्षदर्शनेन लीढमास्वादितं धैर्यं यस्यैवंविधेन। लब्धभैक्षः प्राप्तभिक्षान्नराशिः। 'भिक्षादिभ्योऽण्' इति भिक्षाशब्दात्सामूहिकोऽण्। आकार्य मम गमनानन्तरं पश्चादागन्तव्यं त्वयेति सूचयित्वा। तं च नालीजंघम्। अनुयान्तं पश्चाद्गन्तव्यम्। शनैर्मन्दस्वरेण। क्व कस्मिन् स्थाने। अल्पायुरासन्नमरणः। अपास्तशंको निःशंकः। आस्थानमण्डपे सभामण्डपे। 'आस्थानी क्लीबमास्थानम्' इत्यमरः। उपास्यमानः परिचर्यमाणः। कुशीलवैर्नटैः। 'भरता इत्यपि नटाश्चारणास्तु कुशीलवाः' इत्यमरः। उद्याने विहारवने। जरन्तं स्थविरम्। 'प्रवयाः स्थविरो वृद्धो जीनो

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

समवतार्य, तद्रक्षणनियुक्तराजपुत्रः, कृतकुशीलववेषलीलः प्रचण्डवर्माणमेत्यान्वरञ्जयम्। अनुरञ्जितातपे तु समये, जनसमाजज्ञानोपयोगीनि संहृत्य नृत्यगीतनानारुदितादिहस्तचङ्क्रमणमूर्ध्वपादालातपादपीठवृश्चिकमकरलङ्घनादीनि मत्स्योद्वर्तनादीनि च करणानि, पुनरादायादायासन्नवर्तिनां क्षुरिकाः ताभिरुपाहितवर्ष्मा चित्रदुष्कराणि करणानि श्येनपातोत्क्रोशपातादीनि दर्शयन्, विंशतिचापान्तरालावस्थितस्य प्रचण्डवर्मणश्छुरिकयैकया प्रत्युरसं प्रहृत्य, 'जीव्याद्वर्षसहस्रं वसन्तभानुः' इत्यभिगर्जन्, मद्गात्रमरूकर्तुमुद्यतासेः कस्यापि चारभटस्य पीवरांसबाहुशिखरमाक्रम्य, तावतैव तं विचेतीकुर्वन्, साकुलं च लोक-

---

जीर्णो जरन्नपि' इत्यमरः। आदिश्याज्ञाप्य। तस्य राजगृहस्य यः प्राकार आवरणभित्तिः। 'प्राकारो वरणः सालः' इत्यमरः। तस्यैकपार्श्वे कस्मिंश्चित्कोणे। शून्यायां निर्जनायां मठिकायां स्वल्पमठे। 'मठश्छात्रादिनिलयः' इत्यमरः। 'अल्पे' इति सूत्रेण कप्रत्ययः। मात्राः जीर्णवस्त्रखण्डादीन् भिक्षुकोपयोगिवेषान्। 'मात्रा परिच्छदेऽल्पेंऽशे प्रवृत्तौ कर्णभूषणे। अक्षरावयवे माने' इति वैजयन्ती। समवतार्य निक्षिप्य। तद्रक्षणे मात्रापालनकर्मणि नियुक्तो राजपुत्रो भास्करवर्मा येनैवम्भूतः। कृताऽङ्गीकृता कुशीलवानां गायकानां वेषलीला नेपथ्यशोभा येनैवंभूतः। एत्य प्राप्य। अन्वरञ्जयं गानवेषादिना तोषितवान्। **अनुरञ्जितेति**। अनुरञ्जितोऽरुणवर्णतां प्राप्त आतपः सूर्यप्रकाशो यत्रैतादृशे समये सन्ध्याकाले इत्यर्थः। जनसमाजस्य सभावर्तिलोकसमुदायस्य ज्ञाने परिचये उपयोगीनि उपयुक्तानि। संहृत्य समाप्य। नृत्यं नर्तनम्। गीतं गानम्। नानारुदितानि कुक्कुटमार्जारश्वादिरवानुकरणानि। हस्तयोः करयोश्चङ्क्रमणमितस्ततः प्रसारणम्। ऊर्ध्वपादमलातपादं च करणभेदौ। तदुक्तं नृत्याध्याये भरताचार्येण—'कराभ्यामवनीं स्पृष्ट्वा मूर्धानं भ्रामयेन्मुहुः। उत्तानीकृत्य चरणावूर्ध्वपादं तदुच्यते॥ उद्धृत्यैकं तु चरणमन्यं कृत्वैव कुञ्चितम्। नृत्यत्यनुमतं तिर्यक्तदलातकमेव च॥' इति। पीठेन वृश्चिकवत् मकरवच्च लंघनं चंक्रमणम्। 'द्वन्द्वान्ते श्रूयमाणं—' इति न्यायात्प्रत्येकमन्वयो बोध्यः। मत्स्योद्वर्तनं मीनवद्विचेष्टितम्। करणानि कायिककर्मविशेषान्। आसन्नवर्तिनां समीपस्थायिनाम्। क्षुरिकाः शस्त्राणि। उपाहितवर्ष्मा प्रोतशरीरः। 'शरीरं वर्ष्म विग्रहः' इत्यमरः। श्येनपातो नृत्यविशेषः 'परिक्रम्यान्तरिक्षेण संप्राप्योच्चैरदृश्यताम्। आकस्मिकाभिपातेन श्येनपात इतीरितः॥' इति भरतशास्त्रोक्तलक्षणः। उत्क्रोशपातस्तु 'उत्क्रोशकुररौ समौ' इत्यमरोक्तस्य पक्षिविशेषस्येव पतनविशेषः। प्रत्युरसमुरसि इत्यर्थः। विभक्त्यर्थेऽव्ययीभावेऽच् समासान्तः। प्रहृत्याहत्य। जीव्यादित्यादि वाक्यं तु स्वशत्रुपुत्रस्य भास्करवर्मणो माहिष्मत्यां स्थित्या तन्मारणाय वसन्तभानुना प्रेषितोऽयं गूढपुरुषः, तेन च व्यक्तिपरिचयाभावात् प्रचण्डवर्मा हतः इति स्वस्य वसन्तभानुचारत्वप्रकाशनेन वसन्तभानौ दोषारोपणाय इत्यवधेयम्। अभिगर्जन्नाक्रोशमुच्चैः कुर्वन्। अरूकर्तुं व्रणितं विधातुम्। 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति च्विप्रत्ययः सलोपश्च। उद्यतासेर्गृहीतशस्त्रस्य। पीवरं मांसलम्। विचेतीकुर्वन्

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मुच्चक्षूकुर्वन्, द्विपुरुषोच्छ्रितं प्राकारमत्यलङ्घ्यम् । अवप्लुत्य चोपवने 'मदनुपातिनामेष पन्था दृश्यते' इति ब्रुवाण एव नालीजङ्घसमीकृतसैकतस्पृष्टपादन्यासया तमालवीथ्या चानुप्राकारं प्राचा प्रतिप्रधावितः; पुनरवाचोच्चितेष्टकचितत्वादलक्ष्यपातेन प्रद्रुत्य, लङ्घितप्राकारवप्रखातवलयः, तस्यां शून्यमठिकायां तूर्णमेव प्रविश्य, प्रतिमुक्तपूर्ववेषः सह कुमारेण मत्कर्मतुमुलराजद्वारदुःखलब्धवर्त्मा श्मशानोद्देशमभ्यगाम् । प्रागेव तस्मिन्दुर्गागृहे प्रतिमाधिष्ठान एव मया कृतं भग्नपार्श्वस्थैर्यस्थूलप्रस्तरस्थगितबाह्यद्वारं बिलम् ।

अथ गलति मध्यरात्रे वर्षवरोपनीतमहार्हरत्नभूषणपट्टनिवसनौ तद्बिलमावां प्रविश्य तूष्णीमतिष्ठाव । देवी तु पूर्वेद्युरेव यथार्हमग्निसंस्कारं मालवाय दत्त्वा प्रचण्डवर्मणे चण्डवर्मणे च तामवस्थामस्मत्केन्द्रोपाधिकृतामेव संदिश्य, उत्तरेद्युः प्रत्युषस्येव पूर्वसंकेतितपौरामात्यसामन्तवृद्धैः सहाभ्येत्य भगवतीमर्चयित्वा

---

प्रज्ञारहितं कुर्वन् । उच्चक्षूकुर्वन्नूर्ध्वीकृतनयनानापादयन् । द्विपुरुषोच्छ्रितं पुरुषद्वयप्रमाणपर्यन्तमुन्नतम् । प्राकारं सालम् । **अवप्लुत्येति** । निपत्य । मदनुपातिनां मामनुगच्छताम् । ब्रुवाणः कथयन् । नालीजंघेन समीकृतः समतां प्रापितः सैकते वालुकामयप्रदेशे स्पृष्टः संलग्नः पादन्यासो मदीयश्चरणनिक्षेपो यत्रैतादृश्या । तमालवीथ्या तापिच्छश्रेण्या । अनुप्राकारं प्राकारं लक्षीकृत्य । उच्चिताभिर्घनाभिरिष्टकाभिः पक्वमृत्खण्डविशेषैश्चितत्वात्परिष्कृतत्वात् । 'इष्टकेषीकामालानां चिततूलभारिषु' इति ह्रस्वः । अलक्ष्यो न दृश्यः पातश्चरणनिपातो यत्रवार्वधिन । प्रद्रुत्य वेगेन पलाय्य । लंघितौ प्राकारवप्रः प्राकारभित्तिः खातवलयं जलगर्तश्च येनैवंभूतः । तूर्णं सत्वरम् । प्रतिमुक्तपूर्ववेषः धृतभिक्षुवेषः । 'आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्' इत्यमरः । मम विश्रुतस्य कर्मणा प्रचण्डवर्ममारणकृत्येन तुमुलं व्यग्रं यद्राजद्वारं तस्माद्दुःखेन लब्धवर्त्मा प्राप्तसरणिः । श्मशानोद्देशं पितृवनप्रदेशम् । प्राक् पूर्वमेव । दुर्गागृहे देव्यायतने । प्रतिमाधिष्ठाने मूर्तिस्थाने । भग्नस्य त्रुटितस्य दुर्बलस्येतियावत् । तादृशस्य पार्श्वस्य देवीमूर्त्येकभागस्य स्थैर्यार्थमिति व्याजेन स्थूलेन पृथुना प्रस्तरेण पाषाणन स्थगितमाच्छादितं बाह्यद्वारं बहिर्मुखं यस्यैवंविधं बिलं रन्ध्रम् । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः ।

**अथेति** । गलति व्यतिक्रामति सति । रात्रेर्मध्यं मध्यरात्रः । तस्मिन् वर्षवरेण षण्ढेन । 'षण्ढो वर्षवरः' इत्यमरः । नालीजङ्घनाम्नेतियावत् । उपनीतानि स्वसमीपं प्रापितानि महार्हाणि बहुमूल्यानि रत्नभूषणानि मणिमयालंकाराः पट्टवसनानि दुकूलांशुकानि च ययोः एतादृशौ । तद्बिलं देव्यायतनान्तःकृतं रन्ध्रम् । आवामहं विश्रुतोऽसौ भास्करवर्मा च । तूष्णीं निःशब्दं यथा तथा । देवी महिषी वसुंधरा । यथार्हं यथायोग्यम् । मालवाय मालवदेशाधिपतये । चण्डवर्मणे प्रचण्डवर्मानुजाय । तामवस्थां मारणामित्यर्थः । अस्मत्केन्द्रेण वसन्तभानुनोपाधिना कपटरूपेण कृतं विहितामेव । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्म कैतवे' इत्यमरः । संदिश्य दूतमुखेन निवेद्य । प्रत्युषस्येव प्रभातसमय एव । 'प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्यु-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

समर्चनप्रत्यक्षं परीक्षितकुक्षिवैजन्यं तद्भवनं पिधाय दत्तदृष्टिः सह जनेन स्थित्वा, पटीयांसं पटहशब्दमकारयत्। अणुतररन्ध्रप्रविष्टेन तेन नादेनाहं दत्तसंज्ञः शिरसैवोत्क्षिप्य सप्रतिमं लोहपादपीठमंसलपुरुषप्रयत्नदुश्चलमुभयकरविधृतमेकपार्श्वमेकतो निवेश्य निरगमम्। निरगमयं च कुमारम्। अथ यथापूर्वमर्चयित्वा दुर्गामुद्घाटितकपाटः प्रत्यक्षीभूय प्रत्ययहृष्टदृष्टि। स्पष्टरोमाञ्चमुद्यताञ्जलिरूढविस्मयं च प्रणिपतन्तीः प्रकृतीरभ्यधाम्—'इत्थं देवी विन्ध्यवासिनी मन्मुखेन युष्मानाज्ञापयति—मया सकृपया शार्दूलरूपेण तिरस्कृत्याद्य वो दत्तमेनमद्यप्रभृति मत्पुत्रतया मन्दमातृपक्ष इति परिगृह्णन्तु भवन्तः। अपि च दुर्घटकूटकोटिघटनापाटवप्रकटशाठ्यनिष्ठुराश्मकघटघट्टनात्मानं मां मन्यध्वमस्य रक्षितारम्। रक्षानिर्वेशश्चास्य स्वसेयं सुभ्रूरभ्यनुज्ञाता महामार्यया' इति।

---

षसी अपि' इत्यमरः। पूर्वमेव संकेतिताः वसुन्धरया 'अद्य चतुर्थेऽहनि प्रचण्डवर्मा मरिष्यति—' इत्यादिरूपेण सूचितदेवीप्रसादाः ये पौरादयस्तैः। अभ्येत्य भगवतीमन्दिरं प्राप्य। समर्चनस्यार्च्यमानदेवीमूर्तेः प्रत्यक्षं सम्मुखम्। परीक्षितं सम्यग्विलोकितं कुक्षेर्देव्यायतनाभ्यन्तरभागस्य वैजन्यं जनशून्यता यत्रैवंविधम्। दत्तदृष्टिरितस्ततो विलोकयन्ती। पटीयांसमतिमहान्तम्। पटहशब्दं भेरीनिनादम्। अणुतरमतिसूक्ष्मं यद्रन्ध्रं विवरं तेन तद्द्वारा प्रविष्टेन। नादेन भेरीरवेण। दत्तसंज्ञः कृतसंकेतः। सूचितपौरागमन इत्यर्थः। सप्रतिमं देवीमूर्तिसहितम्। अंसलैर्बलवद्भिः पुरुषैः प्रयत्नेनापि दुश्चलं चालयितुमशक्यम्। 'बलवान्मांसलोंऽसलः' इत्यमरः। 'वत्सांसाभ्यां कामबले' इति लच्। एकतः कस्मिंश्चित्कोणे। निवेश्य स्थापयित्वा। निरगमं बहिर्निःसृतवान्। **अथेति**। द्वयोर्निर्गमनानन्तरम्। अर्चयित्वा संपूज्य। उद्घाटितकपाटः दूरीकृतद्वारपिधानः। प्रत्ययेन देव्या यथा स्वप्ने सन्दिष्टं तथा पुरुषनिर्गमजनितेन विश्वासेन हृष्टा संतोषं प्राप्ता दृष्टयो नेत्राणि यस्मिन्कर्मणि तद्यथा तथा। रूढविस्मयं प्रभूताद्भुतम्। प्रणिपतन्तीर्नमस्कुर्वन्तीः। प्रकृतीः प्रजाः। अभ्यधामवादिषम्। इत्थमनेन प्रकारेण। 'इदमस्थमुः' इति प्रकारवचने थमुप्रत्ययः। मन्मुखेन मद्द्वारा। आज्ञापयति संदिशति। मया देव्या विन्ध्यवासिन्या। सकृपया साधुवर्गेषु दयायुक्तया। शार्दूलरूपेण व्याघ्रशरीरेण। तिरस्कृत्य मित्रवमनं जिघांसतीति भयेन व्यवहितं विधाय। वो युष्मभ्यम्। दत्तं प्रत्यर्पितम्। एनं वसुन्धरापुत्रं भास्करवर्माणम्। मन्दः विरलः मातुर्वसुन्धरायाः पक्षः सहायः यस्यैतादृशः। इति हेतोः। परिगृह्णन्तु स्वीकुर्वन्तु। दुर्घटानां संभावयितुमशक्यानां कूटकोटीनामसंख्यकपटानां घटनायामायोजने पाटवेन सामर्थ्येन प्रकटं लोकप्रसिद्धं शाठ्यं धौर्त्यं यस्यैवंविधस्य निष्ठुरस्य निर्दयस्य चाश्मकस्य तद्देशाधिपतेर्वसन्तभानोरेव घटस्य कलशस्य घट्टनो ध्वंसक आत्मा स्वरूपं यस्यैवंभूतम्। मन्यध्वं विचारयध्वम्। अस्य कुमारस्य। रक्षितारं पालकम्। रक्षाया निर्वेशो वेतनं च। स्वसा कनिष्ठभगिनी। इयं मंजुवादिनी।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

श्रुत्वैतत् 'अहो भाग्यवान्भोजवंशः, यस्य त्वमार्यादत्तो नाथः' इत्यप्रीयन्त प्रकृतयः। सा तु वाचामगोचरां हर्षावस्थामस्पृशन्मे श्वश्रूः। तदहरेव च यथावदग्राहयन्मञ्जुवादिनीपाणिपल्लवम्। प्रपन्नायां च यामिन्यां सम्यगेव बिलं प्रत्यपूरयम्। अलब्धरन्ध्रश्च लोको नष्टमुष्टिचिन्तादिकथनैरभ्युपायान्तरप्रयुक्तैर्दिव्यांशतामेव मम समर्थयमानः, मदाज्ञां नात्यवर्तत। राजपुत्रस्यार्यापुत्र इति प्रभावहेतुः प्रसिद्धिरासीत्। तं च गुणवत्यहनि भद्राकृतमुपनाय्य पुरोहितेन पाठयन्नीतिं राजकार्याण्यन्वतिष्ठम्। अचिन्तयं च—'राज्यं नाम शक्तित्रयायत्तम्, शक्तयश्च मन्त्रप्रभावोत्साहाः परस्परानुगृहीताः कृत्येषु क्रमन्ते। मन्त्रेण हि विनिश्चयोऽर्थानाम्, प्रभावेण प्रारम्भः, उत्साहेन निर्वहणम्। अतः पञ्चाङ्गमन्त्रमूलः, द्विरूपप्रभावस्कन्धः, चतुर्गुणोत्साहविटपः, द्विसप्ततिप्रकृतिपत्रः,

---

अभ्यनुज्ञाता देयत्वेन निश्चिता। आर्यया देव्या विन्ध्यवासिन्या। **श्रुत्वेति**। भाग्यवान् सभाग्यः। अहो इत्यानन्दे। नाथः रक्षकः। अप्रीयन्त प्रीता अभूवन्। वाचां वाणीनामगोचरामविषयाम्। हर्षावस्थामाह्लादसीमाम्। श्वश्रूर्भार्यामाता। तदहरेव तस्मिन्नेव दिवसे। प्रपन्नायामुपस्थितायां यामिन्यां रात्रौ। प्रत्यपूरयं मृत्पाषाणादिस्थापनेन नीरन्ध्रमापादितवान्। नष्टस्य कुत्रचिददर्शनं प्राप्तस्य, मुष्टेर्बद्धकरस्थितस्य च वस्तुनः चिन्तायां प्रश्नविचारे सति कथनैः प्रत्युत्तरदानैः। अभ्युपायान्तरेण अन्येनोपायेन ज्योतिःशास्त्रपरिज्ञानेनेत्यर्थः। प्रयुक्तैः कृतैः। दिव्यांशतामेव अपूर्वपुरुषतामेव। समर्थयमानो निश्चिन्वानः। नात्यवर्तत नैवोल्लंघयामास। आर्यायाः देव्याः पुत्रः इति। प्रसिद्धिः प्रख्यातिः। गुणवति लग्नताराादिशुद्धिमति। अहनि दिवसे। भद्राकृतं मुण्डितम्। 'मद्रात्परिवापणे' इति सूत्रे 'भद्राच्चेति वक्तव्यम्' इति वार्तिकेन डाच्। उपनाय्य यज्ञोपवीतसंस्कारं कारयित्वा। पाठयन्नध्यापयन्। नीतिं राजनीतिम्। **राज्यमिति**। राज्ञो भावः कर्म वा। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ्। शक्तित्रयस्य वक्ष्यमाणरूपस्यायत्तमधीनम्। 'अधीनो निघ्न आयत्तः' इत्यमरः। मन्त्रप्रभावोत्साहास्तदुक्तममरकारेण—'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इति। परस्परमन्योन्यमनुगृहीता सहकृताः। कृत्येषु संधिविग्रहादिकार्येषु। क्रमन्ते समर्था भवन्ति न तु शक्तिमेकां विहायाभ्यां कृतसंपादनं भवतीति भावः। तदेवोपपादयति—**मन्त्रेणेत्यादिना**। अर्थानां कर्तव्याकर्तव्यकार्याणां विनिश्चयो निर्धारणम्। प्रारम्भः कार्योपक्रमः। निर्वहणं कार्यसिद्धिलम्भनम्। पञ्चाङ्गोऽङ्गपञ्चकयुक्तो मन्त्र एव मूलं यस्यैवंविधः। अङ्गपञ्चकं च—'सहायाः साधनोपाया विभागो देशकालयोः। विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते॥' इति कामन्दकशास्त्रे स्पष्टम्। द्विरूपः 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरोक्तविधया कोशजन्यदण्डजन्यत्वरूपभेदद्वययुक्तो यः प्रभावः प्रतापः स एव स्कन्धो यस्यैवंविधः। चतुर्गुणो य उत्साहः स एव विटपाः शाखा यस्यैवंरूपः।



CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

षड्गुणकिसलयः, शक्तिसिद्धिपुष्पफलश्च, नयवनस्पतिर्नेतुरुपकरोति। स चायमनेकाधिकरणत्वादसहायेन दुरुपजीव्यः। यस्त्वयमार्यकेतुर्नाम मित्रवर्ममन्त्री स कोसलाभिजनत्वात्कुमारमातृपक्षो मन्त्रिगुणैश्च युक्तः तन्मतिमवमत्यैव ध्वस्तो मित्रवर्मा, स चेल्लब्धः पेशलम्' इति। अथ नालीजङ्घं रहस्यशिक्षयम्–'तात, आर्यमार्यकेतुमेकान्ते ब्रूहि–'को न्वेष मायापुरुषो य इमां राज्यलक्ष्मीमनुभवति, स चायमस्मद्बालो भुजङ्गेनामुना परिगृहीतः। किमुद्गीर्येत ग्रस्येत वा' इति। स यद्वदिष्यति 'तदस्मि बोध्यः' इति। सोऽन्यदैवं मामावेदयत्–'मुहुरुपास्य प्राभृतैः, प्रवर्त्य चित्राः कथाः, संवाह्य पाणिपादम्, अतिविस्रम्भदत्तक्षणं तमप्राक्षं त्वदुपदिष्टेन नयेन। सोऽप्येवमकथयत्–'भद्र, मैवं वादीः। अभिजनस्य शुद्धिदर्शनम्, असाधारणं बुद्धिनैपुणम्, अतिमानुषं प्राणबलम्, अपरिमाणमौदार्यम्, अत्याश्चर्यमस्त्रकौशलम्, अनल्पं शिल्पज्ञानम्,

---

द्विसप्ततिः प्रकृतयः प्रजा एव पत्राणि दलानि यस्यैवंविधः। षड्गुणाः 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः' इत्युक्तरूपा एव किसलयानि नूतनपल्लवा यस्यैतादृशः। शक्तयः सिद्धयश्च तिस्रः पुष्पाणि फलानि च क्रमेण यस्यैवंविधः। नयो राजनीतिरेव वनस्पतिर्वृक्षविशेषः। नेतुः नीत्यनुसारेण वर्तमानस्य राज्ञः। स च नयवनस्पतिः। अनेकाधिकरणत्वाद्बह्वाश्रयतया। असहायेनैकाकिना। दुरुपजीविन्यो दुःखेनाप्युपजीवितुमशक्यः। यस्त्विति। मित्रवर्मणो माहिष्मतीभूतपूर्वराजस्य मन्त्री सचिवः। कोसलाभिजनत्वात्कोसलदेशसंभूतत्वात्। कुमारस्य भास्करवर्मणो मातुर्वसुन्धरायाः पक्षः सहायभूतः। युक्तः संपन्नः। तस्यार्यकेतोर्मतिं बुद्धिम्। अवमत्य तिरस्कृत्य। ध्वस्तो विनष्टः। स आर्यकेतुश्चेद्यदि लब्धोऽस्माभिर्वशीकृतः। पेशलं युक्ततरं भवेदित्यथः। तातेति पूज्यं प्रति सम्बोधनम्। न्विति वितर्के। मायापुरुषः कपटी मनुष्यः। अस्मद्बालोऽस्माकं राजकुमारो भास्करवर्मा। भुजङ्गेन विटेन सर्पेण च। 'भुजङ्गो विटसर्पयोः' इत्यमरः। उद्गीर्येत परित्यक्तो भवेत्। ग्रस्येत भक्षिता वा भवेत्। स आर्यकेतुः। स नालीजंघः। अन्यदा अन्यस्मिन्काले। 'सर्वैकान्याकिंयत्तदः काले दा' इति दाप्रत्ययः। आवेदयद्विज्ञापयामास। मुहुरसकृत्। प्राभृतैरुपहारैः। 'प्राभृतं तु प्रदेशनम्। उपायनमुपग्राह्यम्' इत्यमरः। प्रवर्त्य कथयित्वा। चित्रा मनोहारिणीः। संवाह्य मर्दयित्वा। पाणिपादं पाणी च पादौ च। 'द्वन्द्वश्च प्राणितूर्य–' इत्येकशेषः। अतिविस्रम्भेण मय्यातितरां विश्वासेन दत्तक्षणं वितीर्णप्रश्नावसरम्। तमार्यकेतुम्। त्वयोपदिष्टेन नयेन नीतिमार्गेण। सोऽप्यार्यकेतुः। एवं वक्ष्यमाणप्रकारेण। मैवं वादीः कपटपुरुषत्वेन नैव स विचारणीय इति भावः। अभिजनस्य वंशस्य। असाधारणमनन्यजनसमानम्। औदार्यं दातृभावः। 'उदारो दातृमहतोः' इत्यमरः। अस्त्रकौशलं शस्त्रचातुर्यम्। अनल्पं महत्। शिल्पज्ञानं शिल्पपरिचयः।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

अनुग्रहार्द्रं चेतः, तेजश्चाप्यविषह्यमभ्यमित्रीणम्, इत्यस्मिन्नेव संनिपातिनो गुणाः येऽन्यत्रैकैकशोऽपि दुर्लभाः । द्विषतामेष चिरबिल्वद्रुमः, प्रह्वाणां तु चन्दनतरुः, तमुद्धृत्य नीतिज्ञंमन्यमश्मकमिमं च राजपुत्रं पित्र्ये पदे प्रतिष्ठितमेव विद्धि । नात्र संशयः कार्यः' इति । तच्चापि श्रुत्वा भूयोभूयश्चोपदाभिर्विशोध्य तं मे मतिसहायमकरवम् । तत्सखश्च सत्यशौचयुक्तानमात्यान्विविधव्यञ्जनांश्च गूढपुरुषानुदपादयम् । तेभ्यश्चोपलभ्य लुब्धसमृद्धमत्युत्सिक्तमविधेयप्रायं च प्रकृतिमण्डलमलुब्धतामभिख्यापयन्, धार्मिकत्वमुद्भावयन्, नास्तिकान्कदर्थयन्, कण्टकान्विशोधयन्, अमित्रोपधीनपघ्नन्, चातुर्वर्ण्यं च स्वधर्मकर्मसु स्थापयन्, अभिसमाहरेयमर्थानर्थमूला हि दण्डविशिष्टकर्मारम्भा न चान्यदस्ति पापिष्ठं तत्र दौर्बल्यात्, इत्याकलय्य योगानन्वातिष्ठम् ।

---

अनुग्रहार्द्रं सकृपम् । चेतो मानसम् । तेजः प्रभावः । अविषह्यं शत्रुभिर्दुःसहमित्यर्थः । अभ्यमित्रीणः शत्रुपक्षे प्रसरणशीलम् । 'यो गच्छत्यलं विद्विषतः प्रति । सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि' इत्यमरः । 'अभ्यमित्राच्छ च' इति सूत्रे चात्खः । इति पूर्वोक्ताः कुलीनत्वादयो गुणाः । संनिपातिनः समानाधिकारवर्तिनः । अन्यत्रेतरपुरुषेषु । एकैकशोऽपि प्रत्येकमपि । दुर्लभा दुर्दर्शाः । द्विषतां शत्रूणाम् । चिरबिल्वद्रुमो विषवृक्षविशेषः। प्रह्वाणां विनयवताम् । उद्धृत्य निर्मूल्य । नीतिज्ञोऽहमित्यभिमानवान्नीतिज्ञंमन्यः । 'आत्ममाने खश्च' इति खशि 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् । अश्मकं वसन्तभानुम् । इमं राजपुत्रं भास्करवर्माणम् । पित्र्ये पितुरनन्तवर्मण आगते । 'तत आगतः' इत्यधिकारे 'पितुर्यच्च' इति यत् । पदे स्थाने राजसिंहासन इत्यर्थः । विद्धि जानीहि । अत्र विषयेऽस्मिन् । **तच्चेति** । नालीजंघोक्तमार्यकेतोर्मयि सदभिप्रायम् । उपदाभिरुपायनैः । विशोध्य परितुष्टं विधाय । तमार्यकेतुम् । मतिसहायं मन्त्रिणम् । 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः । अकरवं कृतवान् । तस्य सखा मित्रस्थानमापन्नस्तत्सखः । 'राजाहःसखिभ्यष्टच्' इति टच् । सत्यं यथार्थभाषणम् । शौचं शुद्धस्वभावस्ताभ्यां युक्तान् । विविधानि नानाप्रकाराणि व्यञ्जनानि लक्षणानि येषामेवंभूतान् । गूढपुरुषांश्चारान् । उपपादयं संगृहीतवान् । तेभ्यो गूढपुरुषेभ्यः सकाशात् । उपलभ्य ज्ञात्वा । लुब्धैर्धनकृपणैः समृद्धं संपूर्णम् । अत्युत्सिक्तमतिगर्वयुक्तम् । अविधेया विनयरहितास्तत्प्रायं तद्बहुलम् । प्रकृतिमण्डलं प्रजासमुदायम् । अलुब्धतां धनाशाराहित्यम् । अभिख्यापयन्प्रसिद्धीकुर्वन् । धर्मं चरतीति धार्मिकः । ठक्प्रत्ययः । तस्यभावमुद्भावयन्प्रकटयन् । नास्तिकानीश्वरचिन्तारहितान् । 'अस्ति नास्ति दिष्टं मतिः' इति ठक् । कदर्थयन्कुत्सयन् । कण्टकान्वैरिणः । विशोधयन्दूरीकुर्वन् । अमित्राणामरीणामुपधीन् कपटानपघ्नन्प्रतिकुर्वन् । चातुर्वर्ण्यं ब्राह्मणादिवर्णचतुष्टयम् । स्वार्थे ष्यञ् । स्वधर्मकर्मसु निजनिजधर्मकार्येषु । स्थापयन् स्थिरीकुर्वन् । अभिसमाहरेयं संचिनुयाम् । अर्थान्धनानि । अर्थमूला द्रव्यायत्ताः । पापिष्ठमतिपापम् । तत्र धनविषये । दौर्बल्याद्दुर्बलभावात् । आकलय्य विचार्य । योगान् धनसंग्रहणोपायान् । 'योगः सन्नहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । अन्वतिष्ठमाचरामि स्म ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

व्यचिन्तयं च——सर्वोऽप्यतिशूरः सेवकवर्गो मयि तथानुरक्तो यथाज्ञया जीवितमपि तृणाय मन्यते। राज्यद्वितयसैन्यसामग्र्या च नाहमश्मकेशाद्वसन्तभानोर्न्यूनो नीत्याविष्टश्च। अतो वसन्तभानुं पराजित्य विदर्भाधिपतेरनन्तवर्मणस्तनयं भास्करवर्माणं पित्र्ये पदे स्थापयितुमलमस्मि। अयं च राजसूनुर्भवान्या पुत्रत्वेन परिकल्पितः। अहं चास्य साहाय्ये नियुक्त इति सर्वत्र किंवदन्ती संजातास्ति। अद्यापि चैतन्मत्कपटकृत्यं न केनापि विदितम्,। अत्रस्थाश्चास्मिन्भास्करवर्माणि राजतनये 'अयमस्मत्स्वामिनोऽनन्तवर्मणः पुत्रो भवान्याः प्रसादादेतद्राज्यमवाप्स्यति' इति बद्धाशा वर्तन्ते। अश्मकेशसैन्यं च राजसूनोर्भवानीसाहाय्यं विदित्वा 'दव्याः शक्तेः पुरो न बलवती मानवी शक्तिः' इत्यस्माभिर्विग्रहे चलचित्तमिवोपलक्ष्यते। अत्रत्याश्च मौलाः प्रकृतयः प्रथममेव राजसुताभ्युदयाभिलाषिण्य इदानीं च पुनर्मया दानमानाद्यावर्जनेन विश्वासिता विशेषेण राजपुत्रमेवाभिकांक्षन्ति। अश्मकेन्द्रान्तरङ्गाश्च भृत्या मदीयैर्विश्वास्यतमैः पुरुषैः प्रभूतां प्रीतिमुत्पाद्य मदाज्ञया रहसीत्युपजप्ताः——'यूयमस्मन्मित्राणि, अतोऽस्माकं शुभोदर्कं वचो वाच्यमेव। अत्र भवान्या राजसूनोः साहाय्यकाय विश्रुतं विश्रुतं मां नियुज्य तद्धस्तेनाश्मकेन्द्रस्य वसन्तभानोस्तत्पक्षे स्थित्वा ये चानेन सह योत्स्यन्ति तेषामप्यन्तकातिथिभवनं विहितम्। यावदश्म-

---

**व्यचिन्तयमिति**। अतिशूरो नितरां युद्धकुशलः। सेवकवर्गः किंकरसमुदायः। मयि विश्रुते। आज्ञया मन्नियोगेन। जीवितं प्राणानपि। तृणाय मन्यते तृणवन्न गणयतीत्यर्थः। 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति चतुर्थी। राज्ययोर्मित्रवर्मानन्तवर्मराष्ट्रयोर्द्वितयस्य युगलस्य सैन्यसामग्र्या युद्धोपकरणेन। अहं विश्रुतः। न्यूनो हीनबलः। पराजित्य राज्यभ्रष्टं विधाय। तनयं पुत्रम्। पित्र्ये पितुरागते। स्थापयितुमभिषेक्तुम्। अलमस्मि शक्तोऽस्मि। भवान्या देव्या विन्ध्यवासिन्या। साहाय्ये सहायभावे। नियुक्तः आज्ञप्तः। किंवदन्ती लोकप्रवादः। 'किंवदन्ती जनश्रुतिः' इत्यमरः। संजाता प्रसृता। अद्यापीदानीमपि। कपटकृत्यं कूटकर्म देवीमन्दिराबिले गूढरूपतया स्वयं स्थितिरूपम्। विदितमवगतम्। अत्रस्था विदर्भनिवासिनः। भवान्या ईश्वर्याः प्रसादादनुग्रहात्। एतद्राज्यं विदर्भनगरम्। अवाप्स्यति अधिगमिष्यति। बद्धाशाः सतृष्णाः। पुरः समक्षम्। मानवी पुरुषसम्बन्धिनी। विग्रहे रणे। चलचित्तं निराशम्। राजसुतस्य भास्करवर्मणोऽभ्युदयाभिलाषिण्य औन्नत्यकांक्षिण्यः। आवर्जनेन वशीकरणेन। भृत्या भृतिजीविनः। प्रभूतां बहुलाम्। उपजप्ता भेदिताः। अस्माकं मित्राणि सुहृदः। शुभ उदर्क आगामिफलं यस्यैवंविधम्। 'उदर्कः फलमुत्तरम्' इत्यमरः। वचो वाक्यम्। विश्रुतं लोकप्रसिद्धम्। नियुज्याज्ञप्य। तस्य विश्रुतस्य हस्तेन। तत्पक्षे वसन्तभानुपक्षे। अनेन राजसूनुना सह। योत्स्यन्ति विग्रहं करिष्यन्ति। अन्तकस्य यमस्यातिथि-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

केन्द्रेण स जन्यवृत्तिर्न जातस्तावदेनमनन्तवर्मतनयं भास्करवर्माणमनुसरिष्यथ । स वीतभयो भूयसीं प्रवृत्तिमासाद्य सपरिजनः सुखेन निवत्स्यति न चेद्भवानी-त्रिशूलवश्यो भविष्यति । भवान्या च ममेत्याज्ञप्तमस्ति यदेकवारं सर्वेषां कथय । अतो मया युष्माभिः सह मैत्रीमवबुध्य सर्वेभ्यो गदितम्' इत्याकर्ण्य तेऽश्मकेन्द्रा-न्तरङ्गभृत्या राजसूनोर्भवानीवरं विदित्वा पूर्वमेव भिन्नमनस आसन् । विशेष-तश्च मदीयमिति वचनं श्रुत्वा ते सर्वेऽपि मद्वशे समभवन् । एवं सर्वमपि वृत्ता-न्तमवबुध्याश्मकेशेन व्यचिन्ति—'यद्राजसूनोर्मौलाः प्रजास्ताः सर्वा अप्येनमेव प्रभुमभिलषन्ति । मदीयश्च बाह्य आभ्यन्तरो भृत्यवर्गो भिन्नमना इव लक्ष्यते । एवं यद्यहं क्षमामवलम्ब्य गृह एव स्थास्यामि तत उत्पन्नोपजापं स्वराज्यमपि परित्रातुं न शक्ष्यामि । अतो यावता भिन्नचित्तेन मदवबोधकं प्रकटयता मद्बलेन सह मिथोवचनं न संजातं तावत्तैव तेन साकं विग्रहं रचयामि इत्येवं विहिते सोऽवश्यं मदग्रे न क्षणमवस्थास्यते ' इति निश्चित्यान्यायेन पराराज्यक्रमणपाप-प्रेरितः ससैन्यो मृत्युमुखमिवास्मत्सैन्यमभ्ययात् । तमभ्यायान्तं विदित्वा राजपुत्रः पुरोऽभवत् । अतोऽश्मकेन्द्रमेव तुरगाधिरूढो यान्तमभ्यसरम् । तावत् सर्वा एव तत्सेना ' यदयमेतावतोऽपरिमितस्यास्मत्सैन्यस्योपर्येक एवाभ्याग-

---

भवनं मरणमिति भावः । विहितं देव्या कृतमित्यर्थः । जन्यवृत्तिर्युद्धवृत्तान्तः । 'युद्धमायोधनं जन्यम् ' इत्यमरः । तावद्युद्धात्पूर्वमेव । अनुसरिष्यथ अनुयात । स य एवं भास्करवर्माणम-नुसरति सः । वीतभयो निर्भयः । भूयसीं बहुलाम् । प्रवृत्तिं जीविकाम् । आसाद्य प्राप्य । भवा-न्यास्त्रिशूलस्य वश्यो वशगो वध्य इति यावत् । एकवारं सकृत् । कथय निवेदय । मैत्री सुहृद्भा-वम् । गदितं प्रकाशितम् । आकर्ण्य श्रुत्वा । भवान्या वरमनुग्रहम् । भिन्नमनसो वसन्तभानाव-नासक्तचित्ताः । **एवमिति** । राजसूनोर्देवीवरदानादिरूपम् । व्यचिन्ति चिन्ता कृता । एनमेव भास्करवर्माणमेव । प्रभुं राजानमभिलषन्तीहन्ते । क्षमां शान्तिमवलम्ब्य स्वीकृत्य । उत्पन्नोपजापं कृतभेदम् । स्वराज्यमश्मकदेशमपि । परित्रातुं रक्षितुम् । अतो हेतोर्यावता कालेनेति शेषः । ममावबोधकं शक्तीयत्तादिसूचकं वाक्यम् । मम बलेन सैन्येन । मिथः पर-स्परं वचनं भाषणम् । तेन साकं भास्करवर्मणा सह । विग्रहं युद्धम् । 'अस्त्रियां समरानीकरणाः कलहविग्रहौ ' इत्यमरः । रचयामि स्वयमुत्पादयामि । विहिते कृते सति । स राजसूनुरवश्यं नियमेन । क्षणं कञ्चित्कालमपि नावस्थास्यते युद्धे मत्पुरतः स्थातुं नैव शक्नोतीत्यर्थः । ' समव-प्रविभ्यः स्थः ' इत्यात्मनेपदम् । अन्यायेन दुर्नीत्या । परस्यानन्तवर्मणः राज्यक्रमणेन राज्या-भियोगेन जनितं यत्पापं तेन प्रेरितो नियोजितः । मृत्युमुखमन्तकाननमिव । अभ्यायान्तं युद्धार्थमभिमुखमागच्छन्तं तं वसन्तभानुम् । पुरः संमुखे । तुरगाधिरूढोऽश्वारूढः । तत्सेना

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

च्छाति तत्र भवानीवर एवासाधारणं कारणं नान्यत् ' इति निश्चित्यालेख्यालिखिता इवावस्थिताः । ततो मयाभिगम्य संगराय समाहूतो वसन्तभानुः समेत्य मामासिप्रहारेण दृढमभ्यहन् । अहं च शिक्षाविशेषविफलिततदसिप्रहारः प्रतिप्रहारेण तं प्रहृत्यावकृत्तमश्मकेन्द्रशिरोऽवनौ विनिपात्य तत्सैनिकानवदम्—'अतः परमपि ये युयुत्सवो भवन्ति ते समेत्य मया युध्यन्ताम् । न चेद्राजतनयचरणप्रणामं विधाय तदीयाः सन्तः स्वस्ववृत्त्युपभोगपूर्वकं निजान्निजानधिकारान्निःशङ्कं परिपालयन्तः सुखेनावतिष्ठन्तु ' इति । मद्वचनश्रवणानन्तरं सर्वेऽप्यश्मकेन्द्रसेवकाः स्वस्ववाहनात्सहसावतीर्य राजसूनुमानम्य तद्वशवर्तिनः समभवन् । ततोऽहं तदश्मकेन्द्रराज्यं राजसूनुसाद्विधाय तद्रक्षणार्थं मौलान्स्वानधिकारिणो नियुज्यात्मीभूतेनाश्मकेन्द्रसैन्येन च साकं विदर्भानभ्येत्य राजधान्यां तं राजतनयं भास्करवर्माणमभिषिच्य पित्र्ये पदे न्यवेशयम् ।

एकदा च मात्रा वसुन्धरया सहावस्थितं तं राजानं व्यजिज्ञपम्—'मयैकस्य कार्यस्यारम्भश्चिकीर्षितोऽस्ति । स यावन्न सिद्ध्यति तावन्मया न कुत्राप्येकत्रावस्थातुं शक्यम् । अत इयं मद्भार्या त्वद्भगिनी मञ्जुवादिनी कियन्त्यहानि युष्मदन्तिकमेव तिष्ठतु । अहं च यावदिष्टजनोपलम्भं कियन्तमप्यनेहसं भुवं विभ्रम्य तमासाद्य पुनरत्र समेष्यामि' इत्याकर्ण्य मात्रानुमतेन राज्ञाहमगादि—'यदेतदस्माकमेतद्राज्योपलम्भलक्षणस्यैतावतोभ्युदयस्यासाधारणो हेतुर्भवानेव ।

---

वसन्तभानुचमूः । एतावत इयत्परिमितस्य । भवानीवरः देव्यनुग्रहः । आलेख्यलिखिताश्चित्रिताः । संगराय युद्धाय । दृढं बलवत् । अभ्यहंस्ताडयामास । शिक्षाविशेषेणाभ्यासपाटवेन विफलितो व्यर्थीकृतः तस्य वसन्तभानोरसिप्रहारो येनैवंविधः । अवकृत्तं छिन्नम् । अवनौ भूतले । युयुत्सवो रणकामुकाः । तदीयास्तद्वचस्कराः । स्वस्ववृत्तेर्निजनिजजीविकाया उपभोगपूर्वकमनुभवपुरःसरम् । सहसाऽऽशु । आनम्य नमस्कृत्य । राजसूनोर्भास्करवर्मणोऽधीनं राजसूनुसात् । तस्याश्मकराज्यस्य रक्षणार्थं परिपालनार्थम् । स्वानात्मीयान् । अभ्येत्य पुनरागत्य । अभिषिच्य राज्याभिषेकं कृत्वा । न्यवेशयं प्रतिष्ठापयामास ।

**एकदेति** । भास्करवर्मणः पित्र्ये पदे स्थापनानन्तरम् । अवस्थितं वर्तमानम् । राजानं भास्करवर्माणम् । मया विश्रुतेन । एकस्य कार्यस्य सुहृदन्वेषणरूपस्येत्यर्थः । चिकीर्षितः कर्तुं प्रतिज्ञातः । अवस्थातुं निवसितुम् । कियन्त्यहानि कानिचिद्दिनानि । युष्माकमन्तिकं समीपे । यावदिष्टजनोपलम्भं सुहृदो राजवाहनस्य दर्शनावधि । अनेहसं कालम् । ' कालो दिष्टोऽप्यनेहाऽपि समयः ' इत्यमरः । तं सुहृदं राजवाहनमासाद्य प्राप्य । समेष्यामि प्रत्यागमिष्यामि । अगाद्यभिहितः । एतद्राज्यस्य विदर्भनगरस्योपलम्भः पुनराप्तिः तल्लक्षणस्य तद्रूपस्य । अभ्युद-

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

भवन्तं विना क्षणमप्यस्माभिरियं राज्यधूर्न निर्वाह्या। अतः किमेवं वक्ति भवान्' इत्याकर्ण्य मया प्रत्यवादि—'युष्माभिरयं चिन्तालवोऽपि न चित्ते चिन्तनीयः। युष्मद्गृहे यः सचिवरत्नमार्यकेतुरस्ति स ईदृग्विधानामनेकेषां राज्यानां धुरमुद्वोढुं शक्तः। ततस्तं तत्र नियुज्याहं गमिष्यामि' इत्यादिवचनसंदोहैः प्रलोभितोऽपि सजननीको नृपोऽनेकैराग्रहैर्मां कियन्तमपि कालं प्रयाणोपक्रमात् न्यवर्तयत्। उत्कलाधिपतेः प्रचण्डवर्मणो राज्यं मह्यं प्रादात्। अहं च तद्राज्यमात्मसात्कृत्वा राजानमामन्त्र्य यावत्त्वदन्वेषणाय प्रयाणोपक्रमं करोमि तावदेवाङ्गनाथेन सिंहवर्मणा स्वसाहाय्यायाकारितोऽत्र समागतः पूर्वपुण्यपरिपाकात्स्वामिना समगंसि' इति॥

इति श्रीदाण्डिनः कृतौ दशकुमारचरिते विश्रुतचरितं नामाष्टम उच्छ्वासः॥ ८॥

---

यस्य श्रेयसः। असाधारणो हेतुः मूलकारणम्। राज्यधू राज्यभारः। न निर्वाह्या वोढुं न शक्या। वक्ति कथयति। चिन्तालवो विचारलेशोऽपि। सचिवरत्नममात्यश्रेष्ठः। धुरं भारमुद्वोढुं धारयितुम्। तमार्यकेतुम्। तत्र राज्यनिर्वहणे। वचनसंदोहैः वाक्यकलापैः। 'समूहनिवहव्यूहसन्दोहविसरव्रजाः' इत्यमरः। प्रलोभितः समाहितः। आग्रहैर्निर्बन्धैः। कियन्तमपि कालं किंचित्कालपर्यन्तम्। 'कालाध्वनोः—' इति द्वितीया। प्रयाणस्य भवदन्वेषणार्थं प्रस्थानस्योपक्रमादारम्भात्। न्यवर्तयन्निवारितवान्। तद्राज्यमुत्कलराज्यम्। आमन्त्र्य पृष्ट्वा। त्वदन्वेषणाय तव राजवाहनस्यान्वेषणाय मार्गणार्थम्। अङ्गनाथेनाङ्गदेशाधिपेन। स्वस्य चण्डवर्मणा निरुद्धस्य साहाय्यकाय सहायतां कर्तुमाकारित आहूतः। अत्राङ्गदेशे। पूर्वपुण्यानां जन्मान्तरीयसुकृतानां परिपाकात्फलदानोन्मुखतया। स्वामिना भवता राजवाहनेन। समगंसि संगतोऽभूवम्।

इति श्रीदशकुमारचरितव्याख्यायां मनोरमाख्यायामष्टमोच्छ्वासः समाप्तः॥ ८॥

---

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

# अथ कथोपसंहारः ।

ततस्ते तत्र संगता अपहारवर्मोपहारवर्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुताः कुमाराः पाटलिपुरे यौवराज्यमुपभुञ्जानं समाकारणे पूर्वकृतसंकेतं वामलोचनया भार्यया सह कुमारं सोमदत्तं सेवकैरानाय्य सराजवाहनाः संभूयावस्थिता मिथः सप्रमोदसंवलिताः कथा यावद्विदधति तावत्पुष्पपुराद्राज्ञो राजहंसस्याज्ञापत्रमादाय समागता राजपुरुषाः प्रणम्य राजवाहनं व्यजिज्ञपन्—'स्वामिन्, एतज्जनकस्य राजहंसस्याज्ञापत्रं गृह्यताम्' इत्याकर्ण्य समुत्थाय भूयोभूयः सादरं प्रणम्य सदसि तदाज्ञापत्रमग्रहीत् । शिरसि चाधाय तत उत्तार्योत्कील्य राजा राजवाहनः सर्वेषां शृण्वतामेवावाचयत्—'स्वस्ति श्रीः पुष्पपुरराजधान्याः श्रीराजहंसभूपतिश्चम्पानगरीमधिवसतो राजवाहनप्रमुखान् कुमारानाशास्याज्ञापत्रं प्रेषयति । यथा यूयमितो मामामन्त्र्य प्रणम्य प्रस्थिताः पथि कस्मिंश्चिद्वनोद्देश उपशिवालयं स्कन्धावारमवस्थाप्य स्थिताः । तत्र राजवाहनं शिव[1]पूजार्थं निशि शिवालये स्थितं प्रातरनुपलभ्यावशिष्टाः सर्वेऽपि

---

## अथ कथोपसंहारः ।

**तत इति** । उत्तरपीठिकायाः प्रथमोच्छ्वासोक्तरीत्या राजवाहनस्य स्वपितृशत्रुमालवाधीशमानसारकन्ययाऽवन्तिसुन्दर्या सह संगमानन्तरं स्वभगिनीदूषणेन कुपितस्य सप्तसागरमेखलाधरणीप्राप्त्यर्थं तपस्यतो दर्पसारस्याज्ञया तत्पैतृष्वस्रीयेन चण्डवर्मणा सिंहवर्मकन्याभिलाषिणा निगडितस्य चित्रवधार्थमात्मनैव साकमानीतस्याङ्गदेशं हननदिवसे मासद्वयावधिकस्य जन्मान्तरीयस्य शापस्य विमोचनात् चण्डवर्मणश्च स्वमित्रेणैवापहारवर्मणा विनाशे जाते तत्रैवाङ्गदेशे सर्वेषामपि मित्राणां समागमनेन हृष्टस्य तत्तन्मित्रवृत्तान्तश्रवणानन्तरम् । तत्राङ्गदेशे । संगताः संमिलिताः । उपभुञ्जानमनुभवन्तम् । समाकारणे आह्वाने । संभूयैकत्रीभूय । संप्रमोदसंवलिताः आनन्दरसभरिताः । आज्ञापत्रं निदेशलेखनम् । व्यजिज्ञपन्विज्ञापयामासुः । समुत्थाय पितरि गौरवात् अभ्युत्थानं कृत्वा । सदसि अपहारवर्मादिमित्रगणगोष्ठ्याम् । आधाय धृत्वा । उत्कील्य उद्घाट्य । शृण्वतामाकर्णयताम् । अवाचयत्पपाठ । स्वस्ति कल्याणमस्त्विति शेषः। श्रीः लक्ष्मीः । तस्याः कटाक्षावलोकनं सदा युष्मासु भवत्विति यावत् । चम्पानगरीमङ्गदेशराजधानीम् । 'अधिशीङ्स्थासां कर्म' इति कर्मता । आशास्याशीर्वादं कृत्वेत्यर्थः । इतोऽस्माकं राजधान्याः पुष्पपुर्याः सकाशात् । पथि मार्गे । उपशिवालयं महादेवमन्दिरसमीपे । 'अव्ययं विभक्ति-'

---

१ पूर्वपीठिकायां द्वितीयोच्छ्वासे राजवाहनस्य मातङ्गाभिधब्राह्मणस्य साहाय्यार्थं पातालगतत्वेन वर्णनादत्र च शिवपूजार्थं शिवालये स्थितिवर्णनं पूर्वापरविरुद्धमिवाभाति । अत एव चास्योपसंहारस्य न दण्डिकृतत्वमिति केषांचिन्मतम् ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

कुमाराः ' सहैव राजवाहनेन राजहंसं प्रणंस्यामो न चेत्प्राणांस्त्यक्ष्यामः' इति प्रतिज्ञाय सैन्यं परावर्त्य राजवाहनमन्वेष्टुं पृथक्प्रस्थिताः । एतं भवद्वृत्तान्तं ततः प्रत्यावृत्तानां सैनिकानां मुखादाकर्ण्यासह्यदुःखोदन्वति मग्नमनसावुभावहं युष्मज्जननी च ' वामदेवाश्रमं गत्वैतद्वृत्तान्तं तद्विदितं विधाय प्राणपरित्यागं कुर्वः ' इति निश्चित्य तदाश्रममुपगतौ तं मुनिं प्रणम्य यावत्स्थितौ तावदेव तेन त्रिकालवेदिना मुनिना विदितमेवास्मन्मनीषितम् । निश्चयमवबुध्य प्रावाचि—'राजन्, प्रथममेवैतत्सर्वं युष्मन्मनीषितं विज्ञानबलादज्ञायि । यदत त्वत्कुमारा राजवाहननिमित्ते कियन्तमनेहसमापदमासाद्य भाग्योदयादसाधारणेन विक्रमेण विहितादिग्विजयाः प्रभूतानि राज्यान्युपलभ्य षोडशाब्दान्ते विजयिनं राजवाहनं पुरस्कृत्य प्रत्येत्य तव वसुमत्याश्च पादानभिवाद्य भवदाज्ञाविधायिनो भविष्यन्ति । अतस्तन्निमित्तं किमपि साहसं न विधेयम्' इति । तदाकर्ण्य तत्प्रत्ययाद्धैर्यमवलम्ब्याद्यप्रभृत्यहं देवी च प्राणमधारयाव । इदानीमासन्नवर्तिन्यवधौ वामदेवाश्रमे गत्वा विज्ञप्तिः कृता—' स्वामिन्, त्वदुक्तावधिः पूर्णप्रायो भवति तत्प्रवृत्तिस्त्वयाद्यापि विज्ञायते' इति । श्रुत्वा मुनिरवदत्—' राजन्, राजवाहनप्रमुखाः सर्वेऽपि कुमारा अनेकान्दुर्जयाञ्शत्रून्विजित्य दिग्विजयं विधाय भूवलयं वशीकृत्य चम्पायामेकत्र स्थिताः । तवाज्ञापत्रमादाय तदानयनाय प्रेष्यन्तां शीघ्रमेव सेवकाः ' इति मुनिवचनमाकर्ण्य भवदाकारणायाज्ञापत्रं प्रेषितमस्ति । अतःपरं चेत्क्षणमपि यूयं विलम्बं विधास्यथ ततो मां वसुमतीं च मातरं कथावशेषावेव श्रोष्यथेति ज्ञात्वा पानीयमपि पथि भूत्वा पेयम्' इति । एवं पितुराज्ञापत्रं मूर्ध्नि विधृत्य गच्छेमेति निश्चयं चक्रुः । अथ वशीकृतराज्यरक्षापर्याप्तानि सैन्यानि समर्थतरान्पुरुषानाप्तान्स्थाने स्थाने नियुज्य कियता सैन्येन मार्गरक्षां

---

इत्यव्ययीभावः । स्कन्धावारं सैन्यनिवहम् । अनुपलभ्य न दृष्ट्वा । परावर्त्य निवर्त्य । पृथक् प्रत्येकतः । दुःखोदन्वति विषादसागरे । ' उदन्वानुदधिः सिन्धुः ' इत्यमरः । युष्माकं जननी वसुमती । तद्विदितं वामदेवमहर्षिणा ज्ञातम् । तं मुनिं वामदेवम् । त्रिकालवेदिना भूतभविष्यद्वर्तमानज्ञानवता । विदितं ज्ञातम् । अस्माकं मनीषितं वाञ्छितम् । निश्चयं प्राणपरित्यागविषये इत्यर्थः । विज्ञानबलाद्योगबलात् । अज्ञाय्यवगतम् । अनेहसं कालम् । आसाद्य प्राप्य । विक्रमेण प्रतापेन । प्रभूतानि बहूनि । उपलभ्य स्वाधीनं विधाय । प्रत्येत्य पुनरागत्य । आज्ञाविधायिनः आज्ञाकारिणः । किमपि साहसं प्राणत्यागरूपं कर्म । तस्य वामदेवस्य प्रत्ययात् यथार्थभाष्ययमिति विश्वासात् । आसन्नवर्तिनि समीपस्थिते अवधौ षोडशाब्दरूपमर्यादायाम् । विज्ञप्तिर्निवेदना । तत्प्रवृत्तिः तेषां कुमाराणां वृत्तान्तः आकारणायाह्वानाय । विलम्बं कालातिवाहनम् । कथावशेषौ मृताविति यावत् । पानीयं जलमपि । प्रस्थानानन्तरमेवेति भावः । मूर्ध्नि मस्तके ।

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

विधाय पूर्ववैरिणं मालवेशं मानसारं पराजित्य तदपि राज्यं वशीकृत्य पुष्पपुरे राज्ञो राजहंसस्य देव्या वसुमत्याश्च पादान्नमस्यामः । एवं निश्चित्य स्वस्वभार्यासंयुताः परिमितेन सैन्येन मालवेशं प्रति प्रस्थिताः । प्राप्य चोज्जयिनीं तदैव सहायभूतैस्तैः कुमारैः परिमितेन राजवाहनेनातिबलवानपि मालवेशो मानसारः क्षणेन पराजिग्ये निहतश्च । ततस्तद्दुहितरमवन्तिसुन्दरीं समादाय चण्डवर्मणा तन्मंत्रिणा पूर्वं कारागृहे रक्षितं पुष्पोद्भवं कुमारं सकुटुम्बं तत उन्मोचितं सह नीत्वा मालवेन्द्रराज्यं वशीकृत्य तद्रक्षणाय कांश्चित्सैन्यसहितान्मंत्रिणो नियुज्यावशिष्टपरिमितसैन्यसहितास्ते कुमाराः पुष्पपुरं समेत्य राजवाहनं पुरस्कृत्य तस्य राजहंसस्य मातुर्वसुमत्याश्च चरणानभिवन्दितवन्तः । तौ च पुत्रसमागमं प्राप्य परमानन्दमधिगतौ । ततो राज्ञो वसुमत्याश्च देव्याः समक्षं वामदेवो राजवाहनप्रमुखानां दशानामपि कुमाराणामभिलाषं विज्ञाय तानाज्ञापयत्—'भवन्तः सर्वेऽप्येकवारं गत्वा स्वानि स्वानि राज्यानि न्यायेन परिपालयन्तु । पुनर्यदेच्छा भवति तदा पित्रोश्चरणाभिवन्दनायागन्तव्यम्' इति । ततस्ते सर्वेऽपि कुमारास्तन्मुनिवचनं शिरस्याधाय तं प्रणम्य पितरौ च, गत्वा दिग्विजयं विधाय प्रत्यागमनान्तं स्वस्ववृत्तं पृथक्पृथङ्मुनिसमक्षं न्यवेदयन् । पितरौ च कुमाराणां निजपराक्रमावबोधकान्यतिदुर्घटानि चरितान्याकर्ण्य परमानन्दमाप्नुताम् । ततो राजा मुनिं सविनयं व्यजिज्ञपत्—'भगवन्, तव प्रसादादस्माभिर्मनुजमनोरथाधिकमवाङ्मनसगोचरं सुखमधिगतम् । अतःपरं मम स्वामिचरणसंनिधौ वानप्रस्थाश्रममधिगत्यात्मसाधनमेव विधातुमुचितम् । अतः पुष्पपुरराज्ये मानसारराज्ये च राजवाहनमभिषिच्यावशिष्टानि राज्यानि नवभ्यः कुमारेभ्यो यथोचितं सम्प्रदाय ते कुमारा राजवाहनाज्ञाविधायिनस्तदेकमत्या वर्तमानाश्चतुरुदधिमेखलां वसुंधरां समुद्धृत्य कण्टकानुपभुञ्जन्ति तथा विधेयं स्वामिना' इति । तेषां तत्पितुर्वानप्रस्थाश्रमग्रहणोपक्रमानिषेधे भूयांसमाग्रहं विलोक्य मुनिस्तानवदत्—'भोः कुमारकाः, अयं युष्मज्जनक एतद्वयःसमुचिते पथि वर्त-

---

**अथेति** । पितुः पत्रदर्शनानन्तरम् । नमस्यामः नमस्कुर्मः । पराजिग्ये पराजितः । 'सँल्लिटोर्जेः' इति कुत्वम् । अभिवन्दितवन्तः प्राणंसिषुः । तौ च वसुमतीराजहंसौ । अभिलाषं मनीषितम् । एकवारं सकृत् । आप्नुतं प्राप्तवन्तौ । वाक्च मनश्च वाङ्मनसे । 'अचतुरविचतुर--' इत्यादिना निपातितः । तयोर्गोचरं न भवतीत्येवंरूपम् । अधिगतमासादितम् । आत्मसाधनं परमात्मचिन्तनम् । यथोचितं येन येन यद्यदासादितं तत्तस्मै इति रीत्या । कण्टकाञ्छत्रून् समुद्धृत्योन्मूल्य । विधेयं संपादनीयम् । तेषां राजवाहनादीनाम् । भूयांसमतिमहान्तम् । एतद्वयसः वार्धक्यस्य

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

मानः कायक्लेशं विनव मदाश्रमस्थो वानप्रस्थाश्रमाश्रयणं सर्वथा भवद्भिर्न निवारणीयः । अत्र स्थितस्त्वयं भगवद्भक्तिमुपलप्स्यते । भवन्तश्च पितृसंनिधौ न सुखमवाप्स्यन्ति' इति । महर्षेराज्ञामधिगम्य ते पितुर्वानप्रस्थाश्रमाधिगमप्रतिषेधाग्रहमत्यजन् । राजवाहनं पुष्पपुरेऽवस्थाप्य तदनुज्ञया सर्वेऽपि परिजनाः स्वानि स्वानि राज्यानि प्रतिपाल्य स्वेच्छया पित्रोः समीपं गतागतमकुर्वन् । एवमवस्थितास्ते राजवाहनप्रमुखाः सर्वेऽपि कुमारा राजवाहनाज्ञया सर्वमपि वसुधावलयं न्यायेन परिपालयन्तः परस्परमैकमत्येन वर्तमानाः पुरंदरप्रभृतिभिरप्यतिदुर्लभानि राज्यसुखान्यन्वभूवन् ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते कथोपसंहारः ।

---

**इति श्रीमहामहोपाध्यायकविकुलसार्वभौमनिखिलविद्याकुमुदिनीशर्वरीश्वरसरस्वतीनिःश्वसितकविदण्डिपण्डितविरचितं दशकुमारचरितं संपूर्णम् ॥**

---

समुचिते योग्ये । कायक्लेशं शरीरायासम् । पितृसन्निधौ तत्समक्षम् । तत्र संकोचादिति भावः । वसुधावलयं भूमण्डलम् । न्यायेन मन्वादिप्रणीतराजनीत्यनुसारेण । एकाऽविभिन्ना मतिर्येषां ते एकमतयस्तेषां भावेन । पुरन्दरप्रभृतिभिरिन्द्रादिभिरपि । अन्वभूवन्ननुभवन्ति स्म ॥

इति श्रीदण्डिनः कृतेर्दशकुमारचरितस्य श्रीयुतकाशीवास्तव्यकण्वशाखीयपण्डितपौराणिकोपाख्य–पाण्डुरङ्गाचार्यात्मजेन काशीस्थराजकीयप्रधानसंस्कृतपाठशालातो लब्धव्याकरणाचार्य–पोष्टाचार्यपदवीकेन कृष्णशास्त्रिणा विरचिता कथोपसंहारव्याख्या मनोरमाख्या संपूर्णा ॥

---

**शुभमस्तु**


## पुस्तक मिलनेका ठिकाना–

**गङ्गाविष्णु श्रीकृष्णदास,**
"लक्ष्मीवेंकटेश्वर" स्टीम्–प्रेस,
**कल्याण–बंबई.**

**खेमराज श्रीकृष्णदास,**
"श्रीवेंकटेश्वर" स्टीम्–प्रेस,
**खेतवाडी–बंबई.**


CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri

"श्रीवेङ्कटेश्वर" छापाखानेकी परमोपयोगी,

स्वच्छ, शुद्ध और सस्ती पुस्तकें ।

यह विषय आज ४०।५० वर्षसे अधिक हुआ भारतवर्षमें प्रसिद्ध है कि, इस छापाखानेकी छपी हुई पुस्तकें सर्वोत्तम और सुन्दर प्रतीत तथा प्रमाणित हुई हैं । इस यन्त्रालयमें प्रत्येक विषयकी पुस्तकें जैसे-वैदिक, वेदान्त, पुराण, धर्मशास्त्र, न्याय, मीमांसा, छन्द, ज्योतिष, साम्प्रदायिक, काव्य, अलंकार, चम्पू, नाटक, कोष, वैद्यक तथा स्तोत्रादि संस्कृत और हिन्दी भाषाकी प्रत्येक अवसरपर विक्रीके अर्थ तैयार रहती हैं । शुद्धता, स्वच्छता तथा कागजकी उत्तमता और जिल्दकी बँधाई देशभरमें विख्यात है। इतनी उत्तमता होनेपर भी दाम बहुत ही सस्ते रक्खे गये हैं और कमीशन भी पृथक् काट दिया जाता है। ऐसी सरलता पाठकोंको मिलना असंभव है । संस्कृत तथा हिन्दीके रसिकोंको अवश्य अपनी २ आवश्यकतानुसार पुस्तकोंके मँगानेमें त्रुटि न करना चाहिये. ऐसा उत्तम सस्ता और शुद्ध माल दूसरी जगह मिलना असम्भव है. ⌐) का टिकट भेजकर 'सूचीपत्र' मँगा देखो ।

पुस्तक मिलनेका ठिकाना—

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" स्टीम्-प्रेस,
कल्याण-बंबई.

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम्-प्रेस,
खेतवाडी-बंबई.

CC-0. Dr. Ramdev Tripathi Collection at Sarai(CSDS). Digitized by eGangotri